**सद्भावः स्फुटप्रभापुञ्जस्य च असद्भावः इत्येवंभूतो यो भेद आभाससद्-भावासद्भावाभ्यामनुप्राणितः तत्कृतः क्रमः कालात्मा, तौ च आभासानां भावाभावौ न बाह्यहेतुकृतौ इति विस्तार्य उपपादितम्, इति य एव संवित्स्वभाव आत्मा स्वप्नसंकल्पादौ आभासवचित्र्य-**

---

भिन्नस्वरूपं भवति, न हि अङ्गुलीचतुष्टयं सन्धिबन्धैक्येऽपि[1] एकस्वभावम् ह्रस्व-दीर्घत्वादिकृतस्य भेदस्य स्फुटत्वात्, अंगुष्ठस्य तु ताभिः सह सन्धिबन्धैक्यं नास्तीति तस्याग्रहणम् । उक्तप्रक्रियावष्टंभेन फलितरीत्या व्याख्यां करोति "तस्मात्" इति । "**भेदः**" इति व्याचष्टे "अरुण" इति । "**आभास-सदसत्त्वतः**" इति व्याचष्टे "आभास" इति । आभासयोः–अरुणाभासस्य स्फुटप्रभापुञ्जाभासस्य च यौ सदसद्भावौ–क्रमेण सद्भावः असद्भावश्च ताभ्याम्, **अनुप्राणितः**—दत्तसत्ताकः, अनुप्राणितपदेन तसिला द्योतितं हेतुत्व-मुक्तम् । "**भेदाश्रयः**" इति व्याचष्टे "तत्कृतः" इति । तत्कृतः-आभाससदसद्भावानुप्राणितभेदकृतः । "**क्रमः**" इति व्याचष्टे "कालात्मा" इति। शृङ्खलाबन्धेन व्याख्याकरणम् "**अपि**" शब्दद्योत्यम् ।

तथा चैवमत्र योजना । क्रमः–क्रमतया साधितः कालः, भेदः–सूर्यादिसञ्चार-रूपस्वभावभेदः, आश्रयः हेतुर्यस्य तादृशो भवति, न तु तद्रूपो भवति, अङ्गुलीचतु-ष्टयस्यापि भिन्नकालत्वापातात्, भेदोऽपि–क्रमहेतुः भेदश्चाभाससदसत्त्वतो भवति, सूर्यसञ्चारविशेषभूतारुणाभाससद्भावस्फुटप्रभापुञ्जासद्भावकृतो भवतीत्यर्थः, अन्यथा सूर्यसञ्चारस्य समानत्वात् तदपेक्षया साधितः कालः सर्वत्रैकदामाश्रये-दिति भावः। एवं तत्तत्पुष्पादिजन्मादिष्वपि ज्ञेयम्, एतदपेक्षयापि कालसाधनात् ।

ननु तर्हि कालस्य भगवच्छक्तित्वं नास्ति, बाह्यवस्तुजन्यत्वादित्यपेक्षायामेत तदुत्तरद्योतकमुत्तरार्धं व्याचष्टे "तौ च" इति । आभासानाम्-अरुणाभासस्फुट-प्रभापुञ्जाभासादीनाम्, एतेन "**आभाससदसत्त्वे**" इत्यस्य व्याख्यानम् । उपपादितम्, पूर्वं ज्ञानाधिकारे इत्यर्थः। "**चित्राभासकृतः**" इति व्याचष्टे "य एव", इति । प्रसिद्धत्वेन स्वप्नादेर्ग्रहणम्, "**स्वसंविदितः**" इति

---

1. सन्धिबन्धैक्येऽपि च एकस्वभावम्—C.

निर्माणे प्रभुः प्रभविष्णुः इति स्वसंविदितस्तत एव तौ भवतः, स हि आत्मनि नीलादीन् आभासान् आभासयन् चित्रतया अपरिमेयया भासयति, तथाहि–लोहिताभासं घटाभासम् उन्नताभासं दृढाभासं च सामानाधिकरण्येन घटाभासं पटाभासं च पृथक्त्वावभासेन अन्योन्यत्र आभासाभावेन, स्वात्मनि तु एकरसेनाभासेन, इयति च न क्रमस्य उदयः, यदा तु शरदाभासं हेमन्ताभासेन च सर्वथैव शून्यमाभासयति हेमन्ताभासं च शारदाभासेन तदा कालात्मा क्रम उत्तिष्ठति, इति सेयम् इत्थंभूता भाववैचित्र्यप्रथनशक्तिः[1] भगवतः 'कालशक्तिः' इत्युच्यते ॥ ४ ॥

चित्राभासकृत्त्वमेव स्फुटयति :—

**मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ ।**
**क्रियावैचित्र्यनिर्भासात्कालक्रममपीश्वरः ॥ ५ ॥**

---

प्रसिद्धः । "**प्रभोः**" इति व्याचष्टे "प्रभविष्णुः" इति । प्रथमान्ततया व्याख्यातस्य प्रभोः इत्यस्यापादानपञ्चम्यन्तततां योजयति "ततः" इति । **तौ**—आभासभावाभावौ, एतेन "जनिकर्तुः प्रकृतिः" इत्यनेनात्रापदानत्वे पञ्चमीति द्योतितम्, सदसत्त्वाख्ययोर्जनिकर्त्रोः प्रभोरेव प्रकृतित्वात् । अथवा "भुवः प्रभवः" इत्यपादानत्वे पञ्चमी । अत्र समर्थनं करोति "**स हि**" इति । **अपरिमेयया**—अपरिच्छिन्नया, अत्रापि समर्थनं कर्तुमारभते "**तथा हि**" इति । **सामानाधिकरण्येन**–एकाधिकरणत्वेन, आभासयति इति पूर्वेण सम्बन्धः । पृथक्त्वावभासेन कीदृशेन ? **अन्योन्यत्र**–अन्योन्यस्मिन्, **आभासाभावेन**–आभासाभावरूपेण, घटे पटाभासाभावात् पटे च घटाभासाभावात्, अत्रापि आभासयति इति पूर्वेण संबन्धः ।**स्वात्मनि**--चिद्रूपे स्वस्मिन्, **तु एकरसेनाभासेन** आभासयति, परमार्थतः सर्वस्य चिन्मयत्वात् ।**इयति च क्रमस्योदयो न** भवति, युगपदेवैकज्ञानेन स्फुरणात् । **सर्वथैव**--निःशेषमेव, भावानां यद्वैचित्र्यं तस्य यत् प्रथनम्--विस्तरणम्, तत्र **शक्तिः**, **उच्यते**, पण्डितैः कथ्यते इत्यर्थः । एतेन भगवच्छक्तेरेव कालशक्तित्वं साधितम् ॥ ४ ॥

अथ पञ्चमस्य श्लोकस्यावतरणिकां करोति "**चित्रा**" इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । "**मूर्ति**" इति ।

---

1. इत्थंभूताभासवैचित्र्यप्रथनशक्तिः—K.S.S.

पदार्थस्य स्वं रूपं मूर्तिः, तस्या यत् वैचित्र्यं विभेदः, तद्यथा गृहमिति अन्यत् स्वरूपम्, प्राङ्गणमिति अन्यत्, विपणिरिति अन्यत्, देवकुलमिति अपरम्, उद्यानमिति अन्यत्, अरण्यमिति तदन्यतरत्[1], तस्मात् वैचित्र्यात् आभास्यमानात् देशरूपो दूरादूरविततत्वाविततत्वादिः क्रमो भगवता अवभास्यते। यदा तु गाढप्रत्यभिज्ञाप्रकाशबलात् तदेव इदं हस्तस्वरूपम् इति प्रतिपत्तौ मूर्तेर्न भेदः, अथ च अन्यान्यरूपत्वं भाति तदैकस्मिन् स्वरूपे यदन्यत् अन्यत् रूपं तद्विरोधवशात् असहभवत्क्रिया उच्यते[2], तस्या यत् वैचित्र्यं परिमितापरिमितात्मकं[3] तदेकानुसन्धानेन फलसिद्ध्यादिनिबन्धनवशात् यथारुचि चर्चितेन निर्भासयन् कालरूपं क्रममेवावभासयति[4]। न चैतत् वाच्यम्–एकस्वरूपस्य कथम्

अत्र टीका :—

"मूर्ति" पदं व्याचष्टे "पदार्थस्य" इति। तस्याः–मूर्तेः, "वैचित्र्य" पदं व्याचष्टे "विभेदः" इति। वैचित्र्यं दर्शयितुं प्रतिजानीते 'तद्यथा' इति। विपणिः–प्राङ्गणादपि बहिर्वर्तिनी पण्यवीथिका। तस्मात् उद्यानात् अन्यतरत्, तदन्यतरत्, आभास्यमानात्–आभासविषयीभूतात्, भगवता–भासने शक्तियुक्तेन परप्रमात्रा, अवभास्यते-अवभासविषयीक्रियते, अन्यथा गृहस्थोऽयम् इत्यादिव्यवहारायोगात् इति भावः। पूर्वार्धं व्याख्यायोत्तरार्धमपि व्याख्यातुमाह "यदा तु" इति। प्रत्यभिज्ञाप्रकाशबलात्–प्रत्यभिज्ञाख्यज्ञानवशात्, मूर्तेः हस्तादिस्वरूपस्य, न केवलं भेदः अपि तु भेदोऽपि इत्याह "अथ च" इति। अन्यान्यरूपत्वम्–उत्क्षेपणावक्षेपणादिविशिष्टतया भिन्नभिन्नरूपत्वम्, भाति प्रमातारं प्रति स्फुरति। तदैकस्मिन्–अभिन्ने, स्वरूपे–हस्ताख्यायां मूर्तौ, तत्–अन्यदन्यद्रूपम्, क्रिया उच्यते-क्रिया कथ्यते। तत्र सः प्रमातृरूपो भगवान्, तस्याः– क्रियायाः, यत् परिमितापरिमितात्मकम्–परिमितरूपमपरिमितरूपं च, वैचित्र्यं भवति, तत्र सूर्यसञ्चारादेरपरिमितत्वं देवदत्तगमनादेः परिमितत्वम्, तत् निर्भासयन्–प्रकटयन्। "कालक्रमम्" इति व्याचष्टे "काल"

I. तदितरत्—K.S.S.
2. क्रिया इति उच्यते—K.S.S.
3 परिमितापरिमितरूपतात्मकम्—K.S.S.
4. क्रममेव भासयति—K.S.S.

अन्यत् अन्यद्रूपमिति ? यतो न असौ कश्चित् भावो य एवं कल्प्यते[1]; संविदेव हि तथा भाति, तथा भानमेव च तस्या[2] ऐश्वर्यम्, न हि भासने विरोधः कश्चित् प्रभवति, स हि सुखदुःखादेर्भासनकृत एव, तथा-

इति। अवभासयति–भासयति, पूर्वार्धस्थक्रियया एवोत्तरार्धेऽपि सम्बन्धयोजना कृता। केन कृत्वा निर्भासयन्? फलसिद्ध्यादेः–ग्रामप्राप्त्यादेः फलस्य निष्पत्त्यादेः, यन्निबन्धनम्–परिच्छिन्नीकरणम्, तस्य वशात्–सामर्थ्यात्, यथारुचि–रुच्यनुसारेण, चर्चितेन—कल्पितेन, तदेकानुसन्धानेन, वैचित्र्यमध्ये सूर्यसञ्चारादिरूपस्य एकस्य अनुसन्धानेन–योजनेन कृत्वा येनैवं प्रयोगः "दिवसं ग्रामं गच्छति" इति भावः। अन्यथा तु गमनमपि पृथक्क्रिया, दिवसोऽपि पृथक् सूर्यक्रियेति का तस्य तेन तुलनेति भावान्तरम्। 'तत्' शब्दस्य काकाक्षिन्यायेन द्विर्योजना। अत्र शिष्यप्रश्नमाशंक्य परिहरति 'न च' इति। किमित्यपेक्षायामाह "एक" इति। इति शब्दः शिष्यशङ्कासमाप्तौ। कुतो न वाच्यमित्यत आह "यतः" इति। भावः— नीलसुखादिरूपः पदार्थः। एवं कल्प्यते–एवंरूपकल्पनाविषयतां नीयते। पुनः कथं भावभानं भवति इत्यत आह "संविदेव" इति। तथा भाति—अन्यान्यरूपतया भाति। कुतो भातीत्यत आह "तथा" इति। हि—यस्मात् कारणात्। तथा भानमेव तस्याः—संविदः, ऐश्वर्यं भवति। तदुक्तम्:—

"अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः।
महेश्वरत्वं संवित्त्वं[3] तदत्यक्ष्यद् घटादिवत्॥"

इति। ननु संविदो विरुद्धतया भानं कथं युक्तम् इत्यत आह 'न हि' इति। प्रभवति—समर्थो भवति। आभासने एव तद्योगादिति भावः। कुतो न प्रभवति इत्यत आह "स हि" इति। हि-यस्मात्, सुखदुःखादेः सः विरोधः भासनकृत एव भवति, तथा च भासनलब्धसत्ताकस्य तस्य भासनं प्रति बाधकत्वं न युक्तमिति भावः। ननु कुतो भासनकृत एवेत्यत आह "तथा" इति।

1. विकल्प्यते—K.S.S.
2. तथाभासनमेव चास्याः—K.S.S.
3. सर्वत्वं—C.

भासनाभाव[1] एव हि विरोधतत्त्वम्, एतत् अपिशब्देन ईश्वरशब्देन-च दर्शितम् ॥ ५ ॥

ननु एवम् आभासविषयाभ्यामेव देशकालक्रमाभ्यां भवितव्यम्, अनाभासश्च प्रमाता, स हि न कस्यचित् आभासते, तस्य सर्वम् आभाति यतः, ततश्च तौ प्रमातरि कथम्, दृश्येते च 'अभवम् अहं भवामि भवितास्मि' इति, 'गृहे तिष्ठामि अरण्ये देवगृहे' इति च, किं च स्वयं देशकालक्रमशून्यस्य किं दूरं किम् अन्तिकं किं वर्तमानं किम् अतीतं किं भावि, इति प्रमात्राश्रयो भावेष्वपि क्रमो न युक्तः, न च प्रमातृनिरपेक्षेष्वपि तेषु स्वात्मनि दूरत्वादि भूतत्वादि वा, तदेतत् समर्थयितुम् आह :—

---

हि—यस्मात्, तथाभासनस्य—नीलादौ पीततादाभासनस्य, अभावः, एव विरोधतत्त्वम्—विरोधस्वरूपं भवति। यत् यत्र भाति न तत् तत्र विरुद्धम्, यत्तु न भाति तद्विरुद्धमिति भासनाभावदत्तविषयो विरोधो भासनेऽकिञ्चित्कर एव इति भावः। ननु सूत्रेऽनुक्तमेतत् कुतो व्याख्यातमित्यत आह "एतत्" इति। 'एतत्' एकस्वरूपस्य इत्यादिग्रन्थोक्तं प्रक्रियाजालम्, तत्र "ईश्वर" पदेनैश्वर्यसूचनम्। "अपि"-शब्देन उक्तानुक्तसमुच्चयद्वारेण सर्वभावेन भासनसूचनमिति विभागो ज्ञेयः ॥ ५ ॥

अथ षष्ठसप्तमयोः श्लोकयोरवतरणिकां करोति "ननु एवम्" इति।

अत्र टीका :—

एवम्, पूर्वश्लोकोक्ते वस्तुनि सतीत्यर्थः। अनाभासश्च—आभासरहितश्च, कुतोऽनाभास इत्यत आह "स हि" इति। तौ—देशकालौ, दर्शनमेवानुकृत्याह—"अभवम्" इति। कालत्रयमनुकृत्य दर्शयित्वा देशक्रममपि दर्शयति "गृहे" इति। प्रमातारं प्रति भावानामपि देशकालक्रमयुक्तत्वं न घटते इत्याह "किञ्च" इति। भावानां स्वभावतोऽपि देशकालक्रमयुक्तत्वं नाशयति "न च" इति। प्रमातैव हि भावानां देशकालविशिष्टतां कल्पयति इति भावः। तदेतत्—समनन्त-

---

1. तथा भासनाभाव—K.S.S.

सर्वत्राभासभेदोऽपि भवेत्कालक्रमाकरः ।
विच्छिन्नभासः शून्यादेर्मातुर्भातस्य नो सकृत् ॥ ६ ॥
देशक्रमोऽपि भावेषु भाति मातुर्मितात्मनः ।
स्वात्मेव स्वात्मना पूर्णा भावा भान्त्यमितस्य तु ॥ ७ ॥

सर्वेषु वस्तुषु एकानेकरूपेषु यः कालात्मा क्रमः तस्य य आकरः—उत्पत्तिनिबन्धनम् इति व्याख्यातः, आभासस्य भावाभावकृतो भेदः स शून्यप्राणबुद्धिदेहादेः भवति, इति संभाव्यते, यतः स शून्यादिः विच्छिन्नभाः, न हि तस्य भासनं स्वरूपं नीलादिवत् जडत्वात्, अपि तु संवित्स्फुरणमस्य भासनम्, तत् यदा अस्य नास्ति, यथा सुप्ते देहस्य

---

रोक्तं वस्तु । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । "सर्वत्र" इति ।

अत्र टीका:—

"सर्वत्र" इति पदं व्याचष्टे, "सर्वेषु" इति । तत्र प्रत्यभिज्ञाबलेनैकरूपत्वं देशादिविशिष्टतयानेकत्वम् । "कालक्रमाकरः" इति पदं विग्रहपूर्वकं व्याचष्टे, "काल" इति । "आकरः" इति पदं व्याचष्टे, "उत्पत्ति" इति । "उत्पत्तिनिबन्धनम्" इति–उत्पत्तिस्थानमिति, व्याख्यातः–व्याख्याविषयतां नीतः, उत्पत्तिनिबन्धनमिति व्याख्यातः । "आभासभेदः" इति व्याचष्टे, "आभासस्य" इति । भावाभावकृतः—अरुणसद्भावस्फुटतेजः-पुञ्जासद्भावादिकृतः, एतेन मध्यमपदलोप्ययं समास इति द्योतितम् । विगृहीतं पदं पुनः समस्ततया परामृशति "स" इति । लिङोऽर्थमाह "संभाव्यते" इति । संभावनायामत्र लिङ् । "विच्छिन्नभासः" इति विशेषणं हेतुगर्भत्वेन व्याचष्टे । "यतः" इति, यतःशब्दो हेतुत्वद्योतनार्थः । शून्यादिः—शून्यादिरूपः प्रमाता, विच्छिन्ना भाः—ग्रहीतृस्वरूपः प्रकाशः यस्य, तादृशविच्छिन्नत्वं च समनन्तरमेव वक्ष्यति । कुत इत्यपेक्षायामाह "न हि" इति । तस्य—शून्यादेः । अत्रापि हेतुमाह "जडत्वात्" इति । तर्हि कथमस्य शून्यादेर्भासनम् अस्ति इत्यत आह "संवित्" इति । संविदः—आन्तरस्य संवित्तत्त्वस्य, स्फुरणम्–स्वातन्त्र्येणोद्भावितविषयावेशनिमित्तिका स्फूर्त्तिः । अस्य—शून्यादेः, भासनम्–

संसारयात्रा[1]पतितत्वे शून्यस्य प्राणादेः, तदा अस्य भासनं विच्छिद्यते, इति आभाससद्भावासद्भावकृतः कालक्रमोऽस्ति, 'अतीतोऽहं बालदेहाभासरूपः, भवामि युवदेहाभासरूपः' इति । स च यतः प्रमाता अहंभावसमावेशनात् अपरिपूर्णात् अतएव उद्रिक्तकालक्रमवत्त्वात्[2] भावेष्वपि कालक्रमम् आभासयति, 'योऽहं बालोऽभवं तत्सहभावी

---

स्वतो बाह्यं प्रति ग्रहीतृतया स्फुरणं भवति । तत्–प्रोक्तरूपं भासनम्, अस्य—शून्यादेः । ननु कदास्य तन्नास्ति इत्यपेक्षायां तदसंभवस्थानानि दर्शयितुमाह "यथा" इति । सुप्ते–सुषुप्ते, देहस्य—देहमातुः, तत्र हि देहः प्रमेयतयापि न स्फुरति का कथा प्रमातृतया स्फुरणस्य, संसारयात्रापतितत्वे–क्रयविक्रया[3]दिरूपसंसारयात्रान्तर्गतत्वे, आदिशब्देन बुद्धिप्रमातृग्रहणम् । अस्य–शून्यादेः । फलितमाह "इति आभास" इति । इति—अतः कारणात् । कालक्रमः–कालाख्यः क्रमः, आभाससद्भावासद्भावकृतोऽस्ति । कालक्रममेव अनुकृत्य दर्शयति "अतीतः" इति । अत्र च बालाभासस्यासद्भावः युवाभासस्य तु सद्भावः, वृद्धो भविष्यामीत्यस्याप्युपलक्षणमिदम् । "इति" शब्दः फलितकथनसमाप्तौ । एवं परिमितप्रमातुः सकालक्रमत्वमुपपाद्य सूत्रेऽनुक्तमप्यवतरणिकायां शंकितं भावेषु सकालक्रमत्वमुपपादयति "स च" इति । अहंभावे–देहादिविषये परिमिताहंभावे, समावेशनं तस्मात् । अपरिपूर्णात्–परिपूर्णतारहितात्, न तु पराहंविमर्शवत् परिपूर्णस्वरूपात् । अतः–अस्मादहंभावसमावेशनात्, उद्रिक्तः—सातिशयः कालक्रमो यः सः विद्यते यस्य सः, तस्य भावः तत्त्वं तस्माद्धेतोः, भावेष्वपि कालक्रमम् आभासयति—स्वेन समकक्ष्यतया प्रकाशयति, स्वं यथाऽतीतत्वेन व्यवहरति तथा तत्कालीनं वस्तुजातमपीति भावः । स्वेन समकक्ष्यं भावविषयं कालक्रममेवानुकृत्याह, "योऽहम्" इति । तत्सहभावी—बालत्वसहभावी । एतेन "शून्यादेः" इत्यन्तं व्याख्या-

---

1. संसारयात्रा पतितत्वे—K.S.S. According to Bhāskara, these two words form a compound.

2. उद्रिक्तकालक्रमत्वात्—K.S.S.

3. क्रयविक्रियादिरूपं—C.

घटाभासोऽपि अभवत्' इति, न तु यः "सकृद् विभातः" इति अनया वाचोयुक्त्या अविच्छिन्नभासनः प्रमाता संविद्रूपः, तस्य स्वात्मनि कालक्रमः, नापि तदपेक्षया वेद्ये भावजाते, तद्धि तत्र अभेदेन भाति इति।

एवं देशक्रमोऽपि मितात्मनः परिच्छिन्नस्वरूपस्य शून्यादेः देहान्तस्य स्वात्मनि भाति 'इह तिष्ठामि' इति, स्वापेक्षया च भावेष्वपि 'यत् मम संयोगपारिमित्येन वर्तते तदन्तिकम् इतरत् दूरम्' इति। अमितस्य स्वरूपेयत्ताशून्यस्य[1] तु संवित्तत्त्वस्य भावाः स्वात्मना अहंभावेन यतो भान्ति ततः पूर्णाः—अपरिच्छिन्नस्वरूपेयत्ताकाः, यतः

---

तम्। अथ "मातुः" इत्यादिश्लोकखण्डं व्याचष्टे "न तु" इति। वाचोयुक्त्या-"सकृद्विभातोऽयमात्मा" इत्येवंरूपश्रुतिमूलया इत्यर्थः। अविच्छिन्नभासनः—सकृद्विभातः। प्रमाता-परप्रमाता, स्वात्मनि-चिद्रूपे निजात्मनि, कालक्रमः-कालाख्यः क्रमः, तस्य न तु भवति, इति सम्बन्धः। न हि तेन दत्तसत्ताकः तस्यैव परिच्छिन्नतामानेतुं समर्थ इति भावः। तदपेक्षया-प्रमात्रपेक्षया, भावजाते—नीलसुखादिभावसमूहे, वेद्ये-भावजाते, कुतो नास्तीत्यत आह "तद्धि" इतिं। तत्-वेद्यजातं, तत्र-परप्रमातरि, "इति" शब्दः प्रमेयपरिसमाप्तौ ॥६॥

देशक्रमेऽप्येनं न्यायमतिदिशंस्तदभिधायकं द्वितीयं श्लोकं व्याचष्टे "एवम्" इति। मितात्मनः-परिमितस्वरूपस्य। देशक्रमभानमेवानुकृत्य दर्शयति "इह" इति। स्वापेक्षया-परिमितप्रमातुर्निजापेक्षया। भावेष्वपि भाति इति पूर्वेण संबंधः। एनम् भावसंबन्धिनं देशक्रममप्यनुकृत्य दर्शयति "यत्" इति। संयोगपारिमित्येन-संयुक्तसंयोगाल्पीयस्त्वेन, इतरत्-संयोगापारिमित्येन वर्तमानम्, "इति" शब्दः पूर्वार्धव्याख्यासमाप्तौ। द्वितीयश्लोकस्य पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे "अमित" इति। स्वरूपे या इयत्ता तया शून्यस्य, भावाः-बाह्यपदार्थाः, "स्वात्मना" इति व्याचष्टे अहंभावेन इति। "यतो भान्ति"

---

1. अमितस्य स्वरूपेयत्ता, शून्यस्य—K. S. S. भास्कर takes स्वरूपेयत्ताशून्यस्य as a compound, where as in the K.S.S. edition स्वरूपेयत्ता and शून्यस्य are separated by a comma.

स्वात्मा तस्य तथाभूत एव इति समुच्चयोपमा, तदुक्तम्—

'अपूर्वापरं हि इदं मूर्तितः क्रियातश्च सर्वं सर्वतः पूर्णम्' इति।[1]

क्रियाप्रसङ्गात् इह कालक्रमः प्राकरणिको दृष्टान्तत्वेन तत्प्रसङ्गात् देशक्रमो निरूपितः, दृष्टान्तश्च पूर्वं वाच्य इति वैचित्र्यनिरूपणावसरे देशक्रमस्य आदौ अभिधानं न्याय्यम्, उपसंहारे तु प्राकरणिकस्य कालक्रमस्यैव आदौ निर्देशः, पश्चात्तु प्रासङ्गिकस्य देशक्रमस्य इति ॥ ६-७ ॥

ननु एवं सत्यप्रमातरि[2] भगवति नास्त्येव क्रिया इति आयातं कालक्रमाभावात् क्रमाश्रयेण च तस्या अवस्थानात् इत्याशङ्कयाह :—

---

इति, अन्यथा अमितत्वायोगात् इति भावः। "पूर्णाः" इति व्याचष्टे, "अपरिच्छिन्न" इति। अपरिच्छिन्ना स्वरूपस्य इयत्ता येषां ते तादृशाः, भवन्तीति शेषः। "स्वात्मेव"[3] इति हेतुभावेन व्याचष्टे "यतः" इति। स्वात्मा-निजं स्वरूपम्, तस्य-अमितस्य, तथाभूत एव-अहंभावेन भानात् पूर्ण एव, इति—एवम्, समुच्चयोपमा भवति। अमितस्य भावा अपि पूर्णाः भवन्ति आत्मापि, इति स्फुटं समुच्चयोपमा, यथा—

"श्रोतुर्वितन्त्रीरिव वाद्यमाना" इत्यत्र। अत्र वृद्धसम्मतिमाह "तदुक्तम्"—इति। इदम्—अपरिमितं प्रमातृतत्त्वम्, "इति" शब्दो वृद्धवाक्यसमाप्तौ। अत्र पूर्वापरविरोधित्वं शंकयमानं निरसितुमाह "क्रिया" इति। प्राकरणिकः-प्रस्तुतः, क्रियावैचित्र्यहेतुकत्वादिति भावः। तत्प्रसंगात्-कालक्रमप्रसंगात्, न्याय्यम्-न्यायादनपेतम्, "इति" शब्दो व्याख्यासमाप्तौ ॥ ७ ॥

अथाष्टमस्य श्लोकस्यावतरणिकां करोति "ननु एवम्" इति।

अत्र टीका :—

सत्यप्रमातरि-परमार्थप्रमातृभूते, तस्याः—क्रियायाः। एवमवतरणिकां

---

1. एतत्प्रसंगात्—K.S.S. 2. सत्ये प्रमातरि—K.S.S.

3. स्वात्मैव—C. स्वात्मेव seems to be more appropriate than स्वात्मैव; because Abhinava talks of समुच्चयोपमा in connection with स्वात्मा. We have, therefore, retained the K.S.S. reading.

**किन्तु निर्माणशक्तिः साऽप्येवं विदुष ईशितुः।**
**तथा[1]विज्ञातृविज्ञेयभेदो यदवभास्यते ॥ ८ ॥**

इह तत्त्वतः परमेश्वरस्य अप्रतिहतस्वातन्त्र्यरूपाविच्छिन्नस्वात्म-परामर्शमयी[2] अनन्योन्मुखतारूपा इच्छैव क्रिया इति उपसंहरिष्यते अधिकारान्तरे[3] "एवम् इच्छैव हेतुता कर्तृता क्रिया" इति। चैत्रमैत्रादेरपि

---

कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "किन्तु" इति।

अत्र टीका :—

प्रथमं वाक्यार्थं कथयति "इह" इति। इह–अस्मिन् प्रत्यभिज्ञाशास्त्रे, परमेश्वरस्य–प्रकाशाख्यस्य महेश्वरस्य, अप्रतिहतस्वातन्त्र्यरूपः-प्रतिघातरहितस्वातंत्र्यस्वरूपः, तथाऽविच्छिन्नः–नित्याव्यभिचारत्वेन कदापि विच्छेदमगतः यः स्वात्मपरामर्शः–अहमिति निजामर्शः, तन्मयी, अनन्योन्मुखतारूपा–अनन्यमुखप्रेक्षिता रूपा, इच्छैव—इच्छाख्या शक्तिरेव, क्रिया—भवति, पुष्टीभावेन तत्पर्यन्तरूपासादनात्। इति—एवम्, अधिकारान्तरे–उत्तरस्मिन् अधिकारे, उपसंहरिष्यते, आचार्येणेति शेषः। एवं सति इच्छैव हेतुता कर्तृता क्रियेति भवति। एतदेव पुनः सदृष्टान्तं कथयति "चैत्र" इति। अन्तः-

---

1 तथा विज्ञातृविज्ञेयभेदः—K.S.S. From Abhinava's splitting up of this samāsa as "तथा इति स्वरूपभेदेन देशक्रमकारिणा क्रियाभेदेन च कालक्रमसंपादकेन उपलक्षितो यो विज्ञातुः" etc., and from Bhāskara's statement that it is "समस्तं पदम्" it is clear that तथा is not a separate word. It is part of a samāsa as printed,

2. अप्रतिहतस्वातन्त्र्यरूपाविच्छिन्नस्वात्मविमर्शमयी—K. S. S.

3. अधिकारान्ते—K. S. S. This seems to be a better reading, because the conclusion referred to is found at the end of this very adhikāra as follows:–"तिष्ठासोरेवमिच्छैव हेतुता कर्तृता क्रिया" II. 4. 21.

पचामि इति यैव अन्तरिच्छा सैव क्रिया, तथा च अधिश्रयणादिबहुतरस्पन्दनसंबन्धेऽपि पचामि इति नास्य विच्छिद्यते, यत्तु पचामि इति इच्छारूपं तदेव तथास्पन्दनात्मतया[1] भाति, तत्र तु न कोऽपि क्रमः[2] तत्त्वतः। एवम् ईश्वरस्यापि 'ईशे भासे स्फुरामि घूर्णे प्रत्यवमृशामि'

मनसि। ननु कथमिच्छायाः क्रियात्वं युक्तमित्यतः समर्थनमुपक्रमते "तथा च" इति। अस्य–चैत्रमैत्रादेः अधिश्रयणादीनि–चुल्ल्यां स्थाल्यधिरोहणमधिश्रयणम्, आदिशब्देन दर्वीघट्टनादिग्रहणम्, अधिश्रयणादिरूपाणि यानि बहुतरस्पन्दनानि तेषां सम्बन्धेऽपि "पचामि" इति इच्छा न विच्छिद्यते, अधिश्रयणादिभावेन तस्या एव पुष्टीभावासादनात्। कुतो न विच्छिद्यते इत्यत आह "यत्तु" इति। तुशब्दो हेतौ, तु–यतः, तथास्पन्दनात्मतया–अधिश्रयणादिस्पन्दनरूपेण। ननु तर्हि इच्छाक्रिययोर्न कोपि भेद इत्यत आह "तत्र" इति। तत्र–तस्यामिच्छायाम्, तत्त्वतः—परमार्थतः, कोऽपि क्रमः न भवति, समस्तस्यास्य[3] करणीयस्य सिद्धतया स्फुरणात्, अत एव श्रीस्पन्दशास्त्रेषु देवताविषयाया इच्छाया एव देवताप्राप्तिरूपत्वमुक्तम्। तदुक्तं तत्रः—

अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि।
तदात्मतासमापत्तिरिच्छतः साधकस्य या"

इति। तथाः—

इयमेवामृतप्राप्तिरयमेवात्मनो ग्रहः।
इयं निर्वाणदीक्षा च शिवसद्भावदायिनी॥

इति च। इच्छामात्रमेव नैरपेक्ष्यकारित्वेन तद्विषयप्राप्तिरूपं सूक्ष्मदर्शिनं प्रबुद्धं प्रति, यस्तु फललाभः, स बाह्यापेक्षाग्रस्तत्वेन क्षोभरूप एव, स्थूलदृष्टीनां तु इच्छाकालीननैरपेक्ष्यपरामर्शाशक्तत्वेन फललाभ एव परमार्थप्राप्तिः, स च दैवाधीनत्वेन भविष्यति न वेति संशयग्रस्त एवेति श्रीस्पन्दशास्त्रकारिकाद्वयतात्पर्यम्। ये तु मूढा अपि व्यर्थं तदभिमानिनः ते फललाभैकविवशं स्वमनः एव तत्र साक्षीकुर्वन्तु, अन्यथा स्ववञ्चकतापत्तेरित्यलम्। दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह "एवम्" इति। एवम् ईश्वरस्यापि–प्रकाशरूपस्य परमेश्वरस्यापि,

1. तथा स्पन्दनात्मतया—K. S. S.
2. कश्चित् क्रमः—K. S. S.
3. समस्ता·································सकरणीयस्य—C.

इत्येवंरूपं यदिच्छात्मकं विमर्शनम् 'अहम्' इत्येतावन्मात्रतत्त्वं न तत्र कश्चित् क्रमः, एतदेव च उच्यते "प्रमातृप्रमेयवैचित्र्यक्रम उल्लसतु" इत्यमुना[1] वाक्येन, तदत्रापि न कश्चित् क्रमः, यथा[2] तु इच्छारूपं 'पचामि' इति स्पन्दनात्मतां कायपर्यन्तां गतं क्रमारूषितम् आभाति

ईशे—ईशिविषयमुद्भाव्य तत्कर्ता भवामि, भासे—स्वभानकर्तृत्वपुरस्सरमीशनीयभानकर्ता भवामि, एवमेव स्फुरणघूर्णनयोरपि योजनीयम्। प्रत्यवमृशामि—अहंपरामर्शकर्तृत्वपूर्वमिदंपरामर्शकर्ता भवामि, इत्येवंरूपं यदिच्छात्मकम्—इच्छामात्ररूपम्, विमर्शनम्—चेतनत्वेनाव्यभिचारि परामर्शनं भवति, तत्र कश्चित्क्रमो न भवति, तद्विषयस्य स्वस्मिन् स्वत्वेन शक्तित्वेन च सिद्धत्वात्, बाह्यं सामान्यं जनं प्रत्येवोपदेशार्थं क्रमवाचितिङ्प्रयोगात्, अन्यथाऽस्यापि सामान्यजनवत् क्षोभाविष्टत्वापातेन एतावत्प्रपंचाश्रयजगन्निर्मातृत्वासंभवेन जगद्भानाऽसंभवप्रसङ्गात्। यद्यपि परमेश्वरस्येच्छाकथनमप्ययुक्तमेव, तथापि अस्य ब्रह्मणः ईदृगेव महिमा यत् सर्वरूपं वपुरिति-नीत्याश्रयणेन[3] सर्वमये तत्र तत्त्वे सर्वसहत्वेनाज्ञजनबोधनार्थं तद्युक्तत्वमारोप्यैवमुक्तमित्यलं कृपालुभिः कृपाविवशत्वेनाज्ञजनार्थं कल्पितासु युक्तिषु तमोदर्शनार्थं कल्पितदीपमालासहोदरीभिर्विचारणाभिः। नन्विच्छावाचकेषु वाक्येषु लोडादिकमेव दृश्यते तत्र लटा किमिति निर्देश इत्यत आह "एतदेव" इति। एतदेव च-समनन्तरोक्तं वस्त्वेव च, इत्यमुना वाक्येन उच्यते। इति किमिति? "प्रमातृ" इति। ननु तर्हि प्रथममेवामुनैव वाक्येन किं नोक्तम्, किमिति द्वितीयः प्रयासः कृतः? सत्यम्, बुद्धान् प्रति सातत्यद्योतनार्थं लट्प्रयोग एव युक्तः, अज्ञान् प्रति तु साक्षादिच्छावाचकत्वेन लोट्प्रयोग एवेति न किञ्चिद्विरुद्धम्। नन्वत्र वाक्ये सक्रमत्वमस्ति तद्रहितत्वं वेत्यत आह "तत्" इति। "अत्रापि" इच्छामात्रस्यैव तत्स्थितत्वाद्बाह्यसंचारस्याभावाच्चेति भावः। दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि इच्छायाः बाह्यसंचारं कथयति "यथा तु" इति। तु व्यतिरेके, यथा "पचामि" इतीच्छारूपम्—पचामीति स्थितमिच्छास्वरूपम्, कायपर्यन्ताम् शरीरविश्रान्ताम्, स्पन्दनात्मतां गतं सत् क्रमाऽऽरूषितम्—पूर्वापरीभूतावयव-

1. उल्लसतु अमुना वाक्येन—K.S.S.
2. यदा तु—K.S.S.
3. सर्वरूपे वपुरिति नीत्याश्रवणेन—C

तथा[1] भगवदिच्छा प्रमातृप्रमेयभेदपर्यवसिता तत्क्रमोपश्लिष्टा भाति दर्पणतलमिव विततप्रवहन्नदीप्रवाहक्रमसमाश्लिष्टम्, अत्र च केवलं दर्पणस्य तथा इच्छा नास्ति, परमेश्वरस्य तु सा अस्ति—इति उभयथा अस्य क्रियाशक्तिः 'क्रमरूपक्रियानिर्माणसामर्थ्यं क्रमरूपक्रियोपरागयोगश्च' इति। एवं देशक्रमेऽपि वाच्यम्, तत्र तु अस्य चिच्छक्तिः उच्यते अन्यैः, इह तु क्रियाशक्तिरेव सा स्वीकृता इति पिण्डार्थः।

अक्षरार्थस्तु—तथा इति स्वरूपभेदेन देशक्रमकारिणा क्रियाभेदेन च कालक्रमसंपादकेन उपलक्षितो यो विज्ञातुः शून्यादेः प्रमातुः भेदोऽन्योन्यं ज्ञेयाच्च, एवं घटादेः परस्परं ज्ञातुश्च स भगवता अवभास्यते,

---

त्वेन क्रमविशिष्टम्, आभाति, तथा भगवदिच्छा प्रमातृप्रमेयभेदपर्यवसिता सती तत्क्रमोपश्लिष्टा-प्रमातृप्रमेयक्रमाऽऽरूषिता, भाति, किमिव ? दर्पणतलमिव, यथा तत् विततप्रवहन्नदीप्रवाहक्रमसमाश्लिष्टम् भाति तथेत्यर्थः। ननु तर्हि दपणपरमेश्वरयोः सदृशत्वमेवायातमित्यत आह "अत्र च" इति। अत्र च-दृष्टान्तदार्ष्टान्तिकमध्ये, सा-इच्छा, उभयथात्वं विभज्य दर्शयति "क्रम" इति। सामर्थ्यमत्रेच्छारूपं ज्ञेयम्, उपरागयोगस्तु प्रतिबिम्बग्रहणम्, 'इति' शब्दः प्रमेयसमाप्तौ। देशक्रमेऽप्येनं न्यायमतिदिशति "एवम्" इति। तत्र—देशक्रमे, अस्य—परमेश्वरस्य, अन्यैः—इतो बाह्यैः, इह-क्रियाक्रमे, सा-इच्छाशक्तिः।

एवं वाक्यार्थमुक्त्वा पदार्थकथनं प्रतिजानीते "अक्षरार्थस्तु" इति। 'तु' शब्दो दर्शयिष्यामीत्यर्थे। अक्षरार्थमेव दर्शयति "तथा" इति। "तथा" इत्यादि समस्तं पदं व्याचष्टे विग्रहपूर्वकं "तथा इति" इति, "तथा" इत्यवयवं व्याचष्टे, "स्वरूप" इति। "विज्ञातृ" पदं व्याचष्टे "शून्यादेः" इति। एतन्निष्ठत्वेन भेदस्य प्रतियोगिधर्मिकथनं करोति "अन्योन्यम्" इति। "विज्ञेय" पदं व्याचष्टे "एवम्" इति। एतन्निष्ठत्वेनापि भेदस्य धर्मिप्रतियोगिकथनं करोति "परस्परम्" इति "ज्ञातुः" इति च। "यः" इत्यस्याकांक्षां पूरयति "सः" इति। सः-भेदः "ईशितुः" इति पदं अर्थवशात् तृतीयान्ततां

---

1. तदा—K.S.S.

यत् तदवभासनं सा ईशितुरपि निर्माणशक्तिः क्रियाशक्तिः न तु केवलं शून्यादेरेव क्रिया, यतश्च तन्निर्मितं ज्ञातृज्ञेयक्रियावैचित्र्यभेदम् असौ विद्वान् वेत्ति अविरतम्[1] तत्रैव हि तत् स्फुरति ततोऽपि तस्य सा क्रियाशक्तिः। अतो भासनविच्छेदनाभावात्[2] क्रमाभावे स्थूलदृष्ट्या

---

नीत्वा व्याचष्टे "भगवता" इति। "**अवभास्यते**" इति निगदव्याख्यातम्, णिजन्तोयं प्रयोगः। उत्तरार्धं व्याख्याय पूर्वार्धं व्याख्यातुं योजयति "यत्" इति। "यत्तत्" इत्यस्याकांक्षां पूरयति "सा" इति। "सा" इति क्रियाशब्दापेक्षं स्त्रीत्वम्। ईशितुरपि–भगवतः परप्रमातुरपि, अपिशब्दात् आपाततः शून्यादेरपि ग्रहणम्। "**निर्माणशक्तिः**" इति पदं व्याचष्टे "क्रिया" इति। शून्यादेरेव-आपाततः तद्रूपत्वेनाभासमानस्य शून्यादेरेव। कुतः ईशितुरपि अस्ति इत्यपेक्षायां "**विदुषः**" इति पदं हेतुगर्भविशेषणत्वेन व्याचष्टे "यतश्च" इति। "विदेः" सकर्मकत्वात् "एवम्" शब्दं कर्मत्वेन व्याचष्टे "तत्" इति। 'अविरतम्' इति, न तु शून्यादिवत् कदाचिदेवेत्यर्थः, युक्ततयास्य पदस्याध्याहारः। "वेत्ति" ततः किमित्यपेक्षायामाह "तत्रैव" इति। हि–यस्मात्, तत्–निर्माणम्, तत्रैव—तस्मिन्नीशितर्येव स्फुरति, शून्याद्याधेयत्वेन स्फुरणेऽपि परमार्थतः तत्रैव स्फुरणात्, शून्यादेस्तत्सारत्वेन स्थितत्वादन्यथा स्वरूपलाभासंभवात्। तदुक्तम् :—

"कथमन्यथा भवन्ति भुवि दत्तपदानि नृणाम्" इति।

'हि' शब्दाकांक्षां पूरयति "ततः" इति। ततः–तस्मात्स्फुरणात् हेतोरपि, तस्य–परमेश्वरस्य, सा-क्रियाशक्तिर्भवति। तदुक्तम् :—

"ज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम्" इति।

अपिशब्दात् "क्रमो भेदाश्रयः" इत्यत्रोक्तनीत्याप्यस्ति इति सूचितम्। फलितमाह "अतः" इति। अतः कारणात्, भासनविच्छेदाभावात्–सततस्फुरत्त्वेन, क्रमाभावे सति यद्यपि स्थूलदृष्ट्या ईशितुः

---

1. अनवरतम्—K.S.S.
2. भासनविच्छेदाभावात्—K.S.S.

यद्यपि अस्य भवेत् क्रियानुपपत्तिशङ्का, किं तु एवमस्य क्रियाशक्तिरुपपन्ना—इति संगतिः । इति शिवम् ॥ ८ ॥ आदितः ९७ ॥

इति श्रीमदाचार्योत्पलदेवपादविरचितायामीश्वरप्रत्यभिज्ञायां श्रीमदाचार्याभिनवगुप्तपादकृतविमर्शिन्याख्यटीकोपेतायां क्रियाधिकारे क्रियाशक्तिनिरूपणं नाम प्रथममाह्निकम् ॥ १ ॥

---

क्रियानुपपत्तिशंका भवति, यदाश्रयणेन सांख्यादिभिरस्योदासीनत्वमित्युक्तमिति भावः।"किन्तु"इति तथापीत्यत्रार्थे, तथापि एवम्—उक्तप्रकारेण, क्रियाशक्तिरुपपन्ना भवति, न च शंकनीयं तद्वत्त्वेऽस्य क्षोभावेश इति, असमर्थस्यैव तद्योगात्, न हि दाहे शक्तस्याग्नेस्तत्र क्षोभावेशो दृश्यते, तदियं घोषणा सांख्यवेदान्त्यादिगृहेषु स्फुरत्ता कर्ता ईश्वर इति । ननु नैयायिका अपि एतदेव कथयन्ति, तेषां का वार्ता ? सत्यम्, यदि ते अपि महाद्वैतनिष्ठा भवयुः, तर्हि भवेदेव तेषामस्मत्सहृदयता, न च ते तत्र निष्ठा भवन्तीति तेषां दूरत एव त्यागः । कर्तृतापि च तैस्तत्र लौकिकी अंगीक्रियते, नत्वनुत्तरस्वरूपा, इत्यलं परोपकारार्थं तत्तद्भूमिकापरिघट्टनरतेषु कारुणिकेषु वादिषु चोद्यचर्चाभिः । एवमत्र योजनेत्याह "इति संगतिः" इति । इति—एवम्, संगतिः, संबन्धो भवतीत्यर्थः । 'इति' शब्द आह्निकव्याख्यासमाप्तौ, शिवपदं मंगलवाचकं परतत्त्वसूचनपरञ्च ।

एवमत्र स्फुटा योजना । किन्त्विति पक्षान्तरे, सा निर्माणशक्तिः-क्रियाशक्तिः, विदुषः-तद्विषयज्ञानयुक्तस्य, ईशितुः-भगवतः, परप्रमातुरपि भवति, सा का ? तेन ईशित्रा कर्त्रा तथाविज्ञातृविज्ञेयभेदः यत् अवभास्यते । इति शिवम् ॥ ८ ॥

इति श्रीमत्पूज्यतमपादाचार्यश्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञासूत्र विमर्शिनीटीकायां भास्कर्याख्यायां क्रियाधिकारे प्रथममाह्निकम् ॥ १ ॥

---

## क्रियाधिकारे

# द्वितीयमाह्निकम् ।

विरोधमविरोधं च स्वेच्छयैवोपपादयन् ।
भेदाभेदौ च यो मन्त्रतत्त्ववित्तं स्तुमः शिवम् ॥ १ ॥

# आह्निकम्—२

अविरोधं विरोधं च भेदाभेदांश्च भासयन् ।
स्वेच्छया मन्त्रवीर्यज्ञो यस्तं हृदि शिवं स्तुमः ॥

अथ क्रियाधिकारे द्वितीयस्याह्निकस्य निर्विघ्नं व्याख्यासमाप्तये स्वेष्ट-देवतारूपपरतत्त्वपरामर्शनरूपं मङ्गलं कायमनोभ्यामनुष्ठितमपि शिष्यशिक्षार्थं सकलाह्निकतात्पर्यसूचकेन श्लोकेनोपनिबध्नाति "विरोधम्", इति । वयं तं शिवं स्तुमः, तं कम् ? यः शिवः स्वेच्छयैव—आच्छादनक्रीडाविषयान्योन्य-प्रतिघातबाधविधुरभावनिर्माणान्यथानुपपत्त्या शिष्यबोधनार्थं महागुरुभिर्महा-शास्त्रेषु तदाधारचित्ताभावेऽपि प्रकल्प्योक्तया निजेच्छयैव, न तु प्रोक्तव्यतिरि-क्तप्रयोजनविवशतया कस्यापि स्वव्यतिरिक्तस्य प्रेरणया वा, विरोधम्-परस्पर-निरपेक्षधर्म्यपेक्षया तदाभासनकाले तदनाभासरूपं विरोधम्, तथा अविरोधम्—परस्परसापेक्षधर्मितन्निष्ठधर्मापेक्षया युगपदाभासरूपं विरोधाभावम्, तथा भेदाभेदौ—स्वयमुद्भावितशिवरुद्रपशुरूपप्रमातृवर्गविषयत्वेन भेदनम्, भेदा-भेदौ, अभेदं च, तत्र शिवप्रमातृविषयत्वेनाभेदम्, रुद्रप्रमातृविषयत्वेन भेदा-भेदौ, पशुप्रमातृविषयत्वेन भेदम् । अथवाऽविरोधविषयेऽभेदं विरोधविषये भेदम् उपपादयन्[१]—परमार्थतः अनुपपत्तावपि स्वभावभूतमहाद्वैतरूपया उपपत्त्या स्थापयन् सन्, सर्वंभरितस्वरूपवशेन भासयन् सन्निति यावत् ।

---

1—उपपादयन्—उपपत्त्या स्थापयन् सन् सर्वंभरितस्वरूपवशेन भासयन् सन्निति यावत्, मन्त्रतत्त्ववित् मन्त्रस्य गुप्तभाषणरूपः परमार्थतः अनुपपत्तावपि,

यदुक्तम् "अप्रतिहतसामर्थ्यात् भगवतो निर्माणशक्तिः" इति, तदेव बाह्यवाददर्शनानुपपद्यमानक्रियासंबन्धसामान्यादिपदार्थराशिसमर्थन-मुखेन निर्वाहयितुं

'क्रियासंबन्धसामान्य..........।'

इत्यादि

'...............तेन न भ्रान्तिरीदृशी ।'

---

मन्त्रतत्त्ववित्—मन्त्रस्य—गुप्तभाषणरूपस्याहंपरामर्शस्य तत्त्वम्—पारमार्थिकं स्वरूपं वेत्ति—सर्वानुस्यूतत्त्वेन सकलमन्त्रवीर्यत्वेन स्थितत्वाद्वानुभवतीति तादृशः, विरोधाविरोधभेदाभेदभासनसमयेऽपि महाद्वैतदर्शीति यावत् । यद्यपि वेदनकर्तृत्वमत्राद्वैतवादिनं प्रति द्वैतावहत्वेन परमार्थदृष्ट्या वक्तुमयुक्तमेव, तथाप्यतिपरमार्थदृष्ट्याश्रयेण स्वान्तःकृतद्वैताद्वैतमहाद्वैतनिष्ठानामेतत् कथनमपि नायुक्तम्, जलधौ हि जलद्वैतरूपास्तरङ्गास्तदद्वैतरूपं जलं चान्तः स्फुरत्येव, एतेन विरोधाविरोधयोः भेदाभेदयोश्च निर्णयोऽत्राह्निके स्थित इति सूचितम् ।

अत्र चान्योऽपि मंत्री स्वप्रभोः शत्रूणां परस्परं विरोधं भेदं[2] चानेन महान्तं तेषामविरोधमभेदं चोपपादयन् सन् मन्त्रवित् भवति, किन्त्वस्य राज्ञः प्रेरणया न तु स्वेच्छया उपपादयतीति व्यतिरेकालंकारो व्यङ्ग्यः । भेदाभेदावित्यस्या-वृत्त्या पृथग्भोजनोपयोगिपात्ररूपया द्विः सम्बन्धः । अथ सकलाह्निकस्य समस्त-व्यस्तत्वभ्यां तात्पर्यकथनं करोति "यदुक्तम्" इति ।

अत्र टीका :—

उक्तम्, पूर्वाह्निके इति भावः । निर्माणशक्तिः—क्रियाशक्तिः, बाह्यवाद-युक्तानि दर्शनानि—बाह्यवाददर्शनानि—सामान्याद्वैतनिष्ठत्वेऽपि महाद्वैतारतानि बौद्धादिशास्त्राणि, तेषु अनुपपद्यमानाः—अयोग्यतामासादयन्तः ये क्रियास-म्बन्धसामान्यादिपदार्थराशयः—वक्ष्यमाणाः क्रियासम्बन्धादिसमूहाः, तेषां समर्थ-

---

स्वभावभूतमहाद्वैतरूपया उपपत्त्या स्थापयन् तथा सकलमन्त्रवीर्यत्वेन स्थितत्वाद्वा मन्त्ररूपस्याहंपरामर्शस्य तत्त्वं पारमार्थिकं स्वरूपं वेत्ति सर्वानुस्यूतत्वेनानुभवति इति तादृशः, विरोधाविरोधभेदाभेदभासनसमयेऽपि महाद्वैतदर्शीति यावत् भवति—C. Probably because of scribal mistake, there is found a strange transposition of words and phrases. We have reconstructed the text as printed

1—भेदं चानेन महत्तेषामविरोधम्—C.

इत्यन्तं श्लोकसप्तकेन आह्निकं प्रस्तूयते। तत्र प्रथमश्लोकेन सूत्रकल्पेन एकानेकरूपस्य क्रियादेः बाह्यवादे विरुद्धधर्माध्यासदूषणेन अनुपपद्यमानस्याप्यवश्यसमर्थनीयं वपुः इति दर्श्यते। द्वितीयेन तत्र उपपत्तिः सूच्यते। तृतीयेन निर्विकल्पकसंवेदनसंवेद्यत्वेऽपि विकल्पकाले एव स्फुटमेषां रूपम् इत्युच्यते। चतुर्थपञ्चमाभ्याम् एकानेकस्वरूपताया विषयविभागः चिन्त्यते। षष्ठेन ग्रहणकसूत्रसूचितसंबन्धस्वीकृतानां क्रियाकारकभावादीनां स्वरूपम् उच्यते। सप्तमेन अर्थक्रियोपयोग इति संक्षेपः।

नन्वेवं तथा निर्माणशक्त्या अवभासनारूपया यत् निर्मीयते तस्यावभासनैव निर्माणम्, नान्यत्, सा च द्विचन्द्रादेरपि अस्ति, नीलादेरपि, नीलादिनिष्ठस्य कर्मसामान्यसंबन्धादेरपि, ततश्च असत्यं सत्यं संवृतिसत्यमिति य एवंप्रायेषु व्यवहारः स कथं संगच्छेत

---

नम्—महाद्वैतवशेन सत्यतया साधनम्, तस्य मुखेन द्वारेण। निर्वाहयितुम् सिद्धीकर्तुम्, प्रस्तूयते—आरभ्यते। तत्र—प्रोक्ताभिप्रायश्लोकसप्तकमध्ये, सूत्रकल्पेन—बह्वर्थसूचकत्वात्सूत्रसदृशेन, क्रियादेः—प्रोक्तस्य क्रियासम्बन्धादेः, विरुद्धधर्माणां यः अध्यासः, तेन यत् दूषणं तेन, अनुपपद्यमानस्यापि-स्वरूपसत्तायामयोग्यस्यापि, वपुः—क्रियाद्याख्यं स्वरूपम्। तत्र—पूर्वश्लोकोक्ते वस्तुनि, उपपत्तिः—युक्तिः। एषाम्—क्रियासम्बन्धादीनाम्, ग्रहणकसूत्रेण—"क्रियासम्बन्ध" इत्यादिप्रथमश्लोकरूपेण, सूचितः यः-संबन्धस्तेन स्वीकृतानाम्।

अथ प्रथमश्लोकस्यावतरणिकां करोति "नन्वेवम्" इति।

अत्र टीका :—

एवम्, पूर्वाह्निकोक्ते वस्तुनि सतीत्यर्थः, निर्माणशक्त्या—क्रियाशक्त्या, निर्मीयते—संपाद्यते, अवभासनैव-अवभासनमात्रम्, न तु उपादानग्रहणपूर्वकरणम्। एवशब्दव्यावर्त्यमाह "नान्यत्" इति, अनुपलभ्यमानत्वादिति भावः। ननु ततः को दोष इत्यत आह "सा च" इति। सा च-अवभासना च, "अप्यस्ति" इत्यस्य सर्वत्र सम्बन्धः। ननु भवतु ततः किम् इत्यत आह "ततश्च" इति। संवृत्या सत्यं संवृतिसत्यम्, बौद्धमते क्रियासामान्यादेः विकल्परूपत्वेनाविद्यारूपया संवृत्या सिद्धत्वात्। एवंप्रायेषु—एवमादिषु व्यवहारस्थानेषु, व्यवहारः—भिन्नतया स्थितः व्यवहारः। कुतो न संगच्छते इत्यपेक्षायां हेतुमाह

निर्मेयत्वाविशेषात् इत्याशंक्य 'क्रियादीनामसत्यत्वं तावत् नोपपन्नम्' इति वदन् द्विचन्द्रादीनां तु इत्थमपि असत्यत्वम् इति सूचयन् आह—

**क्रियासंबन्धसामान्यद्रव्यदिक्कालबुद्धयः ।**
**सत्याः स्थैर्योपयोगाभ्यामेकानेकाश्रया मताः ॥ १ ॥**

चित्तत्त्वात् अन्यत्र या क्रियाबुद्धिः कर्तृकर्मकरणादिषु 'चैत्रो व्रजति' 'तण्डुला विक्लिद्यन्ते' 'एधा ज्वलन्ति' इति, तस्या एकानेकरूपश्चैत्राद्यर्थ आश्रयः आलम्बनम् । तथाहि—तत्तद्देशकालाकारभिन्नः तत्र चैत्रदेहोऽनेकस्वभावोऽपि 'स एवायम्' इति एकरूपताम्

---

"निर्मेय" इति । वदन्—साक्षात्कथयन्, इत्थमपि-नीलादिभिः सह निर्मेयत्वाविशेषेऽपि, सूचयन्—सूचनामात्रेण वदन् । एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । **"क्रिया"** इति ।

अत्रटीका :—

प्रथमं **"क्रिया"** इत्यादि व्याचष्टे **"चित्तत्वात्"** इति । चित्तत्वात्—परमार्थतः सर्वक्रियाधारभूताच्चित्स्वरूपात्, अन्यत्र-अननुरूपेषु, कर्तृकर्मकरणादिषु-कर्तृ कारके, कर्मकारके, करणकारके च, आदिशब्दात् संप्रदानादिषु च, या क्रियाबुद्धिः भवति सापि गृह्यते, कथम् ? "चैत्रो व्रजति" कर्तृभूतः चैत्रो गच्छति, तण्डुलाः—कर्मरूपाः तण्डुलाः, विक्लिद्यन्ते-क्लेदनक्रियाविषयीभवन्ति, एधाः—करणभूतानीन्धनानि, ज्वलन्ति, उपलक्षणञ्चैतत् विप्रो गा गृह्णातीत्यादेः । 'इति' शब्दः कर्त्रादिविषयक्रियाबुद्धिनिदर्शनसमाप्तौ । **एकानेकाश्रया** इति, पदं व्याख्यास्यन् "या" इत्यस्याकांक्षां पूरयति "तस्या" इति । "चैत्रादि"[1] इति, आदिशब्देन तण्डुलादेर्ग्रहणम् । **आश्रय**-पदं व्याचष्टे "आलंबनम्" इति । कथमित्यपेक्षायां समर्थनमुपक्रमते **"तथा हि"** इति । ते ते च ते देशकालाकाराः तैः विशेषणतां गतैः भिन्नः,-तत्र-तेषु देशकालादिषु, अनेकस्वभावोऽपि-बहुस्वरूपोऽपि, निर्भासते—प्रतिभासते, स एव च-अनेक-

---

1—चैत्र इत्यादिशब्देन—C.

अपरित्यजन्नेव निर्भासते, स एव च एकानेकरूपा[1] क्रिया तथैव प्रतिभासनाच्च पारमार्थिकी, द्विचन्द्रादि तु तथाभासमानमपि[2] उत्तरकालं प्रमाव्यापारानुवृत्तिरूपस्य स्थैर्यस्य उन्मूलनेन 'द्विचन्द्रो नास्ति' इत्येवंरूपेण असत्यम्, इह पुनः 'चलति चैत्रः' इत्येवंभूतो विमर्शः अनुवर्तमानो न केनचित् उन्मूल्यमानः संवेद्यते, द्विचन्द्रादि च यद्यपि ह्लादोद्वेगयोः उपयुज्यते, तथापि द्विचन्द्राभिमानी न तावतीं तत्र अर्थक्रियाम् अभिमन्यते, अपि तु यादृशी एकेन शशिना कर्तव्या तिमिरापसारणादिरूपा, तादृश्येव अपरेण, इति न तद्द्विगुणाम् अर्थक्रियां

---

स्वभावस्य एकतात्यागनिर्भास एव च, एकानेकरूपा–एकस्य देवदत्तकायस्य देशादिविशेषणकृतानेकतास्वरूपा, क्रिया भवति, तत्र देशभेदः तत्तद्देशासादनकृतः, कालभेदः सूर्यसंचारादिक्रियारूपो भेदः, आकारभेदः परिणामावस्थादिरूप इति विभागः। "सत्या" इति व्याचष्टे "तथैव" इति। तथैव—न त्वौत्तरकालिकबाधवशेनान्यथापि, प्रतिभासनाच्च पारमार्थिकी भवति भासनमात्रस्यैव वस्तुस्वरूपप्रतिष्ठापकत्वात्। च शब्दः प्रकाशरूपताकृतपारमार्थिकत्वसमुच्चयार्थः, एतेनार्थायातमौत्तरकालिकबाधायुक्तस्य द्विचन्द्रस्यासत्यत्वं कथयति "द्विचन्द्रादि" इति। तथाभासमानमपि तस्मिन् समये द्विचन्द्रादित्वेन भासमानमपि सत्, प्रमाव्यापारस्य याऽनुवृत्तिः–अनुवर्त्तनं सा रूपं यस्य तादृशस्य, स्थिरत्वं हि कालान्तरे पुनस्तथैव ग्रहणमेव, उन्मूलनेन–बाधनेन, कीदृशेनेत्यपेक्षायामाह "द्विचन्द्रः" इति। असत्यम्–अपारमार्थिकम्। ननु इहापि कथं न क्रियाया उन्मूलनमस्तीत्यत आह "इह पुनः" इति। संवेद्यते-अनुभूयते, एतेन "स्थैर्य" इति पदं व्याख्यातम्। "उपयोग" पदं व्याचष्टे "द्विचन्द्रादि" इति। आदिपदेन एकत्र सर्पे सर्पद्वयभ्रमग्रहणम्। तस्यैवोद्वेगकारित्वात्, उपयुज्यते–उपयोगं करोति, कर्तरि लकारः, तावतीम्—द्विचन्द्रकरणीयाम्, पुनः कियतीमभिमन्यते इत्यत आह "अपि तु" इति। तस्याम्—

---

1—एकानेकरूपोऽर्थः क्रिया—K. S. S.

2—तथा भासमानमपि—K. S. S. From Bhāskara's explanation, the two words seem to form a compound as printed.

तत्र अध्यवस्यति, तस्यां च असौ न उपयुज्यते, व्रज्यायां तु यामेव ग्रामप्राप्तिम् अध्यवस्यति तस्याम् अविकलायाम् उपयोगोऽस्या इति स्थैर्यात् उपयोगाच्च एकानेकरूपक्रियातत्त्वालम्बनबुद्धिः[1] सत्यैव, एवं संबन्धादिषु कालपर्यन्तेषु वाच्यम् उत्तरकारिकासु स्फुटीकरिष्यति[2] ॥१॥

नन्वेकत्वम् अनेकत्वं च परस्परं विरुद्धे, कथम् एकत्र वस्तुनि

द्विचन्द्रकर्तव्यायामर्थक्रियायाम्, असौ-द्विचन्द्रः, व्रज्यायाम्-सत्यतया साधनीयायां गमनक्रियायाम्, अस्याः—व्रज्यायाः, स्थैर्योपयोगयोः प्रत्येकं पञ्चमीयोजनां करोति, "स्थैर्यात्" इति । एकानेकरूपा या क्रिया तस्याः यत् तत्त्वं—स्वरूपं तत् आलम्बनं विषयो यस्याः तादृशी चासौ बुद्धिः सा एकानेकक्रियातत्त्वालम्बनबुद्धिः, सत्यैव, न तु द्विचन्द्रवत् प्रथमं सत्या, उत्तरकाले तु असत्येति भावः । पूर्वावस्थितक्रियादिषु मध्ये क्रियामात्रस्यैव निर्णीतत्वात् । सम्बन्धादिष्वप्येनमेव न्यायमतिदिशति "एवम्" इति । बुद्धेः सर्वसंबन्धित्वेन [3]'कालपर्यन्तेषु' इत्युक्तम् । ननु कथमतिदेशमात्रेणातिगहनसम्बन्धादिज्ञानं भवेदित्यत आह "उत्तर" इति । स्फुटीकरिष्यति, सूत्रकार इति शेषः ॥ १ ॥

[4]"ननु" इति । यस्य कस्यचिद्वस्तुनः परस्परविरुद्धयोरेकत्वानेकत्वयोः सद्भावे

1—एकानेकरूपक्रियातत्वालंबना बुद्धिः—K. S. S.
2—स्फुटीभविष्यति—K. S. S.  3—कालपर्यन्तमित्युक्तम्—C.
4—अथ द्वितीयश्लोकस्यावतरणिकां करोति "नन्वेकत्वमिति" ।

The Bhāskarī on the Vimarsinī from Kārikā No. 2 after the introduction as printed above, up to कालपरामर्शस्य पूर्वपरादिरूपत्वे etc. in the Vimarsinī, on kārikā No. 6 is not available. We know of three manuscripts in Kashmir. one in the possession of the Research Department of the Kashmir State, another which we are using for this edition and the third in the possession of the descendents of भास्करकण्ठ himself. The first two are copies of the third. The portion in question is missing in all the three. For this portion, therefore, we are publishing an ancient commentary, a transcipt of which has been obtained from the Government Oriental Manuscripts Library, Madras.

स्याताम्, ततश्चायं बाधकप्रमाणकृतः स्थैर्योन्मूलनप्रकार इत्याशङ्क्याह :—

तत्रैकमान्तरं तत्त्वं तदेवेन्द्रियवेद्यताम्।
संप्राप्यानेकतां याति देशकालस्वभावतः॥ २॥

---

अंगीक्रियमाणे एकस्यानेकत्वं बाधकम्, अनेकस्यैकत्वं बाधकमित्येकत्वानेकत्वयोर्बाधकप्रमाणकृतः स्थैर्योन्मूलनप्रकार इत्याशंक्य तत्परिहर्तुमाह "तत्र" इति।

अत्र टीका :—

वस्तुनि–देवदत्तकायादिरूपे..................। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "तत्रैकम्" इति।

तेषु क्रियादिषु तत्प्रमाणभूतम् **आन्तरम्** अन्तर्मुखरूपं **तत्त्वम् एकम्**, **तदेवेन्द्रियवेद्यतां** प्राप्य इहामुत्रेति देशतः अधुना तदानीमिति कालतः, कृशः स्थूल इत्यादि स्वभावतः, अनेकतां[1] याति। तत्रेति। तेषां सत्यत्वे स्थिते सति। तत्रेति—तयोरेकत्वानेकत्वयोर्मध्ये एकत्वमेवमनेकत्वमेव मिति वक्ष्यमाणप्रकारेण योजनम्[2]। एकत्वं देशाद्याभासामिश्रतायामन्तःकरणैकवेद्यत्वे चिन्मात्रतायां च, अनेकत्वमाभासान्तरमिश्रतायामुभयकरणवेद्यत्वे चिदतिरिक्ताभासने चेति एकत्वानेकत्वयोः स्फुटो[3] विषयभेदः।

---

1—स्वभावतः साकलितम् अनेकताम्—The text here is doubtful. Under 'सा' there are two dots, showing that the copyist himself was doubtful in regard to the reading. Could it have been आकलितम्? Even without any such word the sentence is complete and yields a good meaning. Hence we have omitted साकलितम्।

2—योजनं देशाद्याभास—C. The sentence beginning with देशाद्याभास and ending with चिन्मात्रतायां च is incomplete without 'एकत्वम्.' Hence we have introduced it.

3—एकानेकत्वयोः स्फुटो न विषयभेदः—C.

इह तावत् चैत्रे चलति दृष्टे न जातुचित् 'न चलति अयम्' इति बुद्धिः जायते—न रजतम् इतिवत्, द्विचन्द्रेऽपि नायं द्विचन्द्रः तिमिरवशात् अहम् उपप्लुतनयनः परम् एवं वेद्मि इति भवति उन्मूलनाबुद्धिः । यत्तु उक्तम्—एकमेव कथम् अनेकं भवति इति, तत्र उच्यते—इह कारणमेव कथम् अकारणं भवति अथ उच्यते—विषयभेदात् तथा इति, तद्विषयभेदे एतत् न विरुध्यते इति केन अयं वितीर्णोऽवसरः[1] ?

---

एकानेकवस्तुनिष्ठायाः क्रियाया एकानेकत्वं सत्यमिति व्यतिरेकदृष्टान्तमुखेन दर्शयति । इह—चैत्रमैत्रादेर्गमनक्रियायाम्, चैत्रे चलति दृष्टे अयं चैत्रो न चलतीति बुद्धिर्न जातुचिज्जायते, तस्मात् चलतश्चैत्रस्य तत्तद्देशकालाकारविशिष्टत्वादनेकत्वं स एवायमिति प्रतिभासादेकत्वमित्येकानेकरूपचैत्राश्रितत्वात् तत्सम्बन्धिनी[2] क्रियाप्येकानेकरूपा । एवंभूतरूपा क्रियाबुद्धिर्गन्तव्यप्रदेशप्राप्तेः पूर्वमेव मध्ये रजतमितिवन्न विच्छिद्यते, शुक्तिविषये भूतपूर्वा रजतबुद्धिः पश्चान्न रजतमिति निवर्त्यते तथा नैषा । पुनरपि व्यतिरेकदृष्टान्तेन दृढीकरोति । रजतबुद्धिवत् द्विचन्द्रेऽपि नायं द्विचन्द्रस्तिमिरवशादहमुपप्लुतनयनः परम् केवलमेव द्विचन्द्र इति वेद्मीति द्वयबुद्ध्युन्मूलनं[3] भवति । भवता एकमेव कथमनेकं भवतीति यत्तूक्तं तत्र प्रश्ने एकस्यानेकभवनप्रकार उच्यते, अङ्कुरादि प्रति कारणभूतं बीजाद्येव घटादि प्रति कथं कारणं न भवति । अथोच्यते विषयभेदात्तथेति बीजहेतुरङ्कुरोऽन्यः मृजन्यो[4] घटोऽन्य इत्येवं स्वस्वकार्यरूपयोः विषययोर्भेदात् बीजमङ्कुरस्यैव कारणम् न घटस्येत्युच्यते चेत् तर्हि उक्तलक्षणभेदे "एतद्" इति, बीजस्याङ्कुरं प्रति कारणत्वं घटादि प्रत्यकारणत्वं च न विरुध्यते इति अयमवसरः समयः केन वितीर्णः बीजादेः ? कारणाकारणतापरामृष्टबीजमङ्कुरं प्रत्येव कारणं भवति न तु घट इत्येवं-

---

1—वितीर्णो वरः—K. S. S. This reading seems to be a better one; but according to our usual practice, we have adopted the reading of the commentator.

2—संबन्धिनी—C.

3—द्व....................लनं—C.

4—मृजन्यो..................त्येवं—C.

संवेदनेन इति चेत् 'चलति' इत्यादौ संवेदनमेव अस्माभिः प्रमाणीकृतं किमिति न सह्यते, विषयभेदोऽपि च अत्र वक्तुं न न शक्यते; तथाहि —आभासान्तरेण असंभेदने तदेकाभासमात्रम्, अत एव अन्यापेक्षा-वियोगात् अन्तरङ्गत्वात् आन्तरम् अनुवर्तमानं तथाभूताभासमात्र-ग्रहणोचितान्तःकरणवेद्यतया च आन्तरं तथास्वरूपापरिच्युतेः तत्त्वम् आभासान्तरयोगेन तननसहिष्णुत्वाच्च तत्त्वम् 'एकम्' इति प्रतीयते, तदेव देशाभासेन इह अमुत्र इति, कालाभासेन अधुना तदानीमिति, स्वभावाभासेन कृशः स्थूल इत्यादिना, मिश्रतया अनेक-मिति बाह्येन्द्रियवेद्यतायां प्रतीयते। तथा

'स्वामिनश्चात्मसंस्थस्य..................।'

---

भूतेन स्वानुभवेन इति चेत् चलतीत्यादौ अपि चलतो देवदत्तस्य तत्तद्देशकालाकारभिन्नत्वादनेकत्वं स एवायमिति प्रत्यभिज्ञाविषयत्वादेकत्वमिति वस्तुत एकत्वानेकत्वे स्वसंवेदनमेवास्माभिः प्रमाणीकृतम् इति किमिति न सह्यते। अत्र-एकानेकत्वे, विषयभेदोऽपि वक्तुं शक्यत एव। तथाहि देश-कालादीनाम् आभासान्तरेणासंभेदने[1] तत्-चैत्रादिरूपम्, एकाभासमात्रम् "अत एव" इति, एकाभासमात्रत्वादेवेतरापेक्षायोगात्[2], अनुवर्तमानम्-अवि च्छेदेन स्फुरत्। आन्तरम्-अन्तर्मुखम्। "तथाभूत" इति देशाद्यविशिष्टैका-भासमात्रग्रहणोचितान्तःकरणवेद्यतया चान्तरं तथाविधान्तर्मुखस्वरूपापरिच्युतेः तत्त्वम्—परमार्थभूतम्॥ किञ्च—

"गुणादिस्पन्दनिष्यन्दाः सामान्यस्पन्दसंश्रयात्।"

इत्युक्तनीत्या सामान्यस्पन्दरूपत्वेन निखिलव्यक्तिरूपाभासान्तरयोगेन तननसहिष्णुत्वाच्च तत्त्वम्-सर्वानुस्यूतम् एकमिति च प्रतीयते "तदेव" इति, एषामान्तरं तत्त्वमेव, इहामुत्रेति देशाभासेन अधुना तदानी-मिति कालाभासेन कृशः स्थूल इत्यादिना स्वभावाभासेन च मिश्रीभूतम् अत एव अनेकमिति बाह्येन्द्रियवेद्यतायां प्रतीयते। किं च

"स्वामिनश्चात्मसंस्थस्य"

---

1—आभासान्तरेणासंवेदने—C.

2—त्वादेवेशापेक्षायोगात्—C.

इति उक्तनीत्या विश्वमेव आन्तरं सत् एकम्, तदेव

"सान्तर्विपरिवर्तिनः उभयेन्द्रियवेद्यत्वम्"

इति वक्ष्यमाणकार्यकारणभावतत्त्वदृष्ट्या इन्द्रियवेद्यतायामनेकम्, देशाद्याभासमिश्रणात् इति। एकत्वम्–आभासान्तरामिश्रतायामन्तःकरणैकवेद्यत्वे चिन्मात्रतायाम्, अनेकत्वं पुनर्—आभासान्तरमिश्रतायाम् उभयकरणवेद्यत्वे चिदतिरिक्तताभासने च, इति स्फुटो विषयभेदः, तस्यैव च तथात्वम् इति परामर्शबलादेव कारणाकारणवत् उपादानसहकारिवत्। अथ व्यपदेशमात्रम् एतत् 'कारणम् अकारणं च' इत्यादि, तदिहापि एकमनेकमिति व्यवहारमात्रम्, नीलं पीतम् अविकल्पकं सविकल्पकम् इत्यपि सर्वं मायापदे व्यवहारमात्रम् इति-

---

इत्यत्र सत् स्वामिवद् एकम्–अविभक्तम्। तादृग्विधं विश्वमेव अन्तर्विपरिवर्तिनः उभयेन्द्रियवेद्यत्वमिति वक्ष्यमाणकार्यकारणभावतत्त्वदृष्ट्या इति वस्तुन एकानेकत्वे[1] पुनरपि स्पष्टीकृते[2] देशकालादिरूपा[3]भासमिश्रितामिश्रितस्यैव। "एकत्वमाभासान्तरामिश्रतायाम्" इत्यादिना "स्फुटो विषयभेदः" इत्यन्तेन ग्रन्थेन वस्तुन एकत्वानेकत्वे पुनरपि विषयभेदेन स्पष्टीकृते। तथात्वम्—सहजमेकत्वं तदेवेदमिति प्रत्यभिज्ञानबलादेव, यथा बीजात्मनः। "कारणाकारणवदुपादानसहकारिवत्" इति। यथा एकस्यैव बीजात्मनो वस्तुनः अङ्कुरं प्रति कारणत्वं घटादि प्रत्यकारणत्वमिति कारणाकारणात्मकं द्विरूपं प्राप्तम्। किञ्च एकस्यैव मृदात्मनो वस्तुनः घटं प्रत्युपादानत्वमङ्कुरं प्रति सहकारित्वमिति द्विरूपं प्राप्तम्। तद्वदेकस्यैव वस्तुनः अन्तरन्तःकरणैक-

---

1—एकात्वानेकत्वे दृष्ट्या पुनरपि विषय................C. 'दृष्ट्या' coming after एकत्वानेकत्वे does not seem to fit in with the rest of the sentence. We have therefore. omitted it. The missing text has been tentatively restored.

2—स्पष्टीकृत—C.

3—देशकालादि...............C. The missing text has been tentatively restored.

सर्वं समानम्, तस्मात् एकत्वानेकत्वविरोधो न बाधकः, तदेतत् एवकारेण उक्तम्। तत्र इति, तेषु क्रियादिषु यत् आन्तरं तत्त्वं तदेकम्, तदेव इन्द्रियवेद्यतां[1] प्राप्य देशादिभेदात् अनेकतां याति इति संबन्धः, तत्र इति सत्यत्वे स्थिते, तयोर्वा एकत्वानेकत्वयोः मध्ये 'एकत्वमेवम् अनेकत्वमेवम्'इति वा योजना[2] ॥ २ ॥

---

विषयत्वादेकत्वं बहिर्देशकालाकारकलितत्वेनानेकत्वमित्येकत्वानेकत्वविरोधो न बाधकः ॥ अथ बीजमंकुरं प्रति कारणं घटादि प्रत्यकारणम्, आदिग्रहणात्[3] मृद् घटं प्रत्युपादानकारणमंकुरं प्रति सहकारिकारणमित्येतादृग्व्यवहारमात्रम न वस्तुस्वरूपपरामर्शनम्[4]। तत् तर्हि, इह मायापदेऽपि वस्तुनश्चिन्मयत्वेऽपि अन्तरेकं बहिरनेकं नीलं पीतमविकल्पकम् सविकल्पकमित्येकानेकनीलपीताविकल्पकसविकल्पकज्ञातृज्ञानादिकं[5] सर्वं व्यवहारमात्रमिति[6] भवदुक्तमस्मदुक्तं च सर्वं समानम् ॥ "तदेत्" इति, एकानेकत्वम्, "तदेवेन्द्रियवेद्यताम्" इत्येवकारेणोक्तम्, तदेव विवृणोति "तत्र" इति॥ तेषु पूर्वोक्तेषु, क्रियादिषु यद् "आन्तरं तत्त्वम्" इति, तदाश्रयभूतमहन्तारूपमेकं तत्त्वं यत्तदेवेन्द्रियवेद्यतां प्राप्य देशादिभेदात्[7]—बहिरनेकतां यातीति संबंधः। तत्रेति[8] सत्यत्वे स्थित इत्यादि इति वा योजना इत्येतदन्तमन्वय एव दर्शितः[9] ॥ २ ॥

---

1—इन्द्रियवेदनीयताम्—K. S. S.
2—इति योजना—K. S. S.
3—आदिग्रहणाद् घटं—C.
4—वस्तुस्वरूपपरामर्श—C.
5—सविकल्पकः ज्ञातृज्ञानं—C.
6—सव्यवहारमात्रमिति—C.
7—देशादिभेदवत्—C.
8—"तत्रेति वा सत्यत्वे—C.
9—अन्वय एव दर्शितम्—C

ननु एवं विषयभेदे अभ्युपगम्यमाने यदा एकं प्रतिभातं भवति तदा न अनेकम्, अनेकप्रतिभासे च न एकं प्रतिभातम्, इति कथम् एकानेकरूपं वस्तु स्यात्, तथाहि बाह्येन इन्द्रियेण चैत्रो विचित्रदेशकः परम् अनुभूयते, न तु अनेकाभाससंमिश्रीकारे बाह्येन्द्रियजस्य अविकल्पकस्य व्यापारः--संनिहितविषयबलोत्पत्तेः अविचारकत्वात् इत्याहुः, विकल्पेनापि मानसेन तथाभूतं वस्तु नैव स्पृश्यते इति कया धिया वस्तु एकानेकरूपं गृह्येत ? इति परव्यामोहनिबर्हणाय आह—

तद्द्वयालम्बना एता मनोऽनुव्यवसायि सत् ।
करोति मातृव्यापारमयीः कर्मादिकल्पनाः ॥ ३ ॥

---

"ननु" इति अन्तर्बहीरूपतया एकानेकत्वयोर्विषयभेदे अभ्युपगम्यमाने तद्वस्तु यदैकमिति प्रतिभाति तदैव नानेकं भाति, तस्यैवानेकत्वेन प्रतिभासे यदा तदेवानेकत्वेन प्रतिभाति तदैकत्वप्रतिभासो नास्ति इति कथं वस्तु एकानेकरूपं स्यात् । एकस्य चिद्वस्तुनः एकानेकत्वे गृह्यमाणे सति युगपदेवैकत्वानेकत्वाभावादेकानेकत्वं न भवतीत्यर्थः । तदेव प्रतिपादयति "तथाहि" इति । गच्छंश्चैत्रः केवलं बाह्येन्द्रियेणैव तत्तद्विचित्रदेशगोऽनुभूयते । तस्मिन्नेकस्मिंश्चैत्रदेहे अनेकत्वहेतुभूत[1]देशकालाद्याभाससंमिश्रीकारं प्रति वस्तुमात्रप्रतिभासरूपस्य देशकालाद्यविशिष्टवस्तुमात्रविषयस्य निर्विकल्पस्य व्यापारो नास्तीति । सहसोपनिपतितविषयवशोत्पन्नस्य निर्विकल्पस्य[2] तद्विषयविशेषणभूतं विकल्पसमयभाविनं देशकालादिं प्रत्यविचारकत्वात् । सर्वश्चायं विकल्पो अनुभवमूलः इत्युक्तनीत्या तत्पृष्ठपातिना[3] मानसेनापि विकल्पेन तथाभूतमेकानेकं वस्तु नैव स्पृश्यते ।

किन्तु नैसर्गिको ज्ञाने बहिराभासनात्मनि ।
पूर्वानुभवरूपस्तु स्थितः स स्मरणादिषु ॥

इत्युक्तनीत्या निर्विकल्पकविषयवत्त्वात्तस्य, इति कया धिया इति इतिनिर्विकल्पधिया सविकल्पधिया वेति । अनात्मवादिनः ज्ञानसन्तानमेव तत्त्वमिति मन्यमानस्य परस्य व्यामोहनिबर्हणायाह "तद्द्वया" इति ॥

---

1—अनुकत्वहेतुभूत—

2—निर्विकल्पः स्यात् तद्विषमविशेषणः भूतविकल्पसमय—भाविनं—C.

3—तत्पृष्ठनीया—C.

इह ज्ञानमालाया अन्तःसूत्रकल्पः स्वसंवेदनात्मा प्रमाता जीवितभूतः इति उपपादितं प्राक्, स च स्वतन्त्र इत्यपि निर्णीतम्, स तु विशुद्धस्वभावः शिवात्मा, मायापदे तु संकुचितस्वभावः पशुः, तदस्य मनःसमुल्लासावसरे विकल्पभूमिकायां स्फुट उल्लासः, ऐन्द्रियके निर्विकल्पके सदाशिवेश्वरदशाभ्युदयात्, अविकल्पबोधाबहिर्भूतस्य

---

**तद्द्वय** इति, चैत्रघटादेर्वस्तुनः तदिति पूर्वोक्तमेवैकत्वानेकत्वद्वयम्[1]-वलम्बन्त इति "तद्द्वयालम्बनाः" "**एताः**" इति, "क्रियासंबन्ध" इत्यनेन ग्रहणकसूत्रेण सूचितास्तत्क्रियाद्याश्रयप्रमातृप्रमेयव्यापारमयीः व्यापारस्वरूपाः क्रियादिबुद्धीः[2] ॥ "**मनः**[3]" इति, निर्विकल्पविकल्पानन्तरभाव्यध्यवसायात्मक[4]-निश्चयमन्तःकरणमेव करोति इति संकल्पाभिमानाध्यवसायात्मकस्वस्वव्यापारसाधनमन्तःकरणमेव करोति।

"इह ज्ञानमालायाः" इति, अनुभवादिरूपाया ज्ञानशक्त्याद्याह्निकत्रयनिरूपिताया ज्ञानमालायाः, "अन्तः" इति, अन्तारूपत्वेन सूत्रकल्पधारकः जीवितभूतः कश्चित् प्रमाता अस्तीति "प्राग्" इति एकाश्रयनिरूपणाह्निके, उपपादितम्, सच प्रमाता महेश्वरनिरूपणेनाष्टमेनाह्निकेन स्वतन्त्र इत्यपि निर्णीतम्। स च सद्गुरुकटाक्षवेधेन विगलितमायाकालुष्यो यदा भवति तदा स विशुद्धस्वभावः शिवात्मा, इदन्ताप्रतिभारूपे मायापदे पुनः शिवैकरूपोऽपि तया तिरोहितत्वात् चैत्रोऽहं मैत्रोऽहमिति संकुचितस्वभावः पशुः।

अस्य-पशुरूपस्य प्रमातुः, मनस इति, प्रोक्तरूपस्यान्तःकरणस्य, समुल्लासावसर इति, संकल्पाभिमानादिस्वस्वव्यापारं प्रति सम्यगुल्लासावसरे, अहमत्रत्यः अस्मिन् काले वर्त्तमानः एवमाकार इति विकल्पभूमिकायां स्फुट उल्लासः। देशकालाद्यविशिष्टाहमिदमिति ऐन्द्रियके निर्विकल्पके अप्रत्यभिज्ञा-

---

1—एवमेकत्वानेकत्व—C.

2—क्रियाधिबुद्धिः—C.

3—नन्विति—C.

4—निर्विकल्पविकल्पानन्तरभावि अध्य..........विश्चयः..........सन् अनः..........व्यवसायात्मकः स्वे स्वे व्यापारसाधनम्—C.

विमर्शव्यापारः[1] । पश्चाद्भाविनं व्यवसायं निश्चयात्मकं विकल्पकम् अनुव्यवसायशब्दवाच्यं विदधदन्तःकरणम् एतान् क्रियासंबन्धादि-विकल्पान् संपादयति । ते च विकल्पाः तद्द्वयम् एकत्वानेकत्वरूपम् अवलम्बन्ते, नहि विकल्पेषु प्रतिभासमानम् अवस्तुसत्[2] इति हि उक्तम्

---

नतोऽपि प्रथमं देशकालाविशिष्टमेवेदमिति प्रथनकाले[3], अहमिदमिदमहमित्यस्यैव सदाशिवेश्वरतयाभ्युदयात्[4] एवंभूतमैन्द्रियकं निर्विकल्पं विकल्पबुद्धिरूपान् क्रियासंबन्धान् न करोतीत्यर्थः ॥

"साक्षात्कारक्षणेप्यस्ति विमर्शः"

इत्युक्तनीत्या एवंभूताविकल्पकबोधाबहिर्गतस्य विमर्शव्यापारः । "अनुव्यवसायि" इति, अनु-पश्चाद्भावित्वात् व्यवसायशब्दवाच्यं[5] व्यव-सायं निश्चयात्मकं विकल्पं विदधत्, "मनः" इति, अन्तःकरणमेतान् क्रियासम्बन्धादीन् "करोति" संपादयति । "तद्द्वयालम्बना" इति, ते च विकल्पाः एकत्वानेकत्वरूपं तद्द्वयमवलम्बन्ते । इह स्मृतिविकल्पे तावदर्थोऽध्यवसीयते । अन्यथा सुप्तमूर्च्छितकल्पतापत्तिः, एवं च यावदध्यव-सायोऽर्थस्य तावदर्थादिति सामर्थ्यादिदमभ्युपगन्तव्यम् यत् सोऽर्थः प्रकाशते । अप्रकाशमाने अध्यवसातव्ये अध्यवसायोऽन्धप्रायः स्यादित्यत्र न हि विकल्पेषु प्रतिभासमानम् अवस्तुसदित्युक्तम्[6] ।

"सत्ता प्राकाश्यमेव हि"—

---

1—अविकल्प.........व्यापारस्य पश्चाद्भाविनम्—K. S. S. The reading as printed, has been adopted on the basis of the commentary, but this also yields a good meaning.

2—अवस्तु तत्—K. S. S.

3—प्रथकाले—C.

4—सदाशिवेश्वरदयाभ्युदयात्—C.

5—व्ययसायिशब्दवाच्यम्—C.

6—न हि विकल्पेषु प्रतिभानमस्तु सदित्युक्तं—C.

'प्रकाशतैव वस्तुत्वम्' इति । न च विकल्पस्य प्रकाशरूपतां मुक्त्वा आरोपणाध्यवसायाभिमानादिनामधेयं व्यापारान्तरं युक्तम्, ततोऽबाह्ये बाह्यम् आरोपयन्ति इत्यादि वचो वस्तुशून्यम्. तच्च एतत् उक्तम्

'भ्रान्तित्वे चावसायस्य·············।'

इत्यत्र । अथ ब्रूयात् परो यत् इन्द्रियज्ञानेन प्रकाशनीयं स्वलक्षणं तत् कथं विकल्पः स्पृशेदिति, भवेदेवं—यदि विकल्पो नाम स्वतन्त्रो भवेत्, यावता प्रमातुरसौ व्यापारः प्रमाता च पूर्वानुभवान्तःस्वसंवेदनरूपः तदस्य च अयमेव पूर्वानुभवसंस्कारो यत् विकल्पनव्यापारकालेऽपि पूर्वानुभवात्मत्वम् अनुज्झन्नेव आस्ते, ततः पूर्वानुभवो यावत् स्वलक्ष-

---

इति श्रीमत्तन्त्रवटधानिकोक्तनीत्या वस्तुनः प्रकाशतैव वस्तुत्वम्—स्वरूपम्, वस्तुन्यप्रकाशिते **विकल्पस्य** तस्मिन् वस्तुनि इदं गुञ्जाफलं वा वह्निर्वा, गुञ्जाफलमेव वह्निरिति, ममैवेदं-गुञ्जाफलमिति क्रमेण मनोबुद्ध्यहंकारव्यापारसाध्यं—व्यापारान्तरं न युक्तम् । "ततोऽबाह्ये बाह्यम्"[1] इत्यादि, ततः इति, वस्तुनः प्रकाशपरमार्थत्वात्, अबाह्ये ज्ञानसन्ताने, स्वतोऽसदपि बाह्यम् नीलादि, शुक्तौ रजतवद् आरोपयन्तीत्यादि वचो वस्तुशून्यम्, न परमार्थः । "तच्चैतत्" इति, तदेतत्—प्रमेयम् ।

"भ्रान्तित्वे चावसायस्य" ।

इत्यत्रोक्तम् । "अनुव्यवसायि" इत्युक्तमुद्दिश्याह निर्विकल्पप्रमाणादिज्ञानेन प्रकाशनीयं वस्तु-कथं विकल्पः स्पृशेद् इति । भिन्नविषयत्वादिति परो ब्रूयात् । "भवेदेवम्" इति, प्रमातारं विना यदि विकल्पः स्वयमेव स्वतन्त्रो भवेत्, तर्हि तदा विकल्पः निर्विकल्पविषयं स्प्रष्टुं न समर्थः । "यावता" इति, विकल्पः प्रमात्रा विना विषयप्रवृत्तौ स्वतन्त्रो न भवति तस्मात् असौ विकल्पः, मानसं विकल्पज्ञानम्, प्रमातुः एव व्यापारः, प्रमाता च अयं घट इति पूर्वानुभवान्तर्मुखसंस्कारात्मकस्वसंवेदनरूपः । तस्य प्रमातुः "अयमेव" इति, अनुभवपृष्ठपातिनिर्विकल्पकव्यापारे "पूर्वानुभवात्मत्वम्"[2] इति, पूर्वानुभूतं वस्तु तं देशं तं कालमित्येतत् तस्य वस्तुनः तद्विशेषणभूतयोर्देशकालयोश्च विमर्शम् अनुज्झन्ने-

---

1—ततो अबाह्यं बाह्यं—K. S. S.

2—पूर्वानुभवत्वम्—C.

णप्रकाशनात्मा तावत् पूर्वानुभवतादात्म्यापन्नप्रमातृतत्त्वव्यापारोऽपि विकल्पस्तद्विषय एव, अत एवमुक्तम् आचार्येण

'पूर्वानुभवसंस्कारः प्रमातुरयमेव सः।
यदपोहनकालेऽपि स पूर्वानुभवः स्थितः॥'

इति। तस्मात् प्रमातुः यो व्यापार एकत्वानेकत्वसंयोजनात्मा स एव प्रकृतो यत्र तादृशीः क्रियादिकल्पना एकानेकवस्तुविषया 'एता' इति ग्रहणकवाक्यसूचिता मन एव करोति इति स्थितम्, यद्यपि

---

वास्ते यत्तद्वयं विमर्श एव संस्कारः प्रमातरि संस्कारात्मना वर्तमानः पूर्वानुभवो यावत्–स्वविषयप्रकाशनात्मा तावत्तादात्म्यापन्नं स्मरणाद्यपि तथा निर्भासते" इत्युक्तनीत्या तादृग्विधपूर्वानुभवतादात्म्यापन्नः प्रमातृव्यापारोऽपि विकल्पः तावत् पूर्वानुभवविषय एव। अत एव हेतोराचार्यैः श्रीमदुत्पलदेवपादैरुक्तम्:–

पूर्वानुभवसंस्कारः प्रमातुरयमेव सः।
यदपोहनकालेऽपि स [1]पूर्वानुभवः स्थितः॥

इत्यादि। प्रमातुरयमेव पूर्वानुभवसंस्कारः [2]यत् प्रमाता अपोहनकालेपि पूर्वानुभवः स्थित इति। "तस्माद्" इति, प्रमातृव्यापाररूपात्, एकैकस्मिन् वस्तुनि एकत्वानेकत्वसंयोजना[3]त्मा यो विकल्पात्मा व्यापारः। "व्यापारमयीः" इति, स व्यापार एव प्रकृतं रूपं यासां तादृशीः क्रियादिकल्पनाः, "एताः" इति ग्रहणकवाक्यसूचिताः क्रियादिकल्पनाः मन एव करोतीति स्थितम्। [4]तृतीयेनानिर्विकल्पकसंवेदनसंवेद्यत्वेऽपि विकल्पकाल एव स्फुटमेषां रूपमिति

---

1—यदपादन..............भवस्थितः—C.

2—यत् is found after इत्यादि and before तस्मात् in the MS. but its right place seems to be as printed.

3—एकात्वानेकत्व.........यो—C.

4—स्थितम्। तृतीयेन—C. 'तृतीयेन' probably refers to the 3rd pāda of the kārikā under discussion.

अविकल्पेऽपि सामान्याद्यवभासो घटमात्रावभासादौ, तथापि न तदा सामान्यादि स्फुटम्, समानोपरञ्जकत्वे संबन्धिद्वयोद्भवे क्रमिकक्षण-संतानात्यागे अवयवकदम्बकस्वीकारे अवध्यवधिमत्परिग्रहादौ सामान्यसंबंधक्रियाद्रव्यदिगादिपदार्थस्य परमार्थतः स्फुरणात्, इति 'मानसविकल्पग्राह्या एकानेकरूपाः सामान्यादयः' इति स्थितम् । एवं च संवृतिः विकल्पबुद्धिः, तद्वशात् उच्यतां संवृतिसत्यत्वं सत्यत्व-स्यैव तु प्रकारः तत्, इति द्विचन्द्रादिवत् न असत्यता ॥ ३ ॥

तत्र च अयं संविदवतरणक्रमो यत् क्रियाशक्तेरेव अयं सर्वो

---

पूर्वोक्तनीत्या विशेषणविशिष्टघटमात्रावभासादौ अविकल्पेऽपि सामान्यसम्बन्धा-द्याभासो यद्यपि, 'तदा' इति निर्विकल्पावस्थायाम् तथापि सामान्यादि[1] स्पष्टतया न प्रकाशते । तदेव प्रतिपादयति "तथापि सामान्यादि" इत्यनेन । घटगतं घटत्वं सर्वदेशगतघटानुस्यूतमिति समानोपरञ्जकत्वे अपि द्विष्ठः संबन्ध इत्युक्तनीत्या संबन्धस्य द्विष्ठत्वात् राज्ञः पुरुष इति वक्ष्यमाणनीत्या राजपुरुषा-त्मकसम्बन्धिद्वयोद्भवे गच्छतश्चैत्रस्य क्रियायाः पूर्वापररूपपदविक्षेपात्मकक्रमिकक्ष[2]-णसन्तानात्यागे घटादेर्मुखादिकदम्बकावयवस्वीकारे, अस्माद्घटादयं घटः पूर्वभागे स्थितः अयं पश्चाद्भाग इति, तस्मात् चैत्रादयं मैत्रः पुरत एव जातः अयं पश्चाजात इति अवध्यवधिमत्परिग्रहादौ इति क्रमेण सामान्यादेः कालान्तस्य[3] वस्तुनः स्फुरणान्मानसविकल्पग्राह्या एकानेकरूपाः सामान्यादय इति स्थितम् ॥ "एवं च" इति, असत्यं सत्यं संवृतिसत्यमिति भवदुक्ता संवृतिः विकल्पज्ञानम् । "तद्वशाद्" इति, परमार्थरूपविकल्पबुद्धिमयत्वात् संवृतेरपि सत्यत्वमुच्यताम्, तत् संवृतिसत्त्वं सत्यस्यैव तु प्रकार इति भवदुक्तेः संवृति-सत्यरूपस्य[4] क्रियादेः द्विचन्द्रादिवत् नासत्यता ॥ ३ ॥

तत्र—संवृतिसत्यकथनेऽपि, अयम्—क्रियादिकालपर्यन्तः सर्व एव

---

1—तथापि हि सामान्यादि—C.

2—पूर्वापररूपपदविस्नेशात्मक क्रमिकक्षणं सन्तान—C.

3—कालान्तरस्य—C.

4—सम्प्रतिसत्यम्—C.

विस्फारः, तत्रापि सम्बन्ध एव मूलभूतः, तथाहि—समानानां यत् एकं भाति तत् सामान्यम्, देवदत्तस्य यत् वैतत्यं सा क्रिया, अवयवानां यदैक्यं वैतत्यं च देशतः सोऽवयवी, इमम् अवधिं कृत्वा अयम् इत्थम् ततोऽस्य अयं पुरस्तात् इत्यादिर्दिक्, अस्यायं क्रियाप्रतानः सहभावेन आस्ते विनाभावेन वा इति वर्तमानादिः कालः, यावत् हि प्रातिपदिकार्थस्य पृष्ठपाति वपुः भाति तदतिरिक्तं सर्वं संबन्ध एव इति कारकाणामपि संबन्धरूपतैव, केवलं क्वचित् असौ संबन्धो व्यपदेशान्तरग्रन्थिं सहते. यथा सास्नादिमतां संबन्धो 'गावः' इति एकव्यप-

---

संबन्धः, क्रियाशक्तिमय्याः संविद एवावतरणक्रमः, क्रियाशक्तिमयी संवित् क्रियादिरूपेणावतीर्य स्फुरतीत्यर्थः । यथोक्तम् :--

"यतो नासौ कश्चिद्भावो[1] य एवं विकल्प्यते संविदेव हि तथा भाति तथा भानमेव तस्या ऐश्वर्यम्"

इति । तत्र—क्रियादावपि, मूलभूतः क्रियादिः कालपर्यन्तः सर्वः सम्बन्धरूप एव ॥ तदेव प्रतिपादयति-"तथाहि" इत्यादिना ॥ समानानाम्—घटादिव्यक्तीनाम्, यदेकम्—अनुस्यूतं भाति तत्—घटत्वं सामान्यम् । गच्छतो देवदत्तस्य देशतः कालतः आकारतश्च यद्वैतत्यम् घटादेर्मुखाद्यवयवानामेकघटस्वरूपविश्रान्तत्वात् यदैक्यम् तदाधारभूतलव्याप्त्यां यत् वैतत्यं च सोऽवयवी, इमम् शैलम् अवधिं कृत्वा अयम्—शैलः,इत्थं-पुरस्तात् इति प्रागादिः दिक्, अस्य-चैत्रस्य, अयं क्रियाप्रतानः तस्य सहभावेन वर्तते[2] इति गच्छतीतिरूपो वर्तमानः कालः । गमनादिरूपक्रियाप्रताने देवदत्तेन सहाऽवर्तमाने[3] अभूत् भविष्यतीति भूतादिः कालः । एकाश्रयरूपदेवदत्तनिष्ठत्वात् एकत्वेऽपि तत्तद्देशव्याप्त्या क्रियायामेकानेकरूपत्वम् । एवं सामान्यादीनामप्येकानेकरूपत्वम् । वृक्षादेर्वस्तुसत्तारूपप्रातिपदिकार्थपृष्ठपाति वृक्षस्तिष्ठति वृक्षेण स्थीयते इत्याद्यधिकरणपर्य्यन्तं यावद्वपुर्भाति तत्सर्वं संबन्ध एव । असौ संबन्धः क्वचित् सामान्यादिव्यवहारं व्यपदेशान्तरग्रन्थिं सहते तदानीं सामान्यादिसंज्ञया व्यव-

---

1—कश्चिद्भावं--C.

2—वर्तते गच्छतीतिरूपो--C.

३—देवदत्तेन सह वर्तमानैः—C.

देशसहिष्णुः तत्र सामान्यादिव्यवहारः, व्यपदेशान्तरग्रन्थिभङ्गे तु संबन्धवाचोयुक्तिरेव, अत एव दिष्टिप्रस्थपलादिप्रमाणपरिमाणोन्मानरूपं तत्र अन्तर्गतं वा अणुमहदादि संख्यापृथक्त्वादि च यत् तत् सर्वं संबन्धस्यैव विजृम्भितम्, येऽपि सामान्यादि वस्त्वन्तरम् अमंसत तेऽपि तत्र समवायम् अभ्युपजग्मुः जीवितत्वेन, समवायश्च संबन्धात्मा तदनुग्राह्यो वा केषांचित्, यत आहुः—

'समवायाख्यां तां शक्तिमनुगृह्णाति संबन्धः।' इति

---

ह्रियते। अत्र दृष्टान्तमाह यथा सास्नादिमतां कपिलादिगोपिण्डानामनुस्यूतो गोत्वरूपः संबन्धो गाव इति बहुवचनात्मकैकव्यपदेशसहिष्णुः, तत्र—व्यपदेशान्तरग्रन्थिसहने, सतः सामान्यादिना संबन्धस्य व्यवहारः। उक्तरूपव्यपदेशग्रन्थ्यभावे संबन्धवाचोयुक्तिरेव—सम्बन्धः स इत्येव व्यह्रियते। "अत एव" इति—कारकाणां संबन्धरूपत्वात्, दिष्टिहस्तादिभिः परिमेयक्षेत्रमानं तस्य पूर्वापराभ्यां मानाभ्यां संबन्धः दिष्टिमात्रस्य क्षेत्रस्य पूर्वापरदेशाभ्यां सम्बन्धः, प्रस्थद्रव्ययोः संबन्धः प्रस्थद्रव्यगतस्य परिमाणस्य पूर्वापरपरिमाणाभ्यां संबन्धः पलादेरुन्मानस्य उन्मेयेन स्वर्णादिना सह संबन्धः पूर्वापरोन्मानाभ्यां चेति प्रमाणपरिमाणोन्मानरूपम्। तत्र दिष्टिप्रमाणपरिमाणांतर्गतं चाणुत्वमहत्त्वसंख्यापृथक्त्वादि च यत् तत्सर्वम्—लोकव्यवहाररूपं तत्सर्वम्, संबन्धस्यैव विजृम्भितम्। ये केचित् सामान्यादिसंबन्धं घटवत् पदार्थान्तरम् अमंसत तेऽपि समवायं तत्राभ्युपजग्मुः जीवितत्वेन "समवायश्च संबन्धात्मा तदनुग्राह्यः" इति संबन्धानुग्राह्यः समवाय इति केषांचिन्मतम्। तदेवाह।

"समवायाख्यां तां शक्तिमनुगृह्णाति संबन्धः"

---

१—मुष्टिप्रस्थपलादि—K.S.S.

२—तां शक्ति समवायाख्यामनुगृह्णाति संबन्धः—K. S.S.

३—संबन्धं—C.

४—पूर्वापरदशाभ्याम्—C.

५—फलादेः—C.

६—इति केषाञ्चिन्मते—C.

यदपि च कारकं तदपि क्रियामुखप्रेक्षि,[1] सापि कालं प्राणेश्वरम् आश्रयति, सोऽपि क्रियाद्वारेण सर्वभावात्मा सम्बन्धम् उद्धुरयति इति संबन्धाधीनैव इयं चित्रा लोकयात्रा। यदाह[2] आचार्य एव :–

'भेदाभेदात्मसंबन्धसहसर्वार्थसाधिता।

लोकयात्राकृतिर्यस्य स्वेच्छया[3] नौमि तं शिवम् ॥' इति।

अतः संबन्धमेव प्रथमं निरूपयितुम् आह :–

**स्वात्मनिष्ठा विविक्ताभा भावा एकप्रमातरि।**

**अन्योन्यान्वयरूपैक्ययुजः संबन्धधीपदम् ॥ ४ ॥**

---

इति। उक्तमेवार्थं स्पष्टीकरोति "यदपि च कारकम्" इति।

"क्रियाविमर्शविषयः कारकाणां समन्वयः"

इति वक्ष्यमाणनीत्या तिष्ठतीत्यादिमुखप्रेक्षि। सापि—क्रिया, स्वात्मनः प्राणेश्वरं भूतादिं कालमाश्रयति। सोऽपि कालस्तिष्ठत्यादिक्रियाद्वारेण तत्तिष्ठत्यादिक्रियाश्रयभूतसर्वभावात्मा सम्बन्धमुद्धुरयतीति सम्बन्धाधीनेयं विचित्रा लोकयात्रा ॥ यदाहाचार्य एव :—

भेदाभेदात्मसंबन्धसहसर्वार्थसाधिता।

लोकयात्राकृतिर्यस्य[4] स्वेच्छया नौमि तं शिवम् ॥

इति लोकयात्रायाः क्रियारूपायाः संबन्धमयत्वात् संबन्धमेव प्रथमं निरूपयति। राजाद्याभासरूपाः पुरुषाद्याभासरूपाश्च **भावाः स्वात्मनिष्ठाः**- स्वस्मिन्नेव रूपे विश्रान्ताः, अत एव **विविक्ताभाः**– अन्योन्यभिन्नप्रकाशाः,

---

१—सर्वभावान् सापि—K. S. S.

२—तदाह—K. S. S.

३—The verse as quoted in the K. S. S. edition is incomplete. It has been completed with the help of the commentary, where it is given in full.

४—The manuscript shows a gap after the quotation. We have tentatively filled up the gap as printed.

राजा पुरुषश्च बहिस्तटस्थौ स्वात्मैकपरिसमाप्तौ प्रमातृभूमौ यदैक्यं गच्छतः, न च ऐक्यमात्रं तयोः भेदविगलनापत्तेः, अपि तु परस्पररूपश्लेषात्मकं युगपदेव निमज्जदुन्मज्जद्भेदाभेदकोटिद्वयदोलारोहणलक्षणम् अन्वयरूपम्, तदा तावेव सम्बन्धधिय आलम्बनं भवतो 'राज्ञः पुरुषः' इति, तथाहि—राजा यदा पूर्वं धिया गृहीतोऽपि न स्वात्मविश्रान्त्या तुष्यति तदा रूपान्तरेण पुंसा श्लेषं भजन् कृतार्थीभवति, पुरुषोऽप्येवं, स च एष रूपश्लेष एक एव उभयोः चिदात्मनि

---

एकप्रमातरि-राजपुरुषाद्याभासग्राहके[1] एकस्मिन् प्रमातरि, अन्योन्यान्वयरूपमैक्यं भजन्ते यदा तदा त एव संबन्धधियः पदम् आलम्बनं भवन्ति ॥

"विविक्ताभाः" इति, उभयग्राहकप्रमात्रन्तःकरणविश्रान्तेः पूर्वं बहिस्तटस्थौ—अन्योन्यासंपृक्तौ, "स्वात्मनिष्ठाः"[2] इति, अत एव स्वात्मैकपरिसमाप्तौ[3]—स्वस्वरूपमात्रविश्रान्तौ, तदुभयग्राहकप्रमातृभूमौ[4] यदैक्यं गच्छतः तदैक्यं तत्प्रमातृतादात्म्यरूपं न भवति। तयोः—राजपुरुषयोः, राजपुरुषत्वविगलनापत्तेः, अपि तु राजपुरुषेण परस्पररूपश्लेषात्मकं युगपद्-एकदैव निमज्जदुन्मज्जत्पुरुषराजाभासरूपभेदाभेदस्रोतोद्वयवेलारोहणलक्षणसमन्वयरूपं यदैक्यं गच्छतः तदा तावेव सम्बन्धधिय[5] आलम्बनं भवतः राज्ञः पुरुष इति ॥ तदेव प्रतिपादयति तथा हि इति। पुरुषदर्शनात् पूर्वं राजाभासग्राहकस्य प्रमातुः धिया गृहीतोऽपि पुरुषाभासविविक्तस्वात्मविश्रान्त्या यदा स राजा न तुष्यति तदा रूपान्तरेण पुंसा[6] श्लेषं भजन् कृतार्थीभवति। पुरुषोऽपि स्वात्मविश्रान्त्या न तुष्यति, रूपान्तरेण राज्ञा श्लेषं भजन् कृतार्थीभवति। स राजपुरुषयोः रूपश्लेषः स्वयम् एक एव चिदात्मनि—प्रमातरि

---

१—राजपुरुषाद्याभासग्राहके············न्योन्यान्वय—C. we have filled the gap as printed.

२—स्वात्ममि निष्ठा इति—C.

३—स्वात्मैव परिसमाप्तौ—C.

४—तदुभयग्राहकप्रमातृभूतौ—C.

५—संबन्धीय—C. ६—पुंसः—C.

तथा अवस्थानरूपः पूर्वप्रतिलब्धसंवित्प्रतिष्ठः[१] तत एव अधिकसंवि- न्निमज्जनात् अनाभासमानपृथग्भवनलक्षणः स्वातन्त्र्ये विश्राम्यति, इति तत्रैव निर्भासते समास्कन्दितपुरुषपरमार्थोऽपि, एवं बहिरनेकता, अन्तस्तु परस्परूपश्लेषेणैक्यम्, इति संबन्धस्य रूपम् ॥ ४ ॥

जातिद्रव्यावभासानां बहिरप्येकरूपताम् ।
व्यक्त्येकदेशभेदं चाप्यालम्बन्ते विकल्पनाः ॥ ५ ॥

जात्यवभासस्य अवभासमानरूपायाः जातेः ग्राहिका याः

---

"तथा" इति, उक्तरूपेणैक्येन स्थितः राज्ञः पुरुष इति पूर्वप्रतिलब्धसंवित्- प्रतिष्ठः[२] अत एवाधिकपुरुषसंविन्निमज्जनात् राजपुरुषयोः अनाभासमानपृथग्भ- वनलक्षणः स्वातन्त्र्ये विश्राम्यति, तत्र-स्वतन्त्रे चिदात्मन्येव, निर्भासते, समास्कन्दितपुरुषपरमार्थोऽपि राजाद्याभासानन्तरम्[३] ॥ ४ ॥

गोत्वघटत्वाद्येकरूपतामभेदरूपतां बहिरेव तयोः कपिलादिरूपया व्यक्त्या मुखादिनावयवरूपेणैकदेशेन च भेदमनेकत्वं चावलम्बन्ते ॥ तयोर्भेदाभेदौ[४] बहिरेव ।

प्रकाशमानरूपाया[५] जातेः ग्राहिकाः—गृहीत्र्यः प्रमातृविकल्पबुद्धयः, ता

---

१—पूर्वप्रतिलब्धसंवित्प्रतिष्ठे तत एव अधिकसंविन्निमज्जनात् अनाभास- मानपृथग्भवनलक्षणस्वातन्त्र्ये—K. S. S. According to the above reading, the two compounds ending in प्रतिष्ठे and लक्षणस्वातन्त्र्ये qualifiy चिदात्मनि; but according to the reading as found in the commentary, स्वातन्त्र्ये stands by itself and the two compounds ending in प्रतिष्ठः and लक्षणः qualify 'रूपश्लेषः'

२—राजसंवित्प्रतिष्ठः—C.

३—राजाद्याभासानन्तरगोत्वघटत्व—C.

४—भेदाभेदो—C.

५—प्रकाशमानरूपा जातेर्ग्राहिकाः गृहीतायाः—C.

कल्पनाः, ता न केवलं संबन्धवत् अन्तर् एकरूपतां बहिश्च अनेकरूपताम् आलम्बन्ते, यावद् बहिरपि व्यक्तिभेदलक्षणम् अनैक्यं बहिरेव च तदनुस्यूततारूपाम् एकताम् आलम्बनत्वं नयन्ति । 'गावः' इति हि प्रतिभासे पृथक्कृता[1] बहिर् व्यक्तयो भान्ति, येन च बहुवचनम्, अनुयायि च आसां भाति वपुः, यत एकप्रातिपदिकार्थपरामर्शानुगमः, उभयं च तद् बहिरेव 'इमाः' इति अङ्गुल्या निर्देशात्, केवलं बाह्यत्वमपि स्थिते परमार्थप्रकाशान्तर्भावे, इति न

न केवलं संबन्धवदन्तरेव एकरूपतामालम्बन्ते यावद् बहिरपि कपिलादिव्यक्त्यनुस्यूतां गोत्वरूपाम्[2] एकताम् अपि आलम्बनत्वन्नयन्ति[3] तदेव संक्षेपेणोपपादयति । "गावः" इति बहुत्वप्रतिभासे[4] पृथक्कृताः—अन्योन्यं पृथक्कृताः, बहिः कपिलादिव्यक्तयो[5] भान्ति येन—प्रतिभासेन अनेकत्वद्योतकं बहुवचनम् । इयं गौरियं गौरिति, अनुयायि चासाम् गवां वपुः भवति । यदा तु गोत्वरूपैकप्रातिपदिकार्थपरामर्शानुगमः[6] तदानुयायि वपुः । "उभयम्" इति, एकत्वानेकत्वे, बहिरेव । उभयस्यापि बहीरूपतां प्रत्यक्षेण दर्शयति "इमाः इति अङ्गुल्यानिर्देशात्" इत्यनेन । केवलं बाह्यत्वमपि स्वात्मनः पूर्वसंगपरमार्थप्रकाशान्तर्भावे[7] सति प्रकाशत इति तत्र बाह्यत्वेन वस्तूनां भेदाभेदौ न दूषणम् । उक्तं चैतत्[8] :—

"चिन्मयत्वेऽवभासानामन्तरेव स्थितिः सदा ।
मायया भासमानानां बाह्यत्वात् बहिरप्यसौ ॥

१—पृथक् च ताः बहिः—K. S. S.
२—गोत्वरूपतामेकताम्—C.
३—आलम्बनवन्नयन्ति—C.
४—बहुत्वप्रतिभाषे बहिः पृथक्कृतः—C.
५—कपिलादिव्यत्ययो—C.
६—गोत्वरूपकप्रातिपदिकार्थं परामर्शानिगमः एतदनुयायि वपुः—C.
७—पूर्वसंग परमार्थः प्रकाशान्तभावे—C.
८—एकतश्चैतत्—C.

तत्र भेदाभेदौ दूषणं चित्रसंवेदन इव। अनेन द्रव्येऽपि रक्तारक्तादि-विरोधः कृतप्रतिविधानः, आन्तरं तु ऐक्यं संबन्धद्वारेण तद्वदेव सर्वत्र, एवम् अवभासमानस्य घट इति अवयविद्रव्यस्य ग्राहिका याः कल्पनाः ता न केवलं संबन्धवत् अन्तर्बहीरूपतया एकानेकविषया यावत् बहि-रप्येकं निःसंधिबन्धरूपत्वेन भिन्नं च अवयवलक्षणैकदेशद्वारेण स्वीकु-र्वते, घट इति हि निःसन्धिबन्धनैकघनात्मा विततरूपश्च भाति इति ॥ ५ ॥

---

इत्यत्र। "चित्रसंवेदन इव" इति चित्रगतस्य पतङ्गस्य पतंगरूपेणैक्यम्, भेदः—नीलानीलवर्णपक्षत्वमनेकत्वम्[1]। अनेन न्यायेन घटादिद्रव्येऽपि एको भागः काञ्चनः एको राजतः इति रक्तारक्तादिविरोधः परिहृतः, सर्वं वस्तु संविन्मय-त्वात् संवित्स्वरूपत्वं[2] वहत इत्यर्थः। अस्या जातेः संबन्धद्वारेणान्तरम् अप्यै-[3]कत्वमस्ति न केवलं बहिरेव। सर्वत्र इति, सर्वेषु भावेषु, आन्तरं[4] चैक्यं संबन्धद्वारा। 'एवम्' इति, जातिवद्। अवभासमानस्य घट इत्यवयवि-द्रव्यस्य ग्राहिकाः याः कल्पनाः—विकल्पबुद्धयः अन्तरेकविषया बहिरनेक-विषया इति न भवन्ति, बहिरप्यनेकवस्तुविषयाः। तासां विकल्पबुद्धीनां बहिर-प्येकानेकरूपत्वमेव प्रतिपादयति। निःसन्धिबन्धरूपत्वेनैकरूपं मुखाद्यवयव-[5]लक्षणैकदेशद्वारेण भिन्नम् अनेकरूपं च घटादि स्वीकुर्वते। घट इति प्रतिभास-मानो भावः निःसंधिबन्धनैकसमुदायमयैकरूपस्तत्तद्देशव्याप्तिभिर्[6]मुखाद्यवयवै-विततरूपश्च भातीति॥ ५॥

---

१—नीलनीलवर्ण—C.
२—संविदतसर्वरूपत्वम्—C.
३—अप्येकमस्ति—C.
४—अन्तरम्—C.
५—मुखाद्यवयविलक्षणैकदेशं—C.
६—तत्तद्देशव्याभिः—C.

**क्रियाविमर्शविषयः कारकाणां समन्वयः।**
**अवध्यवधिमद्भावान्वयालम्बा दिगादिधीः ॥ ६ ॥**

कारकाणां कर्त्रादिशक्त्याधाराणां द्रव्याणां च योऽन्योन्यं समन्वयो दृश्यते, यथा मातृमेयमानानां मिथः, सोऽन्तर्लीनप्रमात्मकक्रियाविशेषपरामर्शैकनिमित्तकः, नहि प्रमापरामर्शम् अन्तर्वर्तिनं

---

**कारकाणाम्**—कर्त्रादिशक्त्याधाराणां वृक्षादिद्रव्याणां देवदत्तः काष्ठैः स्थाल्यामोदनमिति कर्तृकरणाधिकरणकर्मरूपाणाम् अन्वयो यः स पचतीत्यादि क्रियाविमर्शविषयः—क्रियाविमर्शैकनिमित्तः, दिक्कालग्राहिका धीः इममवधिं कृत्वा अस्मादयं पूर्वंजातः अतोऽस्यायमग्रजः, भानोरुदयगिरिमारभ्य[1] चरमगिरिपर्य्यन्तं गमनं दिवसः, तं चरमगिरिमारभ्य उदयगिरिपर्य्यन्तगमनं रात्रिरिति **अवध्यवधिमद्भावान्वयालम्बा दिगादिधीः।**

"**कारकाणाम्**" इति प्रथमाद्यधिकरणान्तकर्त्रादिशक्त्याधाराणां कारकाणाम्, चैत्रमैत्रादीनां वृक्षादीनां च द्रव्याणाम्, देवदत्तः काष्ठैः स्थाल्यामित्यादिरूपो **योऽन्योन्यं समन्वयो दृश्यते** स समन्वयः—स प्रमात्रन्तर्लीनतत्प्रमात्मकपचत्यादिक्रियापरामर्शैकनिमित्तकः कारकाणां समन्वयः। "**क्रिया विमर्शविषयः**" इत्यत्र दृष्टान्तमाह "**यथा मातृमेयमानानाम्**" इति। मातुश्चैत्रस्य[2] मेयस्य घटादेस्तदुभयनिष्ठस्य बहिर्मुखस्य भानरूपस्य ज्ञानस्य च यथा पश्यत्यादिप्रमारूपायां क्रियायां मिथः समन्वयः तद्वदत्रापि प्रमातुरन्तवर्तिनं पश्यत्यादिक्रियारूपं प्रमापरामर्शं विहाय देवदत्तो वृक्षमित्यादिरूपयोः वस्तुनोः साक्षात् स्वत एव न स[3] समन्वयो विमर्शविषय इति कारकाणां समन्वयः पचत्यादि

---

1. भानोरुदयगिरिपर्यन्त गमनम्—C.

2. मातुश्चैत्रस्य......... ....देस्तदुभय—C.

3. स्वत एव न स................याविमर्शविषय—C. Following the trend of the argument we have filled up the gap as printed. We are, however, not satisfied that we have restored the original because याविमर्शविषय makes one think of 'क्रियाविमर्शविषय'

विहाय वस्तुनः साक्षात् अन्वयोऽत्र संवेद्यते, अनन्यत्र भावरूपता-निमित्तता अत्र विषयार्थः, कारकशक्तीनामपि यः स्वाश्रयैः संबन्धः सोऽपि क्रियापरामर्शनिमित्तकः, द्रव्याणां च शक्तीनां च क्रियया साकं साक्षात् संबन्धः इति इयं क्रियैव भगवती एतावद्विजृम्भितं संबन्धम् आविर्भावयति। अस्मादिदं पूर्वं परं दूरे इत्येवं बहिर्भिन्न-तयापरामृश्यमानयोः भावयोरन्तर् अभेदनपूर्वकं[1] भेदावमर्शमध्यम् अभेदविश्रान्तं च यत् रूपम् आमृश्यते तत् दिग् इत्युच्यते। अत्र हि तयोः मुखाद्यवयवविशेषपरामर्शादरः तत्संमुखत्वपराङ्-मुखत्वादिनिश्चयः संयोगसंयुक्तसंयोगाल्पतादिपरिग्रहश्च उपयोगी।

---

क्रियापरामर्शैकनिमित्तक इति क्रियां विना अत्रान्यत्र भवनासहिष्णुतारूपा निमि-त्तता विषयार्थः। कारकाणां प्रमातृपरामर्शरूपया क्रियया विना स्वत एव समन्वयो न संभवतीत्यर्थः। प्रथमादिकारकशक्तीनामपि स्वाश्रयैः—द्रव्यैर्वृक्षा-दिभिर्योऽन्योन्यं समन्वयः स तिष्ठत्यादिक्रियापरामर्शैकनिमित्तकः वृक्षस्तिष्ठति वृक्षं पश्यामि वृक्षेण स्थीयते वृक्षाय ददाति वृक्षात् पतति वृक्षस्येदं सर्वं भवति वृक्ष तिष्ठतीति इति द्रव्याणां शक्तीनां च क्रियया साकं साक्षात् संबन्ध इति इयती सैव[2] भगवती विश्वव्यवहारहेतुभूता[3] प्रथमाद्यधिकरणान्तकारक-विजृम्भितं संबन्धमाविर्भावयति। बहिर्भावद्वयमालोक्यास्मात् पर्वतादयं पूर्वः अयमपर इति प्रमात्रा बहिर्भिन्नतया चक्षुरादिभिः परामृश्यमानयोः भाव-योरन्तः अन्तःकरणे एकत्र विश्रान्तत्वात् अभेदनपूर्वकं पुनर्बहिर्मध्ये मध्यकोठौ अस्मादिदं पूर्वमित्याद्यन्योन्यभेदावभासनात्मकं पुनरपि अभेदविश्रान्तं चेत् ध्रुवमामृश्यते तत् सामान्येन दिगित्युच्यते। अत्र–दिक्सामान्ये, तयोः–भावयोर्मुखपृष्ठदक्षिणोत्तरावयवपरामर्शादरः इत्यनेन दिशां प्रागादिविभाग-संभवः। तदवयवसंमुखत्वपराङ्मुखत्वादिनिश्चय इत्यनेन विदिगादिविशेषसंभवः। अनेन गिरिणा संयुक्तः इति संयोगः, वृक्षादिभिः संयुक्तेन[4] गिरिणा सह संबन्धः संयुक्तसंयोगः, भावयोरदूरत्वादिपरिग्रहश्च दिक्परामर्शे उपयोगी। वस्तुविषयत्वन

---

1. अभेदपूर्वकम्—K. S. S. 2. चैव-C.

3. विश्वव्यवहारहेतुभूतः प्रथमाद्यधिकरणान्त—C.

4. संयुतेन गिरिणा वृक्षादिभिः सह संबन्धः—C.

कालपरामर्शस्य पूर्वपरादिरूपत्वे जन्मस्थित्यल्पतादिविमर्शश्चिरक्षिप्रादिरूपत्वे च, पक्ष्यति पचति अपाक्षीत् इत्यादौ तु संभावितस्य स्फुटस्य स्फुटभूतपूर्वस्य आत्मीयसंवेदनस्पन्दितप्राणा-

---

व्यवहारसाधनार्थमेव आश्रयणीयः, अन्यथा तदसंभवात्।

ननु शरावत्यैवयं मर्यादा कृता, सत्यम्, येन सा न दृष्टा स किं कुर्यात्, किञ्च पुरस्थैर्वस्तुभिरेव तत्सिद्धौ का तस्या अपेक्षा, अन्यच्च तद्विभाजितायां पूर्वदिश्यपि तदन्तर्गतवस्त्वपेक्षया परादिव्यवहारो दृश्यते इति न किञ्चिदेतत्। ननु तर्हि कथं शास्त्रेषु तद्विभाजकत्वेन तस्याः स्तुतिः कृता, तदुक्तम्ः—

सा नः पातु शरावती।

इति। पूर्वादिदेशव्यवहारत्वेनेति ब्रूमः, वस्तुव्यवहारस्य च देशव्यवहारापेक्षयान्तरंगत्वमेव। किञ्च सूर्यस्य प्रथमोद्भूतिरपि मेरुपार्श्वापेक्षया विचित्रा भवति इति सर्वो दिग्विभागः कल्पनाप्राण एवेति दिश एकत्वकथनमपि अयुक्तमेव अपरिच्छिन्नभगवन्मूर्तिरूपस्य देशस्य परिच्छिन्नविषयैकत्वायोगादित्यलं प्रपञ्चेन। अत्र च संयुक्तसंयोगाल्पताविग्रहः दूरत्वादिनिर्णयार्थमुपयुज्यते। तथाहि द्रष्टुः शरीरेण संयुक्ता भूस्तया संयोगः देवदत्तस्य स एव संयुक्तसंयोगः, स च यत्राल्पः तत्रादूरता यत्र तु महान् तत्र दूरता। परमार्थतस्तु संयुक्तसंयोगः अन्तरमेवेत्यलम्। आदिशब्दगृहीतां कालधियं निर्णेतुमाह "काल" इति। कालपरामर्शस्य पूर्वपरादिरूपत्वे-पूर्वत्वरूपत्वे परत्वरूपत्वे "आ द" शब्देन मध्यरूपत्वे। जन्मन आरभ्य स्थितिः जन्मस्थितिः, तस्या यत् अल्पतादि आदिग्रहणात् बहुतामध्यमभावयोर्ग्रहणम्, तस्य विमर्शः उपयुज्यते उपयोगी भवति। तत्राल्पतापरामर्शेन यूनि परत्वग्रहणम्, बहुतापरामर्शेन वृद्धे पूर्वत्वग्रहणम्, मध्यतापरामर्शेन मध्यमे मध्यमत्वग्रहणम्। इह पूर्वपरत्वयोस्तार्किकाभिमतपरत्वापरत्वयोश्चैकत्वमेव। पूर्वो हि परः परत्वापरः पूर्वतरत्वात्। तथा चिरक्षिप्रादिरूपत्वे च जन्मस्थित्यल्पतादिविमर्श उपयुज्यते। अत्रापि आदिशब्देन मध्यमताग्रहणम्। अत्रापि अल्पतया क्षिप्रताग्रहणम्। बहुतया चिरताग्रहणम्, मध्यमतया मध्यभावग्रहणमिति क्रमः। यद्यपि चिरक्षिप्रतादिग्रहणमादित्यसंचारात्यल्पतादिवशेनापि भवति तथापि प्रपञ्चभियात्रैव नियतत्त्वेनोक्तं तथा। तु व्यतिरेके, "पक्ष्यति, पचति, अपाक्षीत्" इत्यादौ, भविष्यद्वर्तमानभूतग्रहणे

दित्यादिक्रियान्तरस्य फलविशेषस्य च ओदनादेः परामर्श उपयुज्यते, एवं संख्यापरिमाणपृथक्त्वसंयोगविभागप्रभृतिषु संबन्धरूपतैव वाच्या, सर्वथा अयं सक्षेपः, यत्र पदार्थाभासस्य आत्मविश्रान्त्या संतोषमपुष्यतः आभासान्तरपरामर्शविश्रान्तिसाकाङ्क्षतया स्वरूपपरिनिष्ठा[1] तत्र संबन्धरूपतैव क्रियाशक्तिविजृम्भामयी, तत्रापि भावान्तरापेक्षया संबन्धान्तरमपि अस्तु, यथा संख्यादौ समवायं मन्यन्ते, न च अनवस्था भवन्त्यपि दोषाय, पूर्वापरकल्पस्पृष्टानवस्थेव,

---

इति यावत् । आदित्यादिक्रियान्तरस्य, स्वक्रियायाः भिन्नायाः आदित्यसञ्चाररूपक्रियायाः इति यावत्, आदिशब्देन[2] पुष्पादिजन्मादेः ग्रहणम् तस्य परामर्शः, तथा ओदनादेः फलविशेषस्य च परामर्श उपयुज्यते येन श्वः अद्य ह्यः इत्यादिवचनप्रयोगः[3] तत्र दृश्यते इति भावः । क्रियान्तरस्य ओदनादेश्च कीदृशस्य? सम्भावितस्य—पक्ष्यतीत्यत्र भविष्यत्त्वेन संभावनामात्रेण प्रोक्तस्य, तथा स्फुटस्य पचतीत्यत्र वर्त्तमानत्वेन स्फुटस्य, तथा स्फुटभूतपूर्वस्य अपाक्षीदित्यत्र-प्रतीतत्वेन पूव स्फुटीभूतस्य, आत्मीयम् प्रमातुः निजं यत् संवेदनं तस्य यत् स्पन्दितम्—स्फुरणम्, ग्रहणं प्रत्युन्मुखाभावः इति यावत्, तदेव जीवितं यस्य तादृशं यत् आदित्यादिक्रियान्तरं तस्य । संख्यादावप्येनं न्यायमतिदिशति "एवम्" इति, "सम्बन्धरूपतैव" इति । प्रमात्रपेक्षाबुद्धिसिद्धत्वेन[4] योजनाप्राणत्वादिति भावः । संक्षेपकथनं प्रतिजानीते "सर्वथा" इति । आत्मविश्रान्त्या-पदार्थाख्यनिजरूपमात्रविश्रमणेन, सन्तोषम्—प्रमातुर्निराकांक्षत्वम, अपुष्यतः—अकुर्वतः, स्वरूपपरिनिष्ठा—स्वरूपव्यवस्था, तत्रापि—संबद्धे स्वरूपेऽपि । ननु कुत्रैतदस्ति इत्यत आह "यथा" इति । अत्र हि प्रमात्रपेक्षाबुद्धिसिद्धत्वेन संख्यायाः स्वरूपग्रहणेपि प्रथमं सम्बन्धापेक्षा ततः स्वाश्रयेऽवस्थानार्थं समवायापेक्षा, आदिशब्देन परिणामादिग्रहणम् । ननु तर्हि तत्रापि सम्बन्धापेक्षायामनवस्थापातः स्यादित्यत आह "न च" इति । भवन्त्यपि—स्थितापि सती ।

---

1—स्वरूपनिष्ठा—K. S. S. 2—आदित्यशब्देन—C.
3—वचनमिति आदिप्रयोगः—C.
4—प्रमात्रपेक्षया बुद्धि—C.

नहि उत्तरसंबन्धसृष्ट्या विना पूर्वसंबन्धावभासे हानिः काचित् येन मूले क्षतिः शंक्येत ॥ ६ ॥

एवं सकललोकयात्रानुप्राणितकल्पानल्पसंबन्धबन्धुरीभावं[1] क्रियाशक्तिविजृम्भात्मकम् अभिधाय, तस्य स्थैर्योपयोगौ पूर्वसूचितौ निरूपयितुमाह:—

एवमेवार्थसिद्धिः स्यान्मातुरर्थक्रियार्थिनः ।
भेदाभेदवतार्थेन तेन न भ्रान्तिरीदृशी ॥७॥

इह भावानां न सत्तासंबन्धः सत्त्वम्, अव्यापकत्वाद् अनवस्था-

---

अत्र दृष्टान्तमाह "पूर्व" इति । यथा सृष्ट्यनन्तरं पुनः पुनः सृष्ट्युत्पादे भवन्त्यपि अनवस्था न दोषाय तथेत्यर्थः । कुतो न दोषायेत्यत आह "नहि" इति । येन, यया हान्येत्यर्थः, मूले क्षतिः उत्तरस्य सिद्धिं विना पूर्वासिद्धिरूपो मूलनाशः शंक्येत—शंकाविषयो भवेत् । तदुक्तम्:—

मूलक्षतिकरीमाहुरनवस्थां हि दूषणम् ।
मूलसिद्धौ त्वरुच्यापि नानवस्था निवार्यते ॥ इति ॥ ६ ॥

अथ सप्तमस्य श्लोकस्यावतरणिकां करोति "एवम्" इति ।

अत्र टीका:—

बन्धुरीभावम्—उन्नतताम् क्रियाशक्तिविजृम्भात्मकम्—क्रियाशक्तिविलसितरूपम्, तस्य—सम्बन्धबन्धुरीभावस्य, पूर्वसूचितौ "सत्याः स्थैर्योपयोगाभ्याम्" इत्यत्र सूचनया कथितौ । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे" "एवमेव" इति ।

अत्र टीका:—

श्लोकं व्याख्यातुं प्रक्रियां करोति "इह" इति । इह-भासमानेऽत्र जगति, भावानाम्-नीलादीनां, सुखादीनाञ्च, सत्तासंबन्धः-तार्किकाभ्युपगतसत्ताख्यपरजातिसम्बन्धः, सत्त्वम्-अस्तित्वं न भवति । कुत इत्यपेक्षायामाह "अव्यापकत्वात्" इति, तत्र सत्तायाः सामान्यदिभ्यो व्यावृत्तेः अव्यापकत्वम्,

---

१—संबन्धबन्धुरीभावभावम्—K. S. S.

२—इह भावानां न संत्तासबन्धः, सत्त्वम् । K. S. S. According to Bhāskara, the pause has to come after सत्त्वम् ।

वैयर्थ्यादिदोषात्, न अर्थक्रिया वस्त्वन्तरत्वात्, न तत्कारित्वं सर्वदा तदावेशादर्शनात्, उक्तं हि

'अर्थक्रियापि सहजा नार्थानाम्………॥'

इति । तत्कारित्वस्य च प्रत्यक्षानुपलम्भात्मकान्वयव्यतिरेकगम्यस्य अप्रत्यक्षत्वे सतोऽपि अप्रत्यक्षत्वप्राप्तेः, नार्थक्रियाकरणयोग्यत्वं तस्य

---

तत्राप्यनुवृत्तौ अनवस्था, सत्तायां हि सत्तांगीक्रियते, तत्राप्यन्या तत्राप्यन्या इति अनवस्था स्यात् । तथा विशेषेषु तदंगीकारे संशयस्य तत्रापत्तेः पुनस्तन्निवृत्त्यर्थं विशेषान्तरानुसरणे स्फुटानवस्था । तथा समवाये तदंगीकारे तद्वृत्त्यर्थं समवायान्तरानुसरणेऽप्यनवस्था । अथ सामान्यदीनां प्रातिस्विकेन सत्त्वेनैव सत्ताव्यवहारः इति न तेषां तदपेक्षेति नायं दोषप्रसंगः, तर्हि द्रव्यादित्रयेऽपि तेनैव तद्व्यवहारः इति तत्रास्या व्यर्थत्वम्, अथ तद्विनैव तत्र सत्ताव्यवहारः तर्हि शश विषाणेऽपि सत्ताप्रसक्तिः । आदिशब्देनाभावेऽपि सत्ताभ्युपगमे यः तस्याः स्वरूपव्याघातप्रसंगस्तस्य ग्रहणम्, अभावो ह्यसत्त्वैव । तथा अर्थक्रिया—प्रतिनियतत्वेन स्थिता भावैः क्रियमाणार्थक्रिया, भावानां सत्त्वं न भवति, कुतः ? वस्त्वन्तरत्वात्–भिन्नवस्तुत्वात्, सत्तापि हि भिन्नं वस्तु अर्थक्रियापि भिन्नं वस्तु, तथा तत्कारित्वम्—अर्थक्रियाकारित्वम्, सत्त्वं न भवति, कुतः सर्वदा तदावेशादर्शनात् सत्त्वं हि भावेषु सर्वदैव स्थितं भवति, तस्य चार्थक्रियाकारिताभावेऽङ्गीक्रियमाणे भावः सर्वदैवार्थक्रियाविष्टः स्यात् न च तद् दृश्यते इति नार्थक्रियाकारित्वभावः सत्त्वस्येति भावः। अत्र वृद्धसम्मतिमाह "उक्तं हि" इति । सहजा–स्वरूपभूता, इति शब्दो ग्रन्थकारवाक्यसमाप्तौ । अत्र दोषान्तरमाह "तत्कारित्वस्य च" इति । तत्कारित्वस्य च–अर्थक्रियाकारित्वस्य च प्रत्यक्षानुपलंभात्मकौ—प्रत्यक्षानुपलंभरूपौ यौ अन्वयव्यतिरेकौ ताभ्यां गम्यस्य–प्राप्यस्य, सत्त्वासत्त्वाभ्यां ज्ञातुं योग्यस्येति यावत् । अप्रत्यक्षत्वे–तत्कालमनुपलंभे सति, सतोऽपि—सत्तां भजतोऽपि तदाधारस्य वस्तुनः अप्रत्यक्षत्वप्राप्तेः–तात्कालिकानुपलंभप्रसङ्गात्, न च तद् युक्तमिति भावः । ननु तर्ह्यर्थक्रियाकरणयोग्यत्वमात्रमेव सत्त्वमस्तु येन नोक्तदोषप्रसंगः । योग्यता हि तस्य सर्वदैव स्थितेत्यत आह "नार्थ" इति । कुत इत्यपेक्षायामाह "तस्य" इति । तस्य—अर्थक्रियाकरणयोग्यत्वस्य,

सत्यासत्यके निश्चयकाले दुरवधारत्वात्[१], सर्वस्य च अस्य अप्रकाशमानत्वेन नरशृङ्गप्रायत्वम्[२], अर्थक्रियान्तरपर्येषणे[३] च अनवस्था, इति प्रकाशमानतैव अनुन्मूल्यमानतथोचितविमर्शपरिस्पन्दा भावस्य सत्त्वम्, सा च भेदाभेदवपुषां संबन्धादीनामस्ति, इति—निराशङ्कमेव सत्यत्वमेव एषाम्[४], तथापि यदि परोऽनुबध्नीयात्—इह लोकः

---

सत्यासत्यके निश्चयकाले, भावप्रधानो निर्देशः, सत्यत्वासत्यत्वसंबन्धिनिश्चयसमये, दुरवधारत्वात—निर्णेतुमशक्यत्वात्, सत्त्वासत्त्ववशेनैव हि सत्यत्वासत्यत्वनिश्चयो भवति इति भावः। सामस्त्येनापि दोषप्रसङ्गमाह "सर्वस्य" इति। सर्वस्य च अस्य पक्षत्रयस्य, अप्रकाशमानत्वेन नरशृङ्गप्रायत्वम् नरशृङ्गसदृशत्वम्, अत्यन्ताभाव इति यावत् भवति, न ह्यर्थक्रियादित्रयं प्रकाशमानं सत्तायुक्तस्यैव प्रकाशमानत्वयोगात्, सत्तायाश्च बौद्धमतेऽर्थक्रियारूपत्वेनात्माश्रयापत्तेरर्थक्रियागतत्वायोगात्, सत्ताया असंभवेनेति भावः। ननु एतद्दोषनिवारणार्थं अर्थक्रियान्तरमेवाङ्गीकुर्मः इत्यत आह "अर्थक्रियान्तर" इति। अर्थक्रियान्तरस्य-अन्यस्या अर्थक्रियायाः, पर्येषणे-अनुसरणे पूर्वस्या अर्थक्रियायाः सत्त्वभावेनाङ्गीकारे इति यावत्, अनवस्था—मूलक्षतिकरी अनवस्था स्यात् तस्या अपि अर्थक्रियान्तरसापेक्षत्वात्। इति—अतः कारणात्, प्रकाशमानतैव-कैवलं प्रकाशकर्तृत्वमेव, भावस्य—नीलसुखादेः वस्तुनः, सत्त्वम्—स्वरूपं भवति, व्यवस्थापकत्वद्वारेण तन्मयतासादनात्। कीदृशी ? अनुन्मूल्यमानः—अबाध्यमानः, तथोचितः-तस्मिन् प्रकारे योग्यः, विमर्शपरिस्पन्दः-विकल्पाख्यो व्यापारः यस्याः सा, अन्यथा शुक्तिकाविषयस्य रजतप्रकाशस्यापि रजतसत्त्वभावः स्यादिति भावः। सा च-प्रकाशमानता च, भेदाभेदवपुषाम्-एकानेकस्वभावत्वेन साधितानाम् सम्बन्धादीनाम्-सम्बन्धानाम् आदिशब्दात् सामान्यादीनां च, अस्ति। इति-अतः, एषां निराशंकम्-निःसंशयं सत्यत्वं भवति, तथापि-एवमपि सति, परः—बौद्धः, अनुबध्नीयात्—अनुबन्धं कुर्यात्। अनुबन्ध-

---

1—दुरवधानत्वात्—K. S. S.

2—अप्रकाशमानत्वे नरशृङ्गप्रायत्वम्—K. S. S.

3—अर्थक्रियाकारितान्तरपर्येषणे—K. S. S.

4—तेषाम्—K. S. S.

प्राचुर्येण अर्थक्रियार्थी तत्कारिणि सत्यत्वं व्यवहरति, तत् किं संबन्धादीनाम् अस्ति इति, तदस्य हृदयम् आश्वास्यते, यदि न कुप्यसि तत् सर्वत्रैव व्यवहारे यत्रापि स्फुटा संबन्धादिधीः न उदेति एवमेव तत्रापि, इति संबन्धादिरूपतया भेदाभेदवान् योऽर्थः तेनैव अर्थक्रिया, न तु स्वात्ममात्रविश्रान्तेन काचिदपि कदाचिदपि अर्थक्रिया, तथाहि सुखेन स्मर्यमाणेन अभिलाषः, इत्यादि क्रमेण सर्वो व्यवहारः सुखाभासश्च योऽनुभूतः स एव अभिलष्यते न तु अन्योऽननुभूतः, स एव च यदि प्राप्यते तदभिलषितं प्राप्तम् इति तुष्यते यदि च तत् तदेव तर्हि किम् अभिलष्यते—प्राप्तत्वात्, अथ अतदेव तथापि कथम् अर्थ्यते-अज्ञातत्वात, तस्मात् एतत् एवं भवति-यदि तदेव च अतदेव च तदपि च अतदपि च इति । एवं सुखसाधनेषु वाच्यम् । तदुक्तम् आचार्येणैव :—

---

स्वरूपमाह "इह" इति । प्राचुर्येण-बाहुल्येन, तत्कारिणि-अर्थक्रियाकारिणि, तत्-सत्यत्वम्, किमस्ति, नास्तीत्यर्थः । इति शब्दो बौद्धानुबन्धसमाप्तौ । तत्-तर्हि, अस्य—परस्य, संमुख एव समाश्वासनं करोति, "यदि" इति तत् तदा, सर्वत्र कुत्रेत्यपेक्षायामाह "यत्र" इति स्फुटा-प्रकटा, तत्रापि-तस्मिन् विषयेऽपि, भेदाभेदवान्-एकानेकस्वभावत्वेन भेदाभेदयुक्तः, काचिदपि, न कापीत्यर्थः । कदाचिदपि, जात्वपीत्यर्थः । अत्र समर्थनमुपक्रमते "तथाहि" इति । सुखेन कपित्थादिवस्तुकृतेन अनुकूलवेदनीयेन गुणविशेषेण, अभिलाषः-कपित्थादिवस्तु प्रत्यौत्सुक्यम्, आदि शब्देन कपित्थादिविषयाहरणादिपरिग्रहः । ननु तर्हि सुखग्रहणम् सामान्यादिस्पर्शारूषितमेव स्यात् इत्यत आह "सुख" इति । तुष्यते-तृप्तेन भूयते कृतकृत्यत्वासादनात्, तथाच सुखग्रहणाख्ये व्यवहारेऽपि सम्बन्धधीरुदेत्येवेति भावः । ननु तत्र कथमेकानेकस्वभावत्वमित्यपेक्षायामाह "यदि" इति । तत्-अनुभूयमानसुखम् । तदेव—पूर्वानुभूतं सुखमेव, "प्राप्तत्वात्" इति । नहि प्राप्तेऽभिलाषो युक्तः इति भावः । अतदेव-अन्यदेव, "तदेव च अतदपि भवति, अतदेव च तदपि भवति" इति सम्बन्धः । "इति" शब्द एकानेकस्वभावतासाध समाप्तौ । कपित्थावावपि अमुं न्यायमतिदिशति "एवम्" इति । अत्र चाचार्यसम्मतिमाह "तदुक्तम्"

'इष्टार्थितायामिष्टं वा विमृश्येतेष्टकारि वा ।
न चाप्यदृष्टमिष्टं द्यौरपीष्टाऽदृष्टभोगभूः[1] ॥
दृष्टं च सह दृष्ट्यैव विनष्टमिति कार्थिता ।
द्रष्ट्रैक्येन[2] विमृष्टं तत्........................ ॥'

---

इति । किमुक्तमित्यपेक्षायामाह "इष्ट" इति । अत्रायमर्थः—धीमता इष्टार्थितायाम्—लक्षणाश्रयेण इष्टार्थितासमये इष्टसाधनार्थितासमये च इष्टं वा इष्टकारि वा इष्टसाधनं वा उभयत्रापि वाशब्दः द्वयोरपि प्राधान्यद्योतनार्थः । विमृश्येत—विचारविषयतां नीयेत, किं पूर्वदृष्टमेतद्युक्तमुतादृष्टमिति । विमर्शसिद्ध वस्तु स्वयमेव सिद्धत्वेन कथयति "नचापि" इति । तत् इष्टमदृष्टं न च अपि भवति, यतस्तत्त्वे अदृष्टभोगभूः—अननुभूतभोगस्थानम्, द्यौरपि इष्टा स्यात् । इह च प्रत्यक्षानुभूतविषयेष्टतापेक्षयैवमुक्तम्, आगमसिद्धविषये[3]ष्टता त्विहापि विद्यते एव । ननु तर्हि दृष्टस्यैवेष्टत्वं भवत्वित्यत आह "दृष्टं च" इति । "विनष्टम्" इति, क्षणिकत्वादिति भावः । इति–अतः कार्थिता नहि विनष्टे अर्थिता युक्तेति भावः । ननु तर्हि किं कार्यमित्यत आह "द्रष्ट्रैक्येन" इति । अतः अस्माभिः तत्—इष्टम्, द्रष्ट्रैक्येन विमृष्टम्–द्रष्ट्रा सह एकत्वेन विमृष्टम्, द्रष्टरि संस्कारभावेन स्थितं विमृष्टं विचारितमिति यावत् । सर्वं वस्तु पूर्वानुभूतसुखत्वतत्साधनत्वस्मृत्यैवोपादीयते इति भावः । ननु तर्हि प्रथमं कथमुपादानमस्तीति चेत् संशयेनेति ब्रूमः । तर्हि तत्र संबन्धानपेक्षा, नैतत्, संशयो हि द्विकोटिनिष्ठत्वेन योजनाप्राण एव, अथवा पूर्वसाधिता काप्यान्तरी योजना सर्वव्यवहारसाधनं यया सद्योजातबालेष्वपि स्तन्यविषयो व्यवहारो दृश्यते इत्यलं पुनः पुना रहस्योद्घाटनेन । "इति" शब्द आचार्यवाक्य-समाप्तौ । आदि शब्दः अन्येषां तत्रत्यवाक्यानां ग्रहणपरः । उक्तप्रक्रिया-

---

1. द्यौरपीष्टा दृष्टभोगभूः—K. S. S.

According to Bhāskara, the word is अदृष्टभोगभूः Therefore, it has been printed as above.

2. द्रष्ट्रैकेन—K. S. S.

3. आगामिसिद्धविषयष्टता—C.

इत्यादि । एवं च आभासात्मनि अस्मिन् असंवेद्यमपि आभासान्तरं सामान्यसंबन्धरूपतया अनुप्रविष्टम्, अन्यथा न कथंचिद्व्यवहारः[1] इति सकलदेशकालदशापुरुषोपयोगी यदि अयं व्यवहारो न सत्यः तर्हि न अन्यस्य सत्यत्वं विद्मः—इति न अत्र भ्रान्तिः इति भ्रमितव्यम् । इति शिवम् ॥ ७ ॥ आदितः ॥ १०४ ॥

---

फलितवस्त्ववष्टम्भेन श्लोकस्य योजनां करोति "एवं च" इति । एवं च- एवं च सति, अस्मिन् आभासात्मनि, भासमाने आभासरूपे नीलसुखादिभाव जाते, असंवेद्यमपि, संवेद्यस्य तु कथैव नास्ति इति भावः । आभासान्तरम्- स्फुटतयाऽगृहीतोऽपि अन्यः आभासः, सामान्यसंबन्धरूपतयाऽनुप्रविष्टं भवति, अन्यथा—तदभावे, व्यवहारः कथञ्चिदपि न स्यात् समनन्तर- मेवोक्तत्वात् । सकलदेशकालदशापुरुषोपयोगी—समस्तेषु देशेषु कालेषु दशासु पुरुषस्य उपकारी, अयं व्यवहारः यदि सत्यो न भवति वयं तर्ह्य- न्यस्य सत्यत्वं न विद्मः, इति—अतः कारणात् पुरुषेणास्मिन् विषये न भ्रमितव्यम्- भ्रमो न कार्यः, इति किमिति भ्रान्तिः-अयं व्यहारः भ्रान्तिः भ्रम- सिद्धत्वेन भ्रान्तिरूपः भवति । ननु तर्हि कथं ग्रन्थकृतैवान्यत्रोक्तम् ।

"रज्वां नास्ति भुजङ्गस्त्रासं कुरुते च मृत्युपर्यन्तम्, ।
भ्रान्तेर्महती शक्तिर्निश्चेतुं केन शक्यते नाम" ॥

इति । सत्यम्, मायाधोवर्त्तिनः प्रत्येवमुक्तम्, तेषां हि भ्रान्तिरूपा माया तावदाश्रयणीया, ये तु तदुपरिगतं शुद्धविद्यातत्त्वं प्राप्ता अत एव मायातत्त्वान्नि- र्गतास्ते समस्तं जगत् भानमात्रसिद्धत्वेन परमार्थसत्यशुद्धप्रकाशरूपमेव पश्यन्ति, प्रकाशो हि भानमेव, परंतु विषयोपरागरहितम् । ननु तर्हि विषयोपरागस्य तद् व्यतिरिक्तत्वमायातम्, न, तस्यैव तदुपरागीकरणायोगात्, सर्वं वा यथास्थितम् एव भवतु, महाद्वैतनिष्ठानां न कापि हानिः । महाद्वैते हि भेदस्य तत्त्वेनाभेदस्या- भेदकत्वेनैकप्रकाशरूपत्वं न विघटतेऽन्यथाद्वैताभासत्वापातात्, यथा पर्णे भास- मानं रेखावृन्दं पर्णमेव तथा प्रकाशे भासमानं भाववृन्दं प्रकाश एव, तदभावेऽ प्रकाशोऽप्रकाश एव भवेत् । तदुक्तम् :—

अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः ।
महेश्वरत्वे संवित्त्वं तदत्यक्ष्यत् घटादिवत् ॥

---

1.—एष व्यवहारः—K. S. S.

इति श्रीमदाचार्योत्पलदेवपादविरचितायामीश्वरप्रत्यभिज्ञायां
श्रीमदाचार्याभिनवगुप्तपादकृतविमर्शिन्याख्यटीकोपेतायां
क्रियाधिकारे भेदाभेदावमर्शनं नाम द्वितीयमाह्निकम् ॥ २ ॥

---

अत्र हि महेश्वरशब्देन विमर्शाख्यमाहेश्वर्ययुक्तः प्रकाशः एव उक्तः संवित्त्वं तु भावभावेन भानम् इति। यत्स्वशदृष्ट्या सत्यत्वं तदन्यत् किञ्चिदेव सत्याभासरूपत्वादिति तैरप्ययमभिमानो न कार्यः "वयं भावेषु सत्यत्वदर्शिनः" इति, तेषां भ्रान्तिपदेऽप्यनारूढत्वादित्यलम्। इति शब्दः आह्निकसमाप्तौ, शिवशब्दः मङ्गलवाचकः परतत्त्वसूचनपरश्चेति शिवम् ॥७॥

इति श्रीमन्महामाहेश्वराचार्यवर्यश्रीभास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञासूत्रविमर्शिनीटीकायां भास्कर्याख्यायां क्रियाधिकारे द्वितायमाह्निकम् ॥२॥

---

## क्रियाधिकारे

# तृतीयमाह्निकम्।

---

प्रमाणानि प्रमावेशे स्वबलाक्रमणक्रमात्।
यस्य वक्त्रावलोकीनि प्रमेये तं स्तुमः शिवम् ॥ १ ॥

---

## भास्करी

स्वबलाक्रमणद्वारा यस्यावष्टंभमीहते।
प्रमाणनिचयः स्रष्टुं प्रमां तं संस्तुमः शिवम् ॥

अथ क्रियाधिकारे तृतीयस्याह्निकस्य निर्विघ्नव्याख्यासमाप्तये प्रचयगमनाय च स्वान्तरनुष्ठितमपि तत्त्वानुस्मरणरूपं मंगलं शिष्यशिक्षायै बहिरपि सकलाह्निकतात्पर्यसूचकेन श्लोकेन निबध्नाति "प्रमाणानि" इति। वयं तम्—प्रमाणानुग्राहकत्वेन प्रसिद्धम्, शिवम्—प्रमेयस्पर्शनारूपितप्रमारूपप्रकाशस्वरूपं शिवाख्यं परमवस्तु स्तुमः—उत्कर्षपरामर्शविषयतां नयामः। तं कम्? प्रमाणानि—एतदाह्निकप्रथमश्लोके वक्ष्यमाणस्वरूपाणि बहिर्मुखवेदनरूपाणि प्रमाकरणानि, प्रमेये—प्रमेयाख्यविषयविषये, प्रमावेशे—प्रमाख्यफलविषयीभवने, लक्षणया तत्करणे इति यावत्। यस्य—शिवस्य वक्त्रावलोकीनि—मुखप्रेक्षीणि भवन्ति, प्रमाणं हि प्रमेयविषयप्रमाजननोद्युक्तं सदान्तरं प्रमातृतत्त्वमेवावष्टंभकत्वेनापेक्षते, अन्यथा जडस्य तस्य तत्राशक्तत्वात्, तदुक्तम् :—

प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते।
तेषामपि परो जीवः स एव परमेश्वरः ॥

इति। कथम् इत्यपेक्षायामाह "स्वबल" इति। स्वबलस्य—आत्मबलस्य यदाक्रमणम्—अवलम्बनं तस्य क्रमात्, क्रमेणेत्यर्थः। तत्समये हि तानि प्रमाणानि प्रमातुर्बलमपेक्षन्ते एव प्रमाता च परमार्थतः शिव एवेति तद्बलाक्रमणमेव तेषां शिववक्त्रावलोनमिति भावः। तदुक्तम् :—

'करणानीव देहिनाम्'

इति। अत्र हि मन्त्राणां स्वाधिकारप्रवृत्तौ स्वभाववशेन स्थिते आत्मबला-

एवं क्रियाशक्तिविस्फारनिरूपणप्रसङ्गेन संबन्धपुरःसरं सामान्यादीनां तत्त्वम् उपपादितम्, अधुना तु संबन्धतत्त्वमेव एकघनतया व्युत्पादनीयम्। तच्च द्विविधमेव परमार्थतः ज्ञाप्यज्ञापकता कार्यकारणता च, तत्र पूर्वस्यां मानमेयभावादिचिन्तास्पदभूतायां सर्वम् उक्तचरं वक्ष्यमाणं च आयत्तं—प्रमाणाधीना वस्तुसिद्धिः इति तत्र

---

क्रमणे करणैः स्वाधिकारे क्रियमाणमात्मबलाक्रमणं दृष्टान्तीकृतम्, करणानीव च प्रमाणानि प्रमाकरणत्वात्, प्रसिद्धं वस्तु च दृष्टान्तीक्रियते इति स्फुटमेव प्रमाणानां प्रमेयविषयप्रमाजनने स्वबलाक्रमणक्रमेण शिवमुखावलोकित्वम्। अयमेव चाभिप्रायः

"यथा ह्यर्थो स्फुटो दृष्टः सावधानेऽपि चेतसि।
भूयः स्फुटतरो भाति स्वबलोद्योगभावितः॥"

इत्यत्र कारिकायामपि श्रीस्पन्दशास्त्रेऽभिप्रेतः। चेतो हि बहिर्मुखबोधरूपत्वेन प्रमाणमेव, भानं प्रमा, स्वबलोद्योगभावनं स्वबलाक्रमणमिति, एतेन प्रमाणादिनिर्णयमत्र करिष्यतीति सूचितम्।

एवं मंगलं संपाद्य समस्ताह्निकतात्पर्यकथनं समस्तव्यस्तत्वाभ्यां करोति "एवम्" इति

अत्र टीका :—

क्रियाशक्तेर्यः विस्फारः—सामान्यादिभावेन विशिष्टं स्फुरणं तस्य निरूपणप्रसंगेन, संबन्धपुरस्सरम्—संबन्धप्रधानम्, तेन दत्तसत्ताकमिति यावत्। उपपादितम्—उपपत्त्या स्थापितम्, एकघनतया—एकपिण्डतया, निःसंधिबन्धत्वेनेति यावत्। व्युत्पादनीयम्—कथनीयम्। तच्च—संबन्धतत्त्वं च। "परमार्थतः" इत्यनेन संयोगादीनां काल्पनिकत्वं दर्शितम्। यद्यपि तार्किकादिभिः संयोगसमवाययोरेव सहजत्वमुक्तं तथापि तयोर्व्यवहारे तादृगुपयोगाभावादेवमुक्तम्, इह व्यवहारमात्रसत्यत्वसाधनात् द्वैविध्यमेव विभज्य दर्शयति "ज्ञाप्य" इति। तत्र—द्वयोर्मध्ये। पूर्वस्याम्—ज्ञाप्यज्ञापकभावरूपायाम्, आदिशब्दात् मात्रादिग्रहणम्, उक्तचरम्—पूर्वमुक्तम्। आयत्तम्—अधीनम्। कुत इत्यपेक्षायामाह "प्रमाण" इति। इतिशब्द एवंशब्दार्थे। ननु ततः

तत्र प्रसिद्धेः, एवं च प्रकृतसमर्थनीयवस्तूपयोगितया स्वयं च संबन्ध रूपतया अवश्यविचार्यां मानादिस्थितिं निरूपयितुम्

'इदमेतादृक्.............................।'

इत्यादि,

'...............ईशादिव्यवहारः प्रवर्त्यते ॥'

इत्यन्तं श्लोकसप्तदशकेन आह्निकान्तरमारभ्यते। तत्र श्लोकद्वयेन प्रमाणतत्फलस्वरूपम्, ततः प्रमेयस्य स्वरूपं निरूपयितुं प्रत्याभासं प्रमाणस्य व्यापारो न तु स्वलक्षणात्मकवस्त्वेकनिष्ठतानियमेन--इति दर्शयितुं प्रत्यवमर्शबलेन आभासव्यवस्था, इति दशभिः श्लोकैः उच्यते, तत्प्रसंगात् मिथ्याज्ञानस्वरूपं श्लोकेन, प्रमेयस्वरूपसिद्धिश्च प्रकृतमपि ईश्वरवादम् अवलम्ब्य घटते-इति श्लोकेन उपदर्श्यते, स च एष सर्वः प्रमाणतत्फलप्रमेयादिप्रविभागः सति प्रमातरि प्रदर्शितरूपे, ततो न तस्य प्रमेयता येन अत्रापि प्रमाणव्यापारसंभवः, केवलं व्यवहारमात्रसिद्धिफलं प्रमाणम् अत्र, इति श्लोकत्रयेण—इति तात्पर्यार्थः।

यदुक्तम् 'क्रियासंबन्धादिबुद्धयो न भ्रान्तिस्वभावाः' इति, तदेव निर्णेतुं प्रमाणतत्फलस्वरूपं तावत् प्रसिद्धमनुवदति।

---

किमित्यत आह "एवं च" इति। प्रकृतम्—आरब्धं यत्समर्थनीयं वस्तु—क्रियाशक्तिरूपं समर्थनीयं वस्तु तत्रोपयोगितया। मानादिस्थितिम्—मानमेयादिव्यवस्थाम्। आह्निकान्तरम्—अन्यदाह्निकम्। तत्र—श्लोकसप्तदशकमध्ये। तत्फलस्वरूपम्—प्रमास्वरूपम्। ततः-तदनन्तरम् प्रत्याभासम्—सर्वेष्वाभासेषु, स्वलक्षणात्मकम्—स्वलक्षणरूपं यद्वस्तु तत्र या एकनिष्ठता तस्या यो नियमस्तेन, श्लोकेन. त्रयोदशेनेत्यर्थः। श्लोकेनोपदर्श्यते इति, चतुर्दशेनेत्यर्थः। प्रदर्शितरूपे—ज्ञानाधिकारे निर्णीतस्वरूपे प्रमातरि सति भवतीति सम्बन्धः। तस्य—प्रमातुः, अत्रापि—प्रमातर्यपि, अत्र—अस्मिन्प्रमातरि तात्पर्यार्थः— समस्ताह्निकस्य व्यस्तत्वेनाभिप्रायः।

अथ प्रथमद्वितीययोः श्लोकयोरवतरणिकां करोति "यदुक्तम्" इति। स्पष्टम्

इदमेतादृगित्येवं यद्वशाद्व्यवतिष्ठते ।
वस्तु प्रमाणं तत्सोऽपि स्वाभासोऽभिनवोदयः ॥ १ ॥
सोऽन्तस्तथाविमर्शात्मा देशकालाद्यभेदिनि ।
एकाभिधानविषये मितिर्वस्तुन्यबाधिता ॥ २ ॥

यस्य वशात्—सामर्थ्यात्, वस्तु 'नीलसुखादिकं' व्यवतिष्ठते—नियतां प्रकाशमर्यादां न अतिवर्तते 'इदमिति' स्वरूपेण 'एतादृक्' इति च विशेषणभूतनित्यत्वानित्यत्वादियोगेन, तल्लोके 'प्रमाणम्' इति स्थितम्, तच्च विवेचकेन विचार्यम्—इह वस्तुनः स्वरूपं

---

एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे।[1] 'इदमेतादृक्' इति।

अत्र टीकाः—

"यद्वशात्" इति व्याचष्टे "यस्य" इति। यस्य—वक्ष्यमाणस्वरूपस्य "वशात्" इत्यवयवं व्याचष्टे "सामर्थ्यात्" इति। "नील" इत्यनेन बाह्यवस्तुपरामर्शः। "सुखम्" इत्यनेन आन्तरवस्तुपरामर्शः। "आदि" शब्देन सर्वेषां बाह्यान्तरवस्तूनां ग्रहणम्। "व्यवतिष्ठते" इति व्याचष्टे "नियताम्" इति। नीलसुखादिरूपेणैव भासते इत्यर्थः। "इदमेतादृगित्येवम्" इति अवयवसमुदायरूपं पदं व्याचष्टे "इदम्" इति। "इदम्" इत्यवयवं व्याचष्टे "स्वरूपेण" इति। "एतादृक्" इत्यवयवं व्याचष्टे "विशेषण" इति। विशेषणभूतानि च तानि नित्यत्वानित्यत्वादीनि[2]—नित्यत्वानित्यत्वादिरूपा धर्माः तेषां तैः सह वा यो योगः—सम्बन्धस्तेन। तृतीयाविभक्त्या एवंशब्दव्याख्या। "स्थितम्" इति योग्यतयाख्यातम्। एतेन "तत्" इत्यन्तं व्याख्या कृता। तथा चैवमत्रयोजना।

---

1. There is a gap after व्याचष्टे in the manuscript. Bhāskara's practice is to quote the first words of the verse to be explained. We have, therefore, filled up the gap accordingly.

2. नित्यत्वानित्यत्वानित्यत्वरूपा धर्मस्तेषाम्—C.

स्वात्मवशेनैव न तावत् व्यवतिष्ठते--जडत्वात्, मम नीलं प्रकाशते चैत्रस्य वेति च तदा कथमवभासः, तस्मात् अन्यवशेन व्यवतिष्ठते, अन्योऽपि चेत् जडः तत् अन्धेन अन्धस्य हस्तादानम्, तस्मात् अन्योऽसौ संविदात्मा, सोऽपि यदि शुद्धो निर्विशेषो न तर्हि नीलस्यैव व्यवस्थाहेतुः भवेत्–पीतादावपि तस्य तथात्वात्, तदसौ नीलोपरक्तो

---

यद्वशाद्वस्तु इदमेतादृगित्येवम्—इदमित्येवम् एतादृगित्येवम् च व्यवतिष्ठते लोके तत्प्रमाणमिति स्थितम्। अत्र दुर्बोधत्वेन विचारं विधेयत्वेन प्रतिजानीते, "तच्च" इति। "तच्च" प्रोक्तस्वरूपं वस्तु स्वरूपधर्मव्यवस्थापकं प्रमाणं च, विवेचकेन—विचारकेन, विचार्यम्—विचारविषयीकार्यम्। विचारमेव करोति "इह" इति। इह—भासमाने जगति ; "तावत्" इति। नात्र कस्यापि विप्रतिपत्तिरिति भावः। स्वात्मवशेन—वस्तुस्वरूपसामर्थ्येन न व्यवतिष्ठते, नियतया मर्यादया न वर्तते इत्यर्थः। कुत इत्यपेक्षायामाह—"जडत्वात्" इति। जडो हि न स्वयं व्यवस्थां कर्तुं शक्तः, चेतनादेव स्वरूपलाभात्। हेत्वन्तरमाह 'मम'' इति। तदा, यदि वस्तुतः स्वात्मवशेनैव व्यवस्था भवेत्तदा इत्यर्थः। इति—एवम्, आभासः—स्फुरणम्, कथं च—स्यात्, न स्यादित्यर्थः। इति किमिति? मम नीलं प्रकाशते, चैत्रस्य वा प्रकाशते इति प्रमातृलग्नतयावभासो न स्यादिति भावः। यद्यप्यन्यभासनमन्यस्य गोचरे न, तथापि व्यवहारवशेनैवमुक्तम्। फलितमाह "तस्मात्" इति। तस्मात् तच्चद्वस्तु अन्यवशेन व्यवतिष्ठते। तस्यान्यस्य विचारं करोति 'अन्योऽपि' इति। अन्योपि—अहंरूपश्चैत्ररूपो वा, चेत्—यदि, जडो भवेत् तत्—तदा इदम् अन्धेनान्धस्य हस्तादानम्—हस्तावलंबः भवति। अत्रापि फलितमाह "तस्मात्" इति। तस्मात्—ततः कारणात्। असौ, अन्यः संविदात्मा—चेतनः युक्त इति शेषः। ननु स संविदात्मैव भवतु ततः किम् इत्यत आह—"सोऽपि" इति। "सोऽपि—संविदात्मापि, यदि शुद्धः, अत एव निर्विशेषः सर्वेषु नीलादिष्वभेदेन प्रमातृतया स्थितो भवति, तर्हि—तदा, नीलस्यैव व्यवस्थाहेतुः–केवलं नीलग्राहकः, न भवेत्, अपि तु पीतादावपि तस्य—संविदात्मनः, तथात्वात्—व्यवस्थापकत्वात्, अन्यथा शुद्धत्वायोगात्। तत्—तस्मात्कारणात् असौ—आभासः, नीलोपरक्तः—विषयतया स्थितेन नील-

नीलोन्मुखो नीलप्रकाशस्वभाव इत्याभासः सन् नीलस्य व्यवस्थापकः, तत्प्रकाशस्वभावतैव हि तद्व्यवस्थापकता, स च नीलस्य प्रकाशो यदि अव्यतिरिक्तस्य, तत् पीतस्यापि स्यात्—प्रकाशात्मकचित्तत्त्वतादात्म्याविशेषात्, तेन व्यतिरिक्तीकृतस्य नीलस्य स प्रकाशः। नीलं च इत्थम् ततो व्यतिरेकाभासयोग्यं यदि सोऽप्याभासो महतः प्रकाशात् व्यतिरिच्यते[1], महाप्रकाशाव्यतिरेके तस्य ततो नीलादेः व्यतिरेकाभावप्रसंगात्, महाप्रकाशाच्च न व्यतिरेकं

---

द्रव्येणोपरक्तः[2] कृतः, तथा नीलोन्मुखः, अत एव नीलप्रकाशस्वभावः, इति—एवंरूपः सन्, नीलस्य व्यवस्थापकः, "सर्वं वाक्यं सावधारणम्" इति न्यायेन नीलस्यैव व्यवस्थाकारी भवति । कुत इत्यपेक्षायामाह—"तत्" इति। हि—यस्मात्, तत्प्रकाशस्वभावतैव तद्व्यवस्थापकता भवति। ननु ततोऽपि किम् इत्यत आह "स च" इति। अव्यतिरिक्तस्य—अस्मादभिन्नस्य नीलस्य, तत्—तदा, "स्यात्" इति। अनेन न्यायेन तस्य पीतादप्यभिन्नत्वात् इति भावः । कुत इत्यपेक्षायां स्वयमपि अमुमेव हेतुमाह "प्रकाशात्मक" इति । फलितमाह 'तेन' इति । सः—विषयतया स्थितः । ननु ततो व्यतिरिक्त एव भवतु ततः किम् इत्यत आह "नीलं च" इति। इत्थम्, एवं सतीत्यर्थः। ततः— स्वविषयप्रकाशात्, व्यतिरेकरूपो य आभासः तत्र योग्यं व्यतिरेकाभासयोग्यम्। इत्थमित्यस्याकांक्षां पूरयति "यदि" इति । सोऽप्याभासः—नीलप्रकाशरूप आभासः, व्यतिरिच्यते—व्यतिरेकं भजते, अन्यथा तद्द्वारेणैवानेनापि सहैकतासादनादिति भावः। स्वयमप्यत्र हेतुमाह "महा" इति। महाप्रकाशाव्यतिरेके—महाप्रकाशेन सहाभिन्नत्वे सति, तस्य—नीलप्रकाशस्य, व्यतिरेकाभावप्रसंगात्, व्यतिरेकप्रयोगिकाभावाख्यानिष्टापत्तेरित्यर्थः। ननु तर्हि

---

1. व्यतिरिच्येत—K. S. S.

2. नीलद्रव्येण स्वोपरक्तः कृतः—C.

किंचिदपि सहते, इति नूनं तेन[1] संकोच आत्मनि निर्भासनीयः, संविदो वस्तूनां च संकोचनप्राणो[2] नञर्थरूपोऽसौ शून्य इत्युच्यते, संकोचावभास एव च मायीयप्रमातुः उत्थानम्, अत एकया सृष्टिशक्त्या प्रमातृप्रमाणप्रमेयोल्लासः परमार्थतः, तेन—शून्यधीप्राणदेहा-

---

महाप्रकाशोऽपि नीलादेर्भिन्नो भवतु येन नोक्तदोषप्रसंग इत्यत आह "न सहते" इति, सहत्वायोग्यत्वापातात् इति भावः। फलितमाह "इति नूनम्" इति। इति—अतः कारणात्। नूनम्—निश्चये, तेन—महाप्रकाशेन, आत्मनि—नीलविषयतया संचार्यमाणे स्वात्मभागे, संकोचः—परिमितता, स्वस्मात् नीलाच्च भेदः, निर्भासनीयः—परमार्थतः सन्नपि स्वशक्तिवशेन भासयितुं योग्यः। ननु भासयतु ततः किम् इत्यत आह "संविदः" इति। पण्डितैः असौ—निर्भासनीयः संकोचः, शून्य इति—शून्यप्रमातेति, उच्यते। कुत इत्यपेक्षायां हेतुगर्भं विशेषणमाह "नञर्थरूपः" इति। यतः सर्वभरितमहाप्रकाशान्निर्गतत्वेन तावद्विषयोपश्लेषराहित्येन च न किञ्चिद्रूपत्वाद् अभावरूप इत्यर्थः। नञर्थस्य चाभावस्य शून्यत्वं स्फुटमेव, परमार्थतो नञर्थाभावत्वेन रूपपदग्रहणम्। पुनः कीदृशः? संविदः वस्तूनां च नीलादीनां च यत्संकोचनम्—अन्योन्यतोऽव्यापकतासंपादनम् तदेव प्राणः यस्य सः, तेन लब्धसत्ताक इत्यर्थः। अस्यैव ग्राहकत्वं कथयति—"संकोच" इति। मायीयप्रमातुः, परप्रमातृव्यतिरिक्तस्य ग्राहकस्येत्यर्थः। उत्थानम्—प्रादुर्भावः। एतेन फलितं वस्तु कथयति "अत एकया" इति। अतः कारणात्, एकया—नतु प्रत्येकं भिन्नतया स्थितया, "सृष्टिशक्त्या" परप्रमातृगतया कर्तृत्वज्ञातृत्वरूपया सृष्टिविषयत्वेन सृष्टिरूपया शक्त्या, परमार्थतः प्रमातृप्रमाणप्रमेयोल्लासः—शून्यादिरूपाणां प्रमातॄणां प्रमाणानां नानाविधानां प्रमेयानां च प्रादुर्भावो भवति, युगपदेव सर्वं प्रादुर्भवतीति भावः, यद्यपि "नासर्गं ब्रह्म विद्यते" इति न्यायेन सर्वदैवात्र सर्वमस्त्येव, तथापि शिष्यबोधनार्थं प्रकल्प्यैवमुक्तम्। अत्रापि फलितमाह "तेन" इति। तेन—

---

1. नूनं महाप्रकाशेन संकोच—K. S. S.
2. अन्योन्यसंकोचनप्राणः—K. S. S.

द्युपाध्याश्रयस्वीकारात्मकसंकोचपरिग्रहसंकुचितात् मायाप्रमातुः अनन्तकालान्तर्मुखसंवेदनरूपात् स प्रमाणाभिमत आभासो यावत् प्रमेयोन्मुखतास्वभावः तावत् प्रमेयस्य देशकालाकाराभाससंभेदवत्त्वात् सोऽपि तथैव क्षणे क्षणे अन्यान्यरूपः[1] स्रष्टव्यः, तदुक्तम् 'अभिनवोदयः'

---

यत एकया सृष्ट्या प्रमात्राद्युल्लासः ततः कारणात्, यावत्—यावति समये, शून्यधीप्राणदेहादिरूपाः, आदिशब्देन प्रमेयग्रहणम्। जडाभावावस्थायां तेषामपि प्रमातृत्वात्, ये उपाधयस्तेषामाश्रयः—आश्रयणं तस्य यः स्वीकार अंगीकरणं तदात्मको यः संकोचस्तस्य यः परिग्रहः तेन संकुचितात्—स्वातन्त्र्येण साधितसंकोचभावात्, मायाप्रमातुः महाप्रकाशरूपात्परप्रमातुर्भिन्नतया प्रादुर्भूतात् भेदप्राणत्वेन मायाश्रितात्प्रमातृतत्वात्। कीदृशात्? अनन्तकालम्—अपरिच्छिन्नकालम्, सर्वदेति यावत्, अन्तर्मुखम्—बाह्योन्मुखतासमयेऽप्यहं[2] पश्यामीत्यहंपरामर्शैकनिष्ठत्वेन स्वमात्रविषयं यत् संवेदनम्—परामर्शाख्यो व्यापारः तत् रूपं यस्य तादृशात्। सः—प्रसिद्धः, प्रमाणाभितः—प्रमाणेति नाम्ना संमतः आभासः—भवति। कीदृश इत्यपेक्षायामाह "प्रमेयोन्मुखता" इति। एतेन संकुचितस्य महाप्रकाशस्याहमित्यन्तर्मुखतावस्थायां प्रमातृत्वम्, इदमिति बाह्योन्मुखतायां प्रमाणत्वम्। अस्मिन्समयेऽहंपश्यामीत्यन्तर्मुखतायाः स्फुरणात् प्रमातृत्वस्य अपरिच्छिन्नत्वमेवेति सूचितम्। यावदित्यस्याकांक्षां पूरयति "तावत्" इति तावत्—तस्मिन्समये एव, तथा—तद्वत्, सोऽपि—प्रमाणाभासोऽपि, क्षणे क्षणे अन्यान्यरूपः—न त्वन्तर्मुखप्रमातृवदेकरूपः, स्रष्टव्यः—सर्जनीयः। कुत इति हेत्वपेक्षायामाह "प्रमेयस्य" इति। प्रमेयस्य—प्रमाणविषयस्य, यत् देशकालाकाराभासैः संभेदवत्त्वम् उपरक्तत्वं तत् विद्यते यस्य तस्य भावस्तत्वं तस्मात्, क्षणे क्षणे, देशादिकृतभेदेन नवीनतया स्फुरणादिति यावत्, प्रतिप्रमेयं हि प्रमाणं भिन्नमेव युक्तमिति भावः।

नन्वेतत्केनोक्तम् इत्यपेक्षायामवशिष्टं "स्वाभासः" इत्यादिश्लोकखण्डं व्याख्यास्यन् तदन्तर्गतम् "अभिनवोदयः" इतिपदमेतद्वाचकत्वेन योजयति

---

1. अन्यान्याभासरूपः स्रष्टव्यः—K.S.S.
2. बाह्योन्मुखसमयेऽपि—C.

इति—अभिनवः—क्षणपरिवासम्लान्यापि[1] न कलङ्कितः, तेन 'नवनवोदय' इत्युक्तं भवति, सोऽपि यदि तथाभूतो मायाप्रमातृलग्नो न भवेत् ततो मम नीलावभासो यस्य तस्यैव पीताभासो मम इति न स्यात्, अस्ति च इदं स्वसंवेदनं—यत् सर्वत्र अबाध्यमानम्, इत्येवं स्वत्वेन आभासमानो य आभासो-नवनवप्रमेयौन्मुख्यात् नवनवोदयः स प्रमाणम् यतः प्रमां विधत्ते। कासौ ? प्रमाणफलस्वभावा इति चेत्, आह—स एव बोधरूप आभासो मितिः प्रमाणफलम् इति संबन्धः।

---

"तदुक्तम्" इति। अनेन पदेनैवोक्तमित्यर्थः। अस्य पदस्य व्याख्यां करोति "**अभिनव**" इति। **अभिनव** इत्यवयवं व्याचष्टे "**क्षण**" इति। क्षणं यो परिवासः—अवस्थानम्, तत्कृता या म्लानिस्तया। एतेन फलितमर्थमाह "**तेन**" इति। एतेन "**अभि**" पदस्य वीप्सावाचकत्वं द्योतितम्। "**सोपि स्वाभासः**" इति व्याख्यातुमवतरणिकां करोति "**सोऽपि यदि तथाभूतः**" इति। **सोपि**—प्रोक्तस्वरूपं तत्प्रमाणमपि, **इदम्**—अयमाभासः, **स्वसंवेदनम्**—स्वानुभवसिद्धम्, **यद्** इत्यस्याकांक्षां पूरयति "**इति**" इति। यदिदमस्ति इत्यतः कारणात्। एवं भवति। एवं किम् इत्यपेक्षायां "**स्वाभास**" इति अवयवविभागेन व्याचष्टे "**स्वत्वेन**" इति। **स्वत्वेन**—ग्राहकाश्रयममताविषयत्वेन, स प्रमाणम्[2] इत्यन्तं योजना सूचिता। एवमत्र योजना—**सोऽपि**—प्रमाणमपि अभिनवोदयस्तथा स्वाभासो भवति, इति। कुतः प्रमाणमित्यपेक्षायामध्याहृत्य हेतुमाह "**यतः प्रमाम्**" इति। एतेन प्रथमश्लोकः कृतव्याख्यः।

अथ द्वितीयं श्लोकं व्याख्यातुमवतरणिकां करोति "**कासौ**" इति। **प्रमाणफलस्वभावा**—करणभूतप्रमाणफलस्वरूपा, **असौ**—प्रमा का भवति **इति चेत्**—एवं यदि अवोचस्तत्, **आह**—आचार्यः कथयति। किमाहेत्यपेक्षायामेतदुत्तररूपं द्वितीयं श्लोकं व्याचष्टे "**स एव**" इति। "**सः**" इति व्याचष्टे "**स एव**" इति। सर्वं वाक्यं सावधारणमिति न्यायमाश्रित्य एवशब्दप्रयोगः। एवशब्देन तथाशब्दस्य समुच्चयार्थत्वं द्योतितम्, स एव मितिश्चेति[2]। "**मितिः**" इति व्याचष्टे "**प्रमाण**" इति। इति संबन्धः—

---

1. क्षणवासपरिम्लान्यापि—K.S.S,
2. स एव प्रमाणमिति—C.

ननु एवं पर्यायत्वमुक्तं भवेत् न तु फलभावः[1], आह—बाह्योन्मुखतया प्रकाशरूपया[2] तत्र तत् प्रमाणम्, या तु तस्यैव अन्तर्मुखात्मा विमर्शरूपता प्राक् उपपादिता तत्स्वभावेन केवलं विषयदशासंकुचितेन स एव बोधः फलम्, यथाहि 'यः शूरोऽहं स एव विजयी' इति एकनिष्ठे शूरत्वविजयत्वे विवेकवता हेतुफलभावेन व्यवस्थाप्येते, यतो हि 'अहं शूरः ततो विजयी' इति। एवं यतो नीलप्रकाशः ततो 'नीलमिदम्'

---

अत्र द्वितीयश्लोके एवमेव संबन्धः। "अन्तर्विमर्शात्मा" इति पदद्वयं व्याख्यातुमवतरणिकां करोति "ननु एवम्" इति। एवम्-अनेन प्रकारेण, पर्यायत्वम्-पर्यायभावः, "न तु फलभावः" इति, फलं हि करणादिभिन्नमेव युक्तम्, यथा [3]परशोः छिदा, न चात्र तत्, द्वयोरप्येकबोधरूपत्वादिति भावः। अत्रोत्तरं कथयति—"आह" इति। सूत्रकार इति शेषः। किमाहेत्यपेक्षायामेतदेव पदद्वयं व्याचष्टे "बाह्य" इति। तत्र—प्रमाणत्वफलत्वद्वयमध्ये, तत्—वस्तुव्यवस्थापकः बोधः, प्रकाशरूपया बाह्योन्मुखतया-इदं पश्यामीत्यादिरूपया, प्रमाणं भवति। तु—व्यतिरेके, तस्यैव—बोधस्य, याऽन्तर्मुखात्मा विमर्शरूपता-अहमिति स्थिता विमर्शस्वरूपता, प्राक्-ज्ञानाधिकारे, उपपादिता-उपपत्त्या स्थापिता, तत्स्वभावेन-तेन स्वरूपेण, स बोध एव--प्रमाणरूपो बोध एव, फलं भवति। तत्स्वभावेन कीदृशेन? केवलं विषयदशासंकुचितेन-विषयोपरागवशतः परिमिततां गतेन, अन्यथा प्रमातृत्वापातात्, अन्तर्मुखो बोधो हि विषयोपरागावस्थायां प्रमारूपः, तदनारूषितत्वे प्रमातृरूपः। परमार्थविचारे तु परमप्रकाशाद्विच्छिन्नीभूतः प्रकाशः स्वरूपेण प्रमाता, बाह्योन्मुखतायां प्रमाणम्, पुनः स्वरूपोन्मुखतायां प्रमा, आश्यानीभावे प्रमेयमिति। एकस्य करणफलभावे दृष्टान्तमाह "यथाहि" इति। यथाहिशब्दो दृष्टान्तत्वद्योतकः। एकनिष्ठे-एकपुरुषविषये। व्यवस्थापनमेव दर्शयति "यतो हि" इति। दार्ष्टान्तिकयोजनां करोति "एवम्" इति। परामर्शः—प्रमा, अत्र वृद्धसम्मतिमाह

---

1. फलस्वरूपम्—K. S. S.
2. प्रकाशरूपतया—K. S. S.
3 Here the construction is a little confused.

इति परामर्श इति एकरूपत्वेऽपि हेतुफलभावः, यथोक्तं

'तद्वशात्तद्व्यवस्थानात्...... ।'

इति। किं च इह व्यापाररूपमेव फलं व्यापारश्च व्याप्रियमाणात् व्यापार्यमाणात् वा अनन्याकार एव सिद्धः, इति—अभेदः प्रमाणफलयोः विमर्शबलेन च यतः प्रमाणं विमर्शश्च शब्दजीवितः शब्दश्च आभासान्तरैः देशकालादिरूपैरनामृष्टे एकत्रैवाभासमात्रे प्रवर्तते—घट इति लोहित इति, ततो देशकालाभासयोः स्वलक्षणत्वार्पणप्रवणयोः अनामिश्रणात् सामान्यायमाने आभासे प्रमाणं प्रवर्तते,

---

"यथोक्तम्" इति। किम् इत्यपेक्षयामाह "तद्वशात्" इति। "तद्वशात्" इति हेतुभावकथनम्, "तद्व्यवस्थानात्" इति फलभावकथनम्, इति शब्दः उक्तसमाप्तौ। पक्षान्तरमाह—"किं च" इति। इह—अस्मिन्संवेदनपथे, व्याप्रियमाणात्—प्रमातुः, व्यापार्यमाणात्—प्रमाणात्, अनन्याकार—एव—अभिन्न[1] एव। "देशकालाद्यभेदिनि" इति व्याचष्टे "विमर्शबलेन" इति। यतः कारणात् प्रमाणं विमर्शबलेन भवति, विमर्शाभावे हि प्रमाणगृहीतमपि वस्तु अगृहीतकल्पमेव, विमर्शश्च शब्दः जीवितमस्येति तादृशः भवति शब्दस्मृतिरूपत्वात्। शब्दश्च देशकालादिरूपैः—देशकालाकारस्वरूपैः आभासान्तरैः—वस्तुमात्रावभासादन्यैराभासैः अनामृष्टे—अमृष्टे, एकत्रैवाभासमात्रे—सामान्यरूपे केवले आभासे, प्रवर्तते—प्रवृत्तिं भजते। कथमित्यपेक्षायामाह "घट इति"। "घट" इति—घटत्वपरामर्शः, "लोहित" इति तद्रूपपरामर्शः, ततः—तस्मात्, स्वलक्षणत्वस्य—स्वलक्षणभावस्य यदर्पणम्—संपादनम्, तत्र प्रवणयोः, तत्तद्देशकालावच्छिन्नमेव हि स्वलक्षणं स्वं लक्षणं भवति, देशकालानवच्छिन्नस्य सामान्यत्वात्। ईदृशयोः देशकालाभासयोः अनामिश्रणात्—मिश्रीभावाभावात्, सामान्यायमाने—परमार्थतः सर्वतो व्यवच्छेदेन स्थितत्वाभावात् सामान्यत्वाभावेऽपि सामान्य इव स्थिते, आभासे-घटाभासे लोहिताभासे वा, प्रमाणं प्रवर्तते, प्रवृत्तिं भजते, न तत्स्वलक्षणत्वापादकयोर्देशकालयोः, पृथक् प्रमाणप्रवृत्तिविषयत्वात्, अन्यथा

---

1. अभिनव एव—C

'अयम्' इत्यपि हि अवभास आभासान्तरानामिश्रे पुरोऽवस्थिते भावावभासमात्रे,[1] इति उक्तं श्रीमदाचार्यपादैरेव--

'नियतेऽप्ययमित्येवं परामर्शः पुरःस्थिते ।
सर्वभावगतेदन्तासामान्येनैव जायते ॥'

इति । तत आभासमात्रमेव[2] वस्तु, स्वलक्षणं तु तदाभाससामानाधि-

---

तयोरप्येतद्रूपत्वापातात्, प्रमाणभेदादेव हि प्रमेयभेद इति भावः । ननु घट इत्याभासेऽयं न्यायो भवतु, "अयम्" इति योऽङ्गुलीनिर्देशेनावभासः तत्र तु स्वलक्षणस्य स्फुटमेव ग्रहणम् इत्यत आह "अयम् इत्यपि" इति । आभासान्तरानामिश्रे देशकालाभासमिश्रीभावरहिते, भावाभासमात्रे, घटाभासमात्रे लोहिताभासमात्रे वा, केनोक्तम् इत्यपेक्षायामाह—'आचार्य' इति । केन वाक्येनोक्तम् इत्यत आह "नियते" इति । अयमत्रार्थः अयमित्येवं परामर्शः पुरःस्थिते नियतेऽपि--अग्रे स्थिते परिमिते घटादावपि, अपि शब्देन अनियतेऽत्र सन्देह एव नास्ति इति सूचितम् । सर्वभावेषु गता या इदन्ता तस्याः सामान्येनैव साधारण्येनैवं, जायते । अयं भावः——पुरुषोऽयमिति पुरोगतं नियतं घटादिग्रहणमपि तत्स्वलक्षणं न गृह्णात्येव, अन्यथा सर्वसामान्येदंशब्दोच्चारायोगात्, यदा त्वन्यैः प्रमाणैर्गृहीतयोर्देशकालयोस्तत्र योजनां करोति "अयमिदानीमिह" इति तदैव तत्स्वलक्षणग्रहणम् देशकालवशेनैव तस्यासाधारणस्वरूपत्वभावनादिति । इति शब्द आचार्यवाक्यसमाप्तौ । फलितमाह "ततः" इति । ततः-ततः कारणात्,[3] आभासमात्रमेव-केवलः सामान्याभास एव, भवति, स्वप्राधान्येन स्थितत्वेन देशादियोजनानपेक्षत्वात् । स्वलक्षणं वस्तु न भवति, देशादियोजनाप्राणत्वेन काल्पनिकत्वात् । एतेन सामान्यस्यावस्तुत्वं कथयतां बौद्धानां स्थूलबुद्धित्वं दर्शितम् । ननु तर्हि स्वलक्षणग्रहणं कथं सिद्ध्यति इत्यत आह "स्वलक्षणं तु" इति । स्वलक्षणम्—अन्याननुयायि स्वरूपम्, तदाभासानां--देशकालवस्तुरूपाभासानां यः सामाना-

---

1. पुरोऽवस्थितावभासमात्रे—K. S. S.
2. तत एवाभासमात्रमेव--K. S. S.
3. कारणात्—C.

करण्याभासरूपम् आभासान्तरम् एकम् अन्यदेव, तत्र च पृथगेव च प्रमाणं, तत्परं मिश्रीकारेषु तेषु आभासेषु गृहीतग्राहि न प्रमाणम् इति अग्रे भविष्यति, अध्यवसायस्य अस्मदुक्तनयेन शब्दप्राणितस्य प्रत्याभासविश्रान्तौ तदपेक्षमपि प्रामाण्यं वदता प्रत्याभासनिष्ठमेव प्रामाण्यमुपेत्यम्, इत्यास्ताम्, किमवान्तरेण।

---

धिकरण्याभासः--मिश्रताभासस्तद्रूपं सत्, **आभासान्तरं** वस्त्वाभासादन्य एवाभासो भवति। तत्र चान्यदेव पृथक् प्रमाणं भवति एतेन तार्किकमत-निरासः। ते ह्येकस्यैव प्रमाणस्य सामान्यस्वलक्षणविषयत्वं कथयन्ति, तत्रापि च स्वलक्षणस्य श्रेष्ठत्वमिति। स्वलक्षणग्राहकस्य प्रमाणस्याप्रमाणत्वं साधयति **"तत्परम्"** इति। **तत्**–प्रमाणम्, **मिश्रीकारेषु**–मिश्रीकाररूपेषु, **तेषु आभासेषु परम्**–केवलम् **गृहीतग्राहि** भवति। प्रथमं हि सामान्यादित्रयं स्वस्वविषयैः प्रमाणैर्गृहीतमेव, तदनन्तरमिदं प्रमाणं विशेषणविशेष्यभावेन योजनामात्रमेव करोति, इत्यतस्तत्प्रमाणं न भवति, अगृहीतग्राहित्वात्प्रमाणस्य। तदुक्तम्:—

"अनधिगतार्थाधिगन्तृ प्रमाणम्"।

इति। यद्यप्येतद्दर्शने भाते सर्वत्र प्रामाण्यमेव, तथापि बौद्धादिभंगार्थमेवमुक्तम्। नन्वस्मिन्वस्तुनि विस्तारो युक्त इत्यत आह **"अग्रे"** इति। अत इह न तन्यते इति भावः। बौद्धैर्दूषितमध्यवसायप्रामाण्यं[1] सिद्धतया दर्शयति **"अध्यवसायस्य"** इति। **अस्मदुक्तनयेन**–अस्मदुक्तरीत्या, **शब्दप्राणितस्य** स्मृतिद्वारेण विकल्पभावमागतस्य शब्देन दत्तसत्ताकस्य, **अध्यवसायस्य**-सामान्यविषयस्य विकल्पकार्यस्याध्यवसायस्य, **प्रत्याभासविश्रान्तौ**–ग्रहणान्यथानुपपत्त्या प्रत्याभासं पर्यवसितत्वे सति, **तदपेक्षमपि**–अध्यवसायापेक्षायुक्तमपि, न तु प्रकाशमात्रापेक्षम्, **प्रामाण्यं वदता**–कथयता शैवेन अर्थात्तस्याध्यवसायस्य **प्रत्याभासनिष्ठम्**–सर्वेष्वाभासेषु न तु योजनामात्रेण निष्ठा यस्य तादृशम्, **प्रामाण्यमुपेत्यम्**–अंगीकार्यम्, **इति**–एतत्, **आस्ताम्** भवतु, यतः **अवान्तरेण**—अप्रकृतेन, **किम्**, न किञ्चिदित्यर्थः।

---

1. बौद्धैर्दूषितं मध्यप्रामाण्यम्—C.

ननु यदि विमर्शः प्रमाणव्यापारः स तर्हि द्विचन्द्रेऽपि अस्ति ? मैवम्, स हि संस्कारयोगात् आत्मानमभिमतप्रसिद्धार्थक्रियाप्राप्तिपर्यन्तमनु-[1]बन्धयन् अनुन्मूलितवृत्तिः स्थिरः सन् तथा भवति, मध्ये पुनरुन्मूलनं चेत् सहते न तर्हि असौ तथा विमर्शः, नायं विमर्शः पूर्वमपि-एकेन अन्तर्मुखेन वपुषा पूर्वमेव-तस्य निर्मूलनात्, स्वसंवित् अत्र च साक्षिणी, तदेव 'न इदं रजतम्' इति वृत्तपूर्वस्यैव विमर्शस्य अविमर्शी-करणं संवेद्यते।

---

**अबाधिता** इति पदं व्याख्यातुमाह "ननु" इति। सः—विमर्शः, उत्तरमाह "मैवम्" इति। कुत इत्यपेक्षायामाह "स हि" इति। हि—यस्मात्, सः—विमर्शः, **संस्कारयोगात्**—संस्कारवशतः, अभिमता चासौ प्रसिद्धा च याऽर्थक्रिया तस्याः या प्राप्तिः सा पर्यन्ते यत्र तत्, तावत्कालमिति यावत्। **आत्मानम्**—परविमार्शाख्यं स्वरूपम् **अनुबन्धयन्**—अनुवर्तयन्, अत एव **अनुन्मूलितवृत्तिः**—अबाधितवृत्तिः सन्, **तथा**—मितिरूपम् **भवति**। **पुनः**—पश्चान्तरे, **मध्ये चेत्**—यदि, **उन्मूलनम्**—बाधाम्, **सहते तर्हि असौ**—विमर्शः, **पूर्वमपि तथा**—मितिरूपो न भवति। कुत इत्यपेक्षायां हेतुमाह "**एकेन**" इति। एकेन—एकतया स्थितेन, अव्यभिचारेणेति यावत्, **अन्त-मुर्खेन वपुषा**—स्वरूपेण, न द्विचन्द्र इति रूपेण[2] व्यभिचारिणेति यावत्। **पूर्वमेव**—पूर्वकाल एव, **तस्य**—द्विचन्द्रविमर्शस्य **उन्मूलनात्**—बाधनात्, द्विचन्द्रो नासीदिति द्विचन्द्रप्रत्ययस्य पूर्वमेव स्थितत्वेनोन्मूलनमपि पूर्वकालीन-मेव युक्तमिति एवशब्दप्रयोगः। ननु किमत्र प्रमाणम् इत्यत आह "**स्वसं-विद्**" इति। कुतः साक्षिणी इत्यत आह "**तदेव**" इति। अर्थवशेन स्वसं-विदिति पदं तृतीयान्तीकार्यम्, यतस्तया स्वसंविदा **वृत्तपूर्वस्य**—पूर्वसंपन्नस्यैव **विमर्शस्याविमर्शीकरणम्**—लक्षणया अयमितिरूपताकरणम् **संवेद्यते**—अनुभूयते, कथम्? इति, किमिति? **इदम्**—अद्य शुक्तितया पुरो भासमानं वस्तु, **तदेव**—पूर्वमेव, **रजतं न आसीत्**, ननु पूर्वं रजतं भूत्वाद्य शुक्तिभावं

---

1. अनुवर्तयन्—K. S. S.
2. इति रूपाव्यभिचारिणे मित्ये—C.

उक्तं च एतत् बाधविचारे, वक्ष्यते च

'रजतैकविमर्श.......................,'

इत्यत्र, एवं स्थिते द्विचन्द्रेऽपि यावत् परकुतूहलसंपादनमर्थक्रियासंमतम् अपूर्ववस्तुदर्शनाय चिकीर्षति तावत् अवज्ञोपहासशोकादिविवशः परजनवचनाकर्णनेन समुन्मूल्यमानं प्राच्यं 'द्विचन्द्रोऽयम्' इति परामर्शं स्वसंवेदनादेव अभिमन्यते। नन्वेवं यत्र अर्थक्रियां न अन्विच्छति तत्र कथं बाधाबाधव्यवहारः ? मा भूत्-किं नः त्रुटितम् प्रवृत्तिर्हि न सर्वत्र प्रमाणत एव, किं तर्हि क्वचन संशयत एव, अर्थपक्षाधिक्यात् अर्थित्वतारतम्यादपि वा कृष्यादौ सविषान्न-

---

गतमिति। पूर्वमेतदुक्तमिति[1] स्मारयति--"उक्तं च" इति। "वक्ष्यते" इति। "रजतैकविमर्श" इत्यत्र, वक्ष्यमाणेऽस्मिन् श्लोके इत्यर्थः। एतेन सिद्धं वस्तु कथयति "एवं स्थिते" इति। अर्थक्रियासम्मतम्—अर्थक्रियात्वेनाभिमतम्, अवज्ञोपहासाभ्याम्—परकृतयावज्ञया[2] उपहासेन च ये शोकादयस्तेषां विवशः—आयत्ततां गतः सन् समुन्मूल्यमानमभिमन्यते-बाध्यमानं जानातीति संबन्धः। अत्र शिष्यः प्रश्नं करोति "नन्वेवम्" इति। अन्विच्छति—प्राप्नोति। उत्तरमाह "मा भूत्" इति। त्रुटितम्—नष्टम्। कुतो न त्रुटितम् इत्यत आह "प्रवृत्तिर्हि" इति। ननु केनान्येनापि प्रवृत्तिरस्तीत्यत आह "किं तर्हि" ति। क्वचन—अतिप्रयासरहिते धनव्ययरहिते कुत्रापि वस्तुनीत्यर्थः। कुत इत्यपेक्षायामाह "अर्थ" इति। अर्थपक्षस्य यदाधिक्यम्-अधिकता, अतिसाधनीयता तस्मात्। अत्रापि हेतुं दृष्टान्तरीत्याह "कृष्यादौ" इति। पुरुषो हि तत्फलसिद्धौ अनिश्चित एव कृष्यादौ प्रवर्तते। जीवनोपायत्वेन तत्फलस्य शाल्यादेरप्युत्तमत्वात्। संशयेन प्रवृत्तौ हेत्वन्तरं पक्षान्तररीत्याह "अर्थित्व" इति। अर्थित्वस्य—अर्थाधिक्याभावेऽपि साकांक्षत्वस्य यत् तारतम्यम्—मूढत्वादिना परा काष्ठा तस्मात्। अत्रापि हेतुं सदृष्टान्तमाह "सविष"

---

1. पूर्वमेतदुक्तस्स्मारयति—C.
2. परकृततयावज्ञया—C.

भोजने निश्चितसंभावितदृष्टप्रत्यवाये च चौर्यादौ प्रवृत्तिदर्शनात्, तत् अर्थित्वातिशयः लोकस्य तावत् प्रवृत्तौ[1] निबन्धनम्, स च प्रवृत्तः[2] क्वचन अनुन्मूलितप्रमितिकः प्रमाणतां प्रतिपद्यते, क्वचित् अन्यथा-भवन् विपर्ययमिति। एवम् आजन्म यतोऽनेन अभ्यस्त आजन्मश[3]-तेभ्यो वा प्रमाणाप्रमाणविभागः ततो मणिरूप्यादिवत् तत्स्वरूपम्

इति। निश्चितसंभावितदृष्टप्रत्यवाये, सविषान्नभोजने निश्चितदृष्टप्रत्य-वायत्वम्, चौर्यादौ संभावितदृष्टप्रत्यवायत्वमिति क्रमेण योजनीयम्। "आदि" शब्देन परहिंसनादिग्रहणम्। निश्चितदृष्टप्रत्यवायां सविषान्नभोजनप्रवृत्तौ मम मरणं न भवेदेवेति तर्करूपः संशयो वर्तत एव, तर्कस्य च निश्चयसंशयान्तराल-वर्तित्वेन संशयप्रत्यासन्नत्वं वर्तत एवेति न विरोधः। अर्थपक्षाधिक्यं युक्तत्वे-नावस्थाप्यार्थित्वपक्षं फलितत्वेन कथयति "तत्" इति। तत्—तस्मात्कारणात्, अर्थित्वातिशयः-लोकस्य तावत् प्रवृत्तौ निबन्धनम्—कारणं भवति। स च—लोकश्च, क्वचन, प्रमास्थले इत्यर्थः। क्वचित्, द्विचन्द्रादिरूपे अप्रमास्थले इत्यर्थः। अन्यथा भवन्, उन्मूलितप्रमितिकः सन्नित्यर्थः, विपर्ययम्—अप्र-माणताम्, प्रतिपद्यते। "इति" शब्दः प्रमेयसमाप्तौ। अत्रापि फलितं कथयति "एवम्" इति। एवं सति, ततः—तस्माद्धेतोः, पुरुषः आपातमात्र एव, न तु महाविचारानन्तरमेव, तत्स्वरूपम्—प्रमायाः स्वरूपम् विलक्षणमी-क्षते—पश्यति, कथम्?, मणिरूप्यादिवत्, स्फटिकरजतयोरिवेत्यर्थः। "आदि" शब्देन पद्मरागादेर्ग्रहणम्।' एवशब्दो विचारानन्तरं तद्वैलक्षण्येक्षण-स्यातिस्फुटत्वं द्योतयति। ततः कुतः? यतोऽनेन—पुरुषेण, आजन्म—जन्मन आरभ्य, आजन्मशतेभ्यो वा-पूर्वाणि जन्मशतान्यारभ्य वा, प्रमा-णाप्रमाणविभागः अभ्यस्तः—अभ्यासविषयतां नीतः, सर्वत्र निश्चयेन प्रवृत्तौ तस्य कुत्रापि अप्रामाण्यं न भवेदित्येवंशब्दाभिप्रायः। "आजन्मशते-भ्यो वा" इत्यनेन विकल्परीत्या कथनेन जन्मान्तरस्य पूर्वस्य भाविनोपि शैथिल्यं

1. प्रवृत्तौ तावत् निबन्धनम्—K.S.S.
2. लोकश्च प्रवृत्तः—K. S. S.
3. आपूर्वजन्मशतेभ्योऽपि वा—K. S. S.

आपातमात्र एव विलक्षणमीक्षते, अस्ति हि तस्य परमार्थतो वैलक्षण्यं

द्योतितम्। ननु तर्हि कथं शास्त्रेषु जन्मान्तरप्रसिद्धिरस्ति? सत्यम्, केषु अस्ति,[1] अध्यात्मशास्त्रेषु स्मृतिशास्त्रेषु वा? अध्यात्मशास्त्रेषु तावदेतत् जन्मापि परमार्थतोऽसत्यतया[2] संभावितम्, का कथा जन्मान्तरस्य, या त्वत्रापि कदाचिज्जन्मान्तरकथा दृश्यते, साऽवस्थापेक्षया पितृपुत्रादिभावापेक्षया वा भवत्येव, न तु स एव जीव एकतो निर्गत्य इह लोकेऽन्यं देहमाश्रयतीत्यत्र किमपि प्रमाणं दृश्यते। ननु कथं न दृश्यते? श्रीमद्भगवद्गीतादौ

"वासांसि जीर्णानि यथा विहाय"

इत्यादिवाक्यदर्शनात्। सत्यम्, अत्राप्यवस्थाभेद एव तात्पर्यम्। तथा हि—श्रीभगवता तत्रैव

"देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा"

इत्यादिकथनात्। नन्ववस्थाभेदोऽत्र दृष्टान्ततया गृहीतः न तु दार्ष्टान्तिकतया स्थितः। सत्यम्, तज्ज्ञान्प्रति दृष्टान्तरीत्या एतत्सूचितम्, तज्ज्ञा हि तज्ज्ञेषु सूचनयैवार्थान्कथयन्ति, अवस्थाभेदस्य जन्मत्वं श्रीमोक्षोपायटीकायामस्माभिर्लीलोपाख्याने विस्तरेण निर्णीतम्। अथवा श्रीभगवतोऽमरणविषयं सुखमेवात्र विवक्षितम्। तथा चैवमत्राभिप्रायः—यथा वाससस्त्यागे कष्टं नास्ति, तथा मरणेऽपि। किं च देहाभिमानिनं प्रत्येवं कथनं युक्तमेव, स हि एतच्छ्रुत्वा परलोकभयेन यत्र तत्र प्रवृत्तिं न कुरुते, एतेन स्मृतिशास्त्राभिप्रायोऽपि उक्तप्राय एव, तत एव श्रीभगवतात्र देहिन इत्युक्तम्। पुत्रस्योत्तरजन्मत्वं श्रुत्या स्फुटमेवोक्तम्।

"आत्मा वै जायते पुत्रः" इति।

तथा च पितुः पूर्वजन्मत्वं स्फुटमेव यथा वेतसशाखादेरारोप्यमाणस्य यतोऽसावानीतः स वृक्षः पूर्वजन्म तच्छाखाया उत्पन्नो वृक्षः उत्तरजन्मेति को दोषः। किं चैकचित्तत्त्वापेक्षया सर्वाणि जन्ममरणानि एकविषयाण्येव, तथा चान्यजीवजन्ममरणादिनापि[3] अन्यजीवस्य जन्ममरणादिमत्त्वं युक्तमेव, तथा च

1. शहित—C.
2. परमार्थो सत्यतया—C.
3. अन्यजीवन जन्ममरणादिनापि—C.

कारणभेदादिकृतम्, ततश्च यदार्तिं परिमितां सह्याम् अभिमन्यते तत एव अर्थितामहाग्रहेण यत्र तत्र न प्रेर्यते तदा विसंवादभीरुः निश्चितप्रामाण्यात् बोधात् अदृष्टे दृष्टेऽपि वा प्रवर्तमानो न विसंवाद्यते, इति स—प्रेक्षापूर्वकारी भण्यते, तेन लौकिकं प्रमाणस्वरूपम् अनूदितं सामान्यसंबन्धादिज्ञानेऽपि मोहात् अप्रामाण्यशंकां[1] शमयितुम्, अतएव विभागविशेषलक्षणपरीक्षादिभिरिह न आयासितो

यथाऽब्धौ क्षिप्तो जलकुंभः पुनर्नवीनमुद्धृतो यदा भवेत् तदैकत्वापेक्षया तद्गतं जलमपि परिलीय, नवीनम् पुनरुत्थितं वक्तुं शक्यते, एवं मृतोऽपि जीव एकत्वेनान्यजीवापेक्षया जात इत्यपि वक्तुं शक्यत एवेत्यलमुच्छृंखलजननियमनार्थं कल्पितशृङ्खलारूपवैदिकविधिनिषेधचोदनात्रोटनेन[2]। महाजनास्तु स्वयमेव स्वभावेन नियमिताः सन्तः एतत्परमार्थं शास्यन्त एव।
यदुक्तम्:—

विषयः प्रतिषेधाश्च स्वभावो विदितात्मनाम्।
नियामकास्तु मूर्खाणां चौराणामिव शृंखलाः॥

इति। ननु विमर्शद्वयस्य परमार्थतो यदि प्रमाणत्वाप्रमाणत्ववैलक्षण्ये हेतुर्नास्ति तर्हि कथमभ्यासपाटवेप्यापातेपि भानं युज्यते, तद्विस्फुटहेतुकस्यैव युक्तम् इत्यपेक्षायामाह "अस्ति हि" इति। तस्य—प्रमाणाप्रमाणत्वस्य, फलितं वस्तु संगृह्य कथयति, "ततश्च" इति। सह्याम्—सोढुं शक्याम्, यत्र तत्र—संशयिते वस्तुनि, ततः—आर्तेः सह्यत्वात्, विसंवादभीरुः—विप्रलंभभीतः[3] सन्, अदृष्टेलक्षणयादृष्टविषये यागादौ, सः—पुरुषः, प्रेक्षापूर्वकारी विचारपूर्वकारी, भण्यते—कथ्यते, प्रामाण्यनिश्चयानन्तरं प्रवृत्तेरित्यर्थः। एतदवष्टम्भेन लोके प्रसिद्धस्य प्रमाणकथनस्यानुवादत्वे युक्ततां साधयति "तेन" इति। तेन—यतः प्रमाणेन वस्तु निर्णीयानन्तरं प्रवृत्त एव पुरुषः प्रेक्षापूर्वकारी भण्यते, ततः कारणात् सूत्रकृता सामान्यसम्बन्धादिज्ञानेऽपि-व्यवहारकारणत्वेनातिप्रसिद्धे सामान्यादिज्ञानेपि, मोहात् अप्रामाण्यशंकाम्—बौद्धैर्मोहवशेनोत्पादितामप्रमाणत्वशंकाम्, शमयितुम्—दूरीकर्तुम्, प्रमाणस्वरूपमनूदितम्—लोके

1. अप्रामाण्याशंकाम्—K. S. S.
2. °त्रोरनेन—C
3. विप्रलंभापीतः—C.

लोकः । यत् यत् अबाधितस्थैर्यम् अत एव अप्रतिहतानुवृत्तिकं विमर्शफलं विधत्ते तत्तद् बोधरूपं बोध्यनिष्ठं प्रमातृस्वरूपविश्रान्तं प्रमाणम् इति । तच्च ऐन्द्रियके बोधे सुखादिसंवेदने योगिज्ञाने च अविवादमेव, मुख्यतयैव प्रमेयरूपे आभासे साक्षात् विश्रान्तेः ।

---

प्रसिद्धत्वेपि अनुवादरीत्या पुनः कथितम्, अतिकांक्षितं वस्तु हि पुनः पुनः कथ्यते ऐवेति भावः । ननु तर्हि विभागादि कथं न कृतमित्यत आह "अतएव" इति । अत एव-अनुवादाद्धेतोरेव, सामान्यलक्षणानुवादमात्रेणाभिप्रेतसिद्धेः लोके प्रसिद्धानां विभागादीनामनुवादो न कृत एवेति भावः । ननु लोके कथं प्रमाणसामान्यलक्षणादेः प्रसिद्धत्वमस्ति येनानूदितमित्युक्तम् इत्यपेक्षायां लोकप्रसिद्धं प्रमाणसामान्यादिलक्षणादि कथयति "यत्" इति । अप्रतिहतानुवृत्तिर्यस्य तादृशम्, स्वरूपविपर्ययासहमित्यर्थः । विमर्शफलम्—विमर्शाख्यं फलं प्रमाणमिति यावत् । बोध्यनिष्ठम् इत्यनेन प्रमातुर्व्यावृत्तिकारिणो बाह्योन्मुखत्वस्य कथनम्, "प्रमातृस्वरूपविश्रान्तम्" इति, तदाश्रयत्वात् अन्यथा बाह्यविषयत्वायोगात् इति भावः । सा च प्रमातृविश्रान्तिरहं पश्यामीति प्रयोगे स्फुटैव, इति शब्दो लोकप्रसिद्धप्रमाणसामान्यलक्षणसमाप्तौ । अस्य सामान्यलक्षणस्य विशेषेषु विश्रान्तिं दर्शयति "तच्च" इति । तच्च-प्रोक्तं सामान्यलक्षणं च, ऐन्द्रियके बोधे-बाह्येन्द्रियकृते पश्यामीति क्रियावाच्ये ज्ञाने, सुखादिसंवेदने-अन्तरिन्द्रियमनःकृते सुखादिज्ञाने, कुत इत्यपेक्षायामाह "मुख्यतयैव" इति । नत्वनुमानादिवत्प्रत्यक्षसापेक्षत्वेन, प्रत्यक्षपूर्वकत्वात् अनुमानस्य । "साक्षात्" इति, न त्वनुमानादिवल्लिङ्गज्ञानादिव्यवधानेनेत्यर्थः । एतेन प्रत्यक्षप्रमाणस्य सामान्यलक्षणयोजनम्, विशेषलक्षणं तु ऐन्द्रियके इत्यादिविशेषणसूचितमेव ज्ञेयम् । ननु तार्किकैर्बोधाबोधरूपायाः सामग्र्या अबोधरूपस्येन्द्रियादेर्वा प्रमाणत्वमुक्तम्, इह कथं बोधमात्रस्यैव ? सत्यम्, सामग्र्या यत् प्रमाणत्वमुक्तं तद्युक्तमेव, तदन्तर्गतं ह्यस्माभिरुक्तं प्रमाणमपि भवति एवान्यथा सामग्रीत्वायोगात् । यत्त्विन्द्रियादेरुक्तं तदयुक्तमेव सर्वदा ज्ञानोत्पादप्रसंगात्, न हीन्द्रियं जीवतः कुत्रापि क्षणेऽसन्निहितमिति वक्तुं शक्यते, अतिशयश्च करणस्य तत्सन्निधाववश्यं फलोत्पाद एव नान्यत् किञ्चित्, यच्च गौणत्वसाधनं तत्कुशकाशावलंबनमेव । बाह्योन्मुखो बोधस्तु बाह्यपरामर्शमवश्यमेव जनयति इति तस्य सातिशयत्वम् । यस्तु प्रमाणफलयोरभेदः शंकितः, स बाह्या-

अनुमानजा तु प्रतीतिः आभासान्तरात् कार्यरूपात् स्वभावभूतात् वा आभासान्तरे प्रतिपत्तिः, वस्त्वन्तरस्य च तेन साकं कार्यकारणभावनियमः सामानाधिकरण्यनियमश्च ईश्वरनियतिशक्त्युपजीवन एव अवधार्यो भवति न अन्यथा। तेन यावति नियतिर्ज्ञाता तावति देशे काले वा अनुमानं प्रमाणम्। आगमस्तु नामान्तरशब्दनरूपो[1] दृढीयस्तमविमर्शात्मा चित्स्वभावस्य ईश्वरस्य अन्तरङ्ग एव व्यापारः

---

न्तर्मुखत्वनिवारित एवेत्यलं प्रपंचेन। अनुमानेऽपि प्रमाणसामान्यलक्षणयोजनां करोति "अनुमान" इति। "तु" शब्दः प्रत्यक्षप्रमाणाद्व्यतिरेकद्योतकः। कार्यरूपात्-अग्न्यनुमाने धूमरूपात्, स्वभावभूतात् वृक्षानुमाने शिंशपारूपात्, आभासान्तरे-अग्निरूपे वृक्षरूपे वा। ननु तत्र कार्यकारणभावस्तादात्म्यं वा कथं भवति इत्यत आह "वस्त्वन्तरस्य" इति। वस्त्वन्तरस्य-धूमरूपस्य शिंशपारूपस्य वा, तेन साकम्, अग्निना वृक्षेण वा सहेत्यर्थः। सामानाधिकरण्यनियमः—तादात्म्यसंबन्धनियमः। ईश्वरनियतिशक्त्युपजीवनः-ईश्वरसंबन्धिनियतिशक्तिनियतत्वेन तत्सापेक्षः। फलितमाह "तेन" इति। तथा च नारिकेलद्वीपदेशवासिनां न धूमेनाग्न्यनुमानसिद्धिः[2], विस्मृतव्याप्तिकानां वा विस्मृतिकाले अगृहीतव्याप्तिकानां च तस्मिन् काले इति भावः। एतेनानुमानाख्ये प्रमाणे प्रमाणसामान्यलक्षणं योजितम्, विशेषलक्षणं त्वाभासान्तरादाभासान्तरे प्रतिपत्तिरित्येवं रूपं साक्षात्कथितं ज्ञेयम्। आगमप्रमाणेऽपि सामान्यलक्षणं योजयति "आगमस्तु" इति। तु शब्दः पूर्वप्रमाणद्वयाद्व्यतिरेकद्योतकः, आगमो नाम—आगमाख्यं वस्तु, चित्स्वभावस्य -चित्स्वरूपस्य, प्रकाशरूपस्येति यावत्। अन्तरंगः—स्वभावतया स्थितः। व्यापारो भवति। कुत इत्यपेक्षायां हेतुगर्भं विशेषणमाह "आन्तरशब्दनरूपः" इति। आन्तरम् पराभावेन स्थितत्वेपि पश्यन्तीभावमागत्य मध्यमाभावेन स्थित्वा परिमितप्रमातृद्वारेण वैखरीभावेन स्थितं च यत् शब्दनम्—जल्पनम् तद्रूपं यस्य तादृशः, अत एव दृढीयस्तमः—अतिशयेन दृढः, स्वरू-

---

1. नामान्तरः शब्दनरूपः—K. S. S.
2. अग्न्यनुमानमितिसिद्धिः—C.

प्रत्यक्षादेरपि जीवितकल्पः तेन यत् यथामृष्टं तत्[1] तथैव यथा "नैतत्

पादव्यभिचारीति यावत्, यः विमर्शः—अहमिति परामर्शः, तस्मादात्मा स्वरूपलाभः, बहिः संचार इति यावत्, यस्य तादृशः। तदुक्तम्:—

आगतं शिववक्त्रात्तु गतं च गिरिजामुखे।
मतं श्रीवासुदेवेन आगमस्तेन कीर्तितः॥

इति। अत्रायमभिप्रायः। यः शिवः प्रकाशस्तस्य मुखादागतं तत्र प्रथमं पराभावेन स्थितत्वात् पश्यन्तीभावमागतमित्यर्थः, तत्र भातमिति यावत्। तथा गिरिजामुखे, गिरिजा अविचलद्रूपात्[2] परमेश्वरादुत्थिता विमर्शशक्तिस्तस्या मुखे गतम्—मध्यमाभावेन तया परामृष्टमित्यर्थः। तथा श्रीवासुदेवेन—भेदप्रधानप्रमातृवर्गव्यापकेन देवेन, मतम्, इदं शास्त्रमागमः कीर्तितः वर्णत्रयेणैवं सूचनादिति भावः। सन्ध्यभावोऽत्रैश्वर इति न दोषः। एतेनागमशास्त्रेषु स्थितं "श्रीदेव्युवाच, श्री भैरव उवाच" इत्यादि प्रयोगजातमपि समर्थितं ज्ञेयम्, भैरवो हि सर्वभरितः प्रकाश एव, देवी तु क्रीडाशीला विमर्शशक्तिः, वचनं तु परापश्यन्तीमध्यमावैखरीभावेन चतुर्विधम्। ततः शास्त्रस्य प्रकाशे पराभावेन सततमवस्थानम्, ततो निर्गमौन्मुख्ये पश्यन्तीभावेन तत्रैव भासनम्, ततो विमर्शे मध्यमाभावेन रूढिः तदैव तद्विमृष्टमिति प्रोच्यते, ततो बाह्ये शास्त्रकारेषु वैखरीभावेन स्थितिः, तत्र च मौलिकमुत्थानमपेक्ष्य भैरवदेवीसंवादकथनम्। ननु तर्हि सर्वत्रैतदेव भवेत्। भवतु का हानिः, तज्ज्ञान्प्रति, अतज्ज्ञेषु त्वेतत् कथनमयुक्तमेव, अत एव कारुणिकैर्न सर्वत्रैषा घोषणा कृता, अस्माभिस्तु व्याख्यायामुद्यतत्वेनैषोऽर्थः स्फुटीकृत एव। ननु तर्हि रहस्योद्घाटनं संपन्नम्? न संपन्नम्, अनधिकारिणामत्र विश्वासाभावात्, अधिकारिणां तु तत्संभवेऽपि उच्छृंखलत्वायोगात्, उद्घाटनं हि अयोग्ये स्थाने प्राप्तिरेवत्यलं प्रपंचेन। एवं चान्तरचब्दनरूपस्यागमस्य अन्तरंगत्वं स्फुटमेव, प्रकाशस्य विमर्शस्वभावत्वात्। पुनः कीदृशोऽसौ? प्रत्यक्षादेरपि—प्रत्यक्षानुमानयोरपि, जीवितकल्पः—जीवितसदृशः, तयोरपि विमर्शप्राणत्वेन साधनत्वात्। एतेन बाह्यवादनिरासः, तेषु हि प्रत्यक्षापेक्षत्वं शब्दप्रमाणस्योक्तम्। कुत इत्यपेक्षायां वाक्यं हेतुत्वेनाह "तेन" इति, यतः तेन—आगमेन, यत् यथामृष्टम्—परामृष्टम्, उक्तमिति यावत्, तत् तथा भवति। अत्र प्रत्यक्षफलं विषापहारमन्त्रमुदाहरति "यथा" इति। इति शब्दो मन्त्रसमाप्तौ। शास्त्रान्तराणाम—

1. यत् यत् आमृष्टम्—K. S. S. 2. अचिवलरूपात्—C.

विषं मां मारयति गरुड एव अहम्" इति। तत्र तु तथाविधे शब्दनात्मनि विमर्शे आनुकूल्यं यो भजते शब्दराशिः सोऽपि प्रमाणम्, यथा—वेद-सिद्धान्तादिः, अन्योऽपि वा बौद्धार्हतागमादिः, तेन हि यत् शब्दनम् उत्पादितं 'ज्योतिष्टोमकारी अहं स्वर्गं गन्ता' इति 'दीक्षितोऽहम् अपुनरावृत्तिभागी' इति, 'कारुणिकोऽहं बुद्धपदं गन्ता' इति, 'गाढ-क्लेशसहिष्णुरहम् अर्हत्पदं प्रपत्ता' इति, तत्र न विपर्यय उदेति, तदाश्वस्तस्यैव तत्र अनुष्ठानयोग्यत्वात्, अन्यस्य तु दृढप्रतिपत्तिरूपत्वाभावात् अप्रमाणमेव तथाविमर्शनात्मकं शब्दनम्। नन्वेवं तदेव शास्त्रं 'कंचित्प्रति प्रमाणं कंचित्प्रति न' इति स्यात्, न चैतद्युक्तम्—'अ-पक्षपातित्वात्प्रमाणस्य' इति, अतत्त्वज्ञोऽसि प्रतीतिवृत्तस्य, तथापि

---

प्येतदानुकूल्ये प्रमाणत्वं कथयति "तत्र" इति। तत्र, तत्र सतीत्यर्थः, तथा-विधे—आगमशास्त्ररूपे, आनुकूल्यम्—अनुवर्तित्वम्। ननु कोऽसौ शब्द-राशिरित्यत आह" वेद" इति। अन्यः—वेदविरुद्धः, कुत इत्यपेक्षायामाह "तेन हि" इति। तेन- वेदादिना, प्रपत्ता, प्रापीत्यर्थः कुतो नोदेतीत्यत आह "तदाश्वस्तस्य" इति। अन्यस्य—अनाश्वस्तस्य, तदिति शेषः। अप्रमाण-मेव, न तु प्रमाणमपीति भावः। एतेन विषापसारणमन्त्रस्याप्याश्वासपूर्वं जपा-दिनैव फलसाधकत्वमुक्तम्। तथा च पठनमात्रेणैतत्फलाभिलाषिणां महाजना-नामप्युपहासपात्रत्वमेव दृश्यते। सामान्यजनरूपाणामपि गारुडिकानामेतादृङ्म-न्त्रसिद्धिरिति न काप्यनुपपत्तिः, तदुक्तम् :—

तदाक्रम्य बलं मन्त्राः सर्वज्ञबलशालिनः।
प्रवर्तन्तेऽधिकाराय करणानीव[1] देहिनाम्॥

इति। अत्र तच्छब्देनात्मबलपरामर्शः तच्चाश्वासदार्ढ्यमेव न त्वात्मग्रहः, तद्युक्तानां सर्वेषु शब्देषु मन्त्रतादर्शित्वेन मन्त्रापेक्षाराहित्यात्। अत्र शिष्यः प्रश्नयति "नन्वेवम्" इति। एवम्, एवं सतीत्यर्थः, कञ्चित्—कमपि प्रमेय-भागम्, इति स्यात्, एतदागतमित्यर्थः। नन्वेतदेव भवतु का हानिरित्यत आह "न चैतत्" इति। कुतो न युक्तमित्यत आह "अपक्षपातित्वात्" इति, न हि प्रमाणस्य पक्षपातिता युक्ता इति भावः। इति शब्दः प्रश्नसमाप्तौ। उत्तर-माह "अतत्त्वज्ञोऽसि" इति। प्रतीतिवृत्तस्य—प्रतीतिस्वरूपस्य। ननु तर्हि

---

1. कारणान्येव—C.

नोपेक्ष्यसे, 'अपक्षपाति प्रमाणम्' इति कः अस्य वचनस्य अर्थः, किं यत् एकस्य नीलज्ञानं प्रत्यक्षरूपं तत् किं सर्वस्य नीलं भासयति धूमज्ञानं वा अग्निम्, 'त्वं प्रातर्निधिमनेन विधिना लब्धासे' इति च यः सिद्धादेश[1] आगमः स किं सर्वान्प्रति प्रमाणम्, अथ कस्यापि कदाचित् किंचित्, तथा इहापि दृढविमर्शनरूपं शब्दनम् आ— समन्तात् अर्थं गमयति इति आगमसंज्ञकं प्रमाणं सर्वस्य तावत् भवति, तत्र यथा मिथ्याज्ञानसहायतां[2] भजमानम् आलोकेन्द्रियादिकम् अप्रमाणतासचिवम् अप्रमाणम्, न च एतावता सम्यग्ज्ञानरूपस्य[3]

---

मौनमेव कुरु इत्यपेक्षायामाह "तथापि" इति । नोपेक्ष्यसे—उपेक्षाविषयतां न नीयसे, अनुगतत्त्वादिति भावः । शिष्योक्तोत्तरावष्टंभेनोतरं दातुं शिष्यं प्रत्येव प्रश्नं करोति "अपक्षपाति" इति । अर्थः—अभिधेयम्, धूमज्ञानं वा सर्वस्याग्निं भासयति इति संबन्धः । सिद्धादेशः, तप आदिना सिद्धियुक्ताः सिद्धास्तैः कृत आदेशः—आज्ञा सिद्धादेशः, अत्रायुक्ततां ज्ञात्वा पक्षान्तरं शिष्यमुखेनैव कथयति "अथ" इति । शिष्योत्तरानुसारेणैवोत्तरं करोति "तथा इहापि" इति । आगमशब्दस्यान्वर्थतां दर्शयितुमाह "आसमन्तात्" इति । आगमसंज्ञकं शब्दनं तावत्सर्वस्य प्रमाणं भवति इति संबन्धः । अत्र कस्यापि विप्रतिपत्तिर्नास्तीति तावच्छब्दाभिप्रायः । ननु तर्हि एतेन शास्त्रेण सर्वेषां शूद्रादीनां कथं न दृढविमर्शनरूपा प्रमा भवति, येन पक्षपातिता न भवेत्, इत्यपेक्षायामधिकारिभेदपराणां शास्त्राणामेवायं दोषो न तत्कृतबाह्योन्मुखसम्यग्ज्ञानरूपस्य प्रमाणस्येत्यभिप्रायेण भंग्या सदृष्टान्तमुत्तरमाह "तत्र" इति । तत्र, आगमसंज्ञके शास्त्रे प्रमाणे सतीत्यर्थः, मिथ्याज्ञानसहायताम्—मिथ्याज्ञानस्य—बाह्योन्मुखासम्यग्ज्ञानरूपस्य प्रमाणाभासस्योत्पादे सहायभावम् भजमानम्, ज्ञानकर्तरि इति शेषः । न ह्यालोकेन्द्रियादिकं विना मिथ्याज्ञानोत्पादो युक्त इति भावः । आलोकेन्द्रियादिकम्—आदिशब्देनेन्द्रियार्थसन्निकर्षादेर्ग्रहणम् । अप्रमाणतासचिवम्—मिथ्याज्ञानाप्रमाण्ये सचिवं सत्, अप्रमाणं भवति, काचकामलादिदोषोपहतत्वात् । न चैतावता सम्यग्ज्ञानरूपस्य—प्रत्यक्षप्रमाण-

---

1. सिद्धादेशरूप आगमः—K. S. S.
2. मिथ्याज्ञाने सहायताम्—K. S. S.
3. सम्यक्ज्ञानस्वरूपस्य—K. S. S.

प्रत्यक्षस्य काचित् पक्षपातिता, तथा स एव ज्योतिष्टोमादिशब्दः शूद्रादेरदृढविमर्शात्मनि अत एवाप्रमाणे आगमाभासे साचिव्यं विदधदपि दृढविमर्शात्मकसत्यागमरूपशब्दनलक्षणप्रमाणोपयोगितायां प्रामाण्यं भजन् न पक्षपातापक्षपातदोषप्रतिक्षेपयोग्यः, सर्व एव हि आगमो नियताधिकारिदेशकालसहकार्यादिनियन्त्रितमेव विमर्शं विधत्ते,

---

रूपस्य साक्षात्कारिण्याः प्रमायाः कंचित्पुरुषं प्रत्येव करणे, काचित्–कापि, पक्षपातिता–पक्षपातयुक्तत्वं न भवति, रोगादिराहित्यवशेन तत्कारित्वात् । तथा स एव ज्योतिष्टोमादिशब्दः–ब्राह्मणादेरधिकारिणः प्रति आगमे प्रमाणताकारी ज्योतिष्टोमादिविधिशब्दः, शूद्रादेः–अधिकाररहितानां शूद्रस्त्र्यादीनाम्, अदृढविमर्शात्मनि—अदृढविमर्शरूपे, अत एवाप्रमाणे–शूद्रादिकं प्रति प्रमाणतया स्थापितेऽपि परमार्थतोऽप्रमाणे, अत एव आगमाभासे–परमार्थत आगमत्वाभावेऽपि तद्वदाभासमाने, साचिव्यम्–सहायताम्, विदधदपि, वेदे एव हि शूद्रादेः वेदव्यतिरिक्ते स्मृत्यादिरूपे शास्त्राभासेऽधिकारो विहितः । दृढविमर्शात्मकं यत् सत्यागमरूपं शब्दनं तदेव लक्षणं स्वरूपं यस्य तादृशं यत् प्रमाणं तस्योपयोगितायाम्—साहाय्ये, पक्षपातापक्षपातदोषप्रतिक्षेपयोग्यः[1], अधिकारभेदकथनमात्रदोषवशेन तदायातेन पारमार्थिकत्वाभावान्न भवतीत्यर्थः । कुतो न भवति इत्यत आह "सर्व एव" इति । हि–यस्मात्, सर्वः—विधिरूपो निषेधरूपो वा, आगमः, नियताः ये अधिकारिदेशकालसहकार्यादयः तैः नियन्त्रितम्—नियतमेव न त्वनियतम्, विमर्शम्–प्रमारूपं फलम्, विधत्ते–करोति । तथा चानधिकारित्वेऽपि वेदान्तादिशास्त्रेष्ववगाहनं कुर्वतां स्ववञ्चकत्वमेव, यस्यैव हि तेनैव शास्त्रेणाधिकारो विहितः तस्यैव तत्र प्रवृत्तिः कार्याऽन्येषां तु प्रवृत्तानां दोषापात एवेत्यलं प्रपंचेन । तत्र अधिकारिनियमः "स्वर्गकामो यजेत" इति । देशनियमः "समे देशे यजेत" इति । कालनियमः "उदिते जुहोति" "सायं प्रातः सन्ध्यामुपासीत" इति । सहकारित्वं तु सर्वेषां योजनीयम् । आदिशब्देन द्रव्यादिग्रहणम् यथा "पयसा जुहोति" जन्तिल यवाग्वा जुहुयात्" इति । अथवा सहकार्यपि पृथग्नियत एव, यथा यज्ञे पत्न्याः सहकारित्वम्

---

1. °प्रतिक्षेपसेबयोग्यः—C.

विधिरूपो निषेधात्मा वा । तेन "प्रसिद्धिः"[1] इति श्लोके 'यत्र यदा' इत्युक्तम्, तेन—प्रत्यक्षागमौ बाधकौ अनुमानस्य, इति तत्रभवद्भर्तृ-

---

यज्ञसंयोग एव पत्नीशब्दसाधनात् । एतेन फलितं वस्तु कथयति तेन–इति । यतः अधिकार्यादिनियमः ततः कारणादित्यर्थः । तथाचैवमयं श्लोकः—

प्रसिद्धिरविगीता हि सत्या वागैश्वरी मता ।
तया यत्र यदा[2] सिद्धं एतद्ग्राह्यमसंशयम् ॥

इति । अविगीता—वेदाविरुद्धा, तथा च प्रसिद्धमपि वेदविरुद्धं चेत्त्याज्यमेव । प्रसिद्धिरित्यनेनाविदितकर्तृकं परंपरागतमुपदेशजातं गृहीतम् । ऐश्वरी वाक्—ईश्वरसंबन्धिनी वाक्, आगमवागित्यर्थः । तया—ईश्वरीयवाचा, यत्र यस्मिन्नधिकारिणि देशे वा, यदा–यस्मिन्काले । एवं च सर्वम् आगमशास्त्रं परंपरागतमेव । तथा चात्र श्रीमत्तन्त्रालोके प्रसिद्धिनिबन्धकारिणां श्रीमठिकागुरूणां निर्णयः कृत एवेत्यलं रहस्येषु सूक्ष्मेक्षिकाभिः । ननु किमेते उपदेशाः वेदे न सन्ति येन प्रसिद्धिः शरणीकृता । सत्यम्, न भविष्यन्त्यपि[3], न हि श्रीपरमेश्वरस्यैश्वर्यमेतावन्मात्रे समाप्तिं गतम् । सन्तोऽपि वाऽतिरहस्यत्वेन तत्र व्याख्याकृद्भिर्न स्फुटीकृताः, इति कर्णोपकर्णिकया महागुरुभिर्महाशिष्येषु सूचिताः, दयावद्भिः मठिकागुरुभिः प्रकटीकृताः । तेषां ह्ययमभिप्रायः । येषामधिकारस्तेऽयत्नं शास्त्र-

---

1. अत एव

प्रसिद्धिरविगीता हि सत्या वागैश्वरी मता ।
तयेति यत्र हि यदा यत्तद्ग्राह्यमशंकितैः ॥

—K. S. S.

2. This verse is quoted in tne K. S. S. Edition as given in the preceding note.

3 न भविष्यन्त्यपि. The use of the future here seems to be indicative of the author's idea of the Veda as a growing body. He thinks that the line of the teaching, followed by the Veda, does not permit the incorporation of such teachings as the one under discussion.

हरि-न्यायभाष्यकृत्प्रभृतयः, तस्मात् प्रमाणलक्षणे ज्ञाते सर्वं प्रमाणस्वरूपं ज्ञातं भवति किं विशेषलक्षणैः, यस्तु अविसंवादकत्वं तस्य लक्षणम् आह तेनापि 'प्रापकत्वं प्रवर्तकत्वं प्रवृत्तियोग्यशक्यप्राप्तिकवस्तूपदर्शकत्वं' प्रमाणलक्षणं ब्रुवता न किंचित् प्रमाणाभिमतबोध-

---

न्त्येव, ये त्वन्यथा ते श्राव्यमाणा अपि जलगतनलिनीदलवन्न तत्स्पर्शं कर्तुं शक्नुवन्त्येव, किं च तैस्तत्राधिकारिनियमः स्थापित एवेति न कोऽपि विरोधः। ननु तैस्तत्र दीक्षानियमः स्थापितः, तत्र केचिद्दीक्षिता अप्यनधिकारिणो दृश्यन्ते, केचित्त्वकृतदीक्षा अप्यधिकारिणस्तत्र किं कार्यम्। सत्यम्, तत्र प्रथममनधिकारिदीक्षादाने न गुरूणां लोभादिदोष एव कारणम्। कदाचित्तु महागुरवोऽपि सामान्यदृशा सर्वत्र प्रवृत्ता दृश्यन्त एव, तत्र चानधिकारिणां शिष्याणां स्वकीया भाग्याल्पतैव, यथा गङ्गां प्राप्तानां कुंभादिरहितानाम्। ये तु महागुरूणामनुवृत्तिपरा एव, तेषामवश्यमेव कोऽप्यतिशयो जायते। ये तु दीक्षारहिता अप्यधिकारिणस्तेषां बाह्यानधिकारेणैतच्छास्त्रं भयेनास्पृश्यतामुत्तरोत्तरं[1] भक्त्यावेशे महाधिकारित्वं जायते। कालेन महागुरुसंयोगे दीक्षया महाफलयोगित्वं भविष्यति, तदप्राप्तौ तु तदन्तरे मृतानां परमफलालाभः। ये तु भक्त्यावेशेन बाह्याधिकारं नापेक्षन्ते, तेऽपि केचित् कालेन भक्तेश्च्यवन्ते, केचित्तु भगवत्कृपया फलभाजोऽपि भविष्यन्ति एव। सर्वथा बाह्याधिकारेऽपि यथा तथा यतनीयमेव, तदसंभवे त्वन्यशास्त्रेषु रतिः। "तेन" इति। आहुरिति शेषः। एतेनागमप्रमाणे प्रमाणसामान्यलक्षणयोजना कृता। अत्र च विशेषलक्षणमान्तरशब्दनमूलत्वमेव। लोकप्रसिद्धविशेषलक्षणकथनमुपसंहरति "तस्मात्" इति। तस्मात्—यतस्तर्कशास्त्रेषु विशेषलक्षणानां प्रसिद्धिरस्ति ततः कारणात् इत्यर्थः। प्रमाणलक्षणे—प्रमाणसामान्यलक्षणे। अत्र बौद्धैः कृतं सामान्यलक्षणं कथयति "यः" इति। तस्य—प्रमाणस्य; तदुक्तम्—

"प्रमाणमविसंवादि" इति।

प्रमाणाभिमतः—यो बोधस्तत्र विश्रान्तम्, स्वरूपम्, लक्षणया लक्षणम्, नोक्तम्—इति, अविसंवादकत्वादि हि प्रवृत्तेः कार्यं न प्रमाणस्य, तस्य प्रकाश-

---

1. भयेनाशङ्कताम्—C.

विश्रान्तं स्वरूपम् उक्तम्, तच्च[1] अनेनैव[2] लक्षणेन निर्वाह्यते तत् निर्व्यूढं भवति, अन्यथा मुखभङ्गमूर्धकम्पाङ्गुलीमोटनादिमात्रतत्त्वं तत्, इति अलं विस्तरेण ॥ २ ॥

---

कत्वादिति भावः । तच्च–प्रमाणस्वरूपं च, अनेनैव–तत्सूत्रोक्तेन, निर्वाह्यते–साध्यते, निर्व्यूढम्–सिद्धम्, अन्यथा,—अनेन लक्षणेनापि निर्वाहाभावे, तत्प्रमाणंमन्यैः कृतानि प्रमाणलक्षणानि उपहासपात्रमेवेति भावः । उपहासे हि मुखभंगादि क्रियत एवेति तद्ग्रहणम् । विस्तारकथनं निषेधयति "अलम्" इति । एतेनाऽन्योपि प्रपंचः करणीयोऽस्त्येव परं न क्रियत इति सूचितम् । 'एकाभिधानविषये' इत्यस्योत्तरश्लोके निर्णयो भविष्यतीति इह न व्याख्यातम् ।

एवमत्र द्वितीये श्लोके योजना संक्षिप्तार्थश्च । सः—प्रमाणतयाभिमतो बोधः, तथा तद्वत्, प्रमाणतया भवनवत् इति यावत्, अन्तर्विमर्शात्मा–प्रमाणतावस्थायामागतं बहिर्मुखत्वं विहाय पुनरन्तर्मुखविमर्शरूपतां प्राप्तः सन्, अबाधिता—इति बाधासहा प्रमा भवति, मितिश्च भवतीति 'तथा' शब्दवशेन समुच्चयेन योजना । ननु तर्हि तस्य प्रमातृत्वमेवागच्छति, अन्तर्मुखस्य बोधस्य प्रमातृत्वमेवेत्यत आह "वस्तुनि" इति । वस्तुनि–वस्तुविषये सा मितिः, संकोचावस्थायां सा मितिर्भवतीत्यर्थः । तथा च न तस्या अन्तर्मुखेपि प्रमातृत्वम् । प्रमातुः सारभूतमहाप्रकाशापेक्षया परिच्छिन्नत्वे एतदपेक्षयाऽपरिच्छिन्नत्वादिति भावः । बहिर्मुखतामागतं प्रमातुः स्वरूपं प्रमाणं भवति, पुनरन्तर्मुखतामागतं तावदत्यक्तविषयोपरागवत् प्रमा स्यात्, ततः क्षणेन संकोचत्यागे एषा प्रमापि प्रमातृरूपैव भवति. प्रमातापि यदि तज्ज्ञत्वेन तस्मिन् समये एव कुत उत्थितेयं कुत्र लीना चेति प्रमामूलान्वेषणद्वारेण स्वं रूपं प्रकटीकरोति, तदा प्रमावत् स्वयमपि परप्रकाशे लीनीभवति, सैव च प्रत्यभिज्ञा स ईश्वरोऽहमेवेत्येवंरूपा, अस्यैव चोपायस्य "मार्गो नवः" इति पदद्वयेनापूर्वोपायत्वं कथयिष्यति, प्रसिद्धयमनियमाद्युपायव्यतिरिक्तत्वात्, इति रहस्यसंक्षेपः । वस्तुनि कीदृशे ? देश कालाद्यभेदिनि, तथैकाभिधानविषये इति ॥ १ ॥ २ ॥........

---

1. तच्चेद्—K. S. S.
2. अनेन—K. S. S.

ननु च 'एकाभिधानविषये मितिः' इति यत् उक्तम्, तत्र—एकमभिधानं बाह्ये स्वलक्षण एव प्रवर्तते यदि, तत्कथम् उक्तं प्रत्याभासं प्रमाणम्, आभासमिश्रीकरणाभासस्तु स्वलक्षणम् इत्याशङ्कां शमयन् प्रमाणस्य यत् प्रमेयं तत् परमार्थतो निरूपयितुम् आह—

यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते ।
आभासोऽप्यर्थ एकस्मिन्ननुसंधानसाधिते ॥ ३ ॥

यद्यपि घट इति बहिः परिदृष्ट एकोऽर्थः तथापि तावानेव असौ न, अपि तु पृथङ्निर्भज्यमानतामपि सहते, तथाहि—स्वतन्त्रं वा विवेचनम् अर्थित्वानुसारेण वा पूर्वप्रसिद्ध्युपजीवनेन वा, तत्र त्रिधापि

---

अथ तृतीयस्य श्लोकस्यावतरणिकां करोति—"ननु च" इति ।

अत्र टीकाः—

एकाभिधानविषये-एकनामविषये, तत्र-तस्मिन् उक्ते, बाह्ये-बहिःस्थिते, स्वलक्षणे-वस्तुनः सामान्याकारव्यतिरिक्ते असाधारणे स्वरूपे एव नतु सामान्याकारे । किमुक्तम् इत्यपेक्षायामाह "प्रत्याभासम्" इति । प्रत्याभासम्-प्रत्येकं सर्वेषु धर्मिधर्मरूपेष्वाभासेषु, इत्याशंकाम्-एवंरूपामाशंकाम्, परमार्थतः इत्यनेन पूर्वोक्तस्य प्रमेयनिर्णयस्य शैथिल्यं द्योतितम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे, "यथारुचि" इति ।

अत्र टीकाः—

श्लोकं व्याख्यातुं प्रक्रियां करोति, 'यद्यपि" इति । तावानेव-एक एव । तर्हि कियानसौ इत्यपेक्षायां पक्षान्तरमाह "अपि तु" इति । पृथङ्निर्भज्यमानताम्-पृथग्विभागविषयताम्, बहुरूपतामिति यावत् । कथम् इत्यपेक्षायां समर्थनमुपक्रमते "तथाहि" इति । समर्थनं कुर्वन् श्लोकं व्याचष्टे "स्वतन्त्रं वा" इति । "यथारुचि" इति व्याचष्टे "स्वतन्त्रम्" इति । "यथार्थित्वम्" इति व्याचष्टे "अर्थित्व" इति । "यथाव्युत्पत्ति" इति व्याचष्टे "प्रसिद्ध्युपजीवनेन" इति । पूर्वप्रसिद्ध्यपेक्षयेत्यर्थः । तत्र-तत्र सति, त्रिधा-

विवेचने क्रियमाणे पृथगेव भान्ति आभासाः, नन्वेवं चेत् कथम् एकं स्वलक्षणम् ? उच्यते—तेषां पृथक् भासमानानामपि आभासानां यो विमर्शः अनुप्राणितभूतः स कदाचित् प्रत्याभासमेव विश्राम्यति, तदा परापरसामान्यग्रहणम्[1], कदाचित् पुनः गुणप्रधानतापादनेन 'अत्र इदम् इत्थम्' इति मिश्रणाप्राणो[2] विमर्शः तदा तदेकं स्वलक्षणम् । अपिः भिन्नक्रमः, अनुसन्धानेन मिश्रताविमर्शेन साधितो य एकोऽर्थः

---

प्रोक्तप्रकारत्रयेण । तथा चोत्तरश्लोके प्रकारत्रयं दर्शयिष्यत्येव इति हर्षचरिते श्रीकण्ठाख्यजनपदवर्णने स्थितमप्येतत्प्रकारत्रयं विस्तरभयान्न दर्शितम् । अत्र शिष्यः प्रश्नं करोति "नन्वेवम्" इति । उत्तरमाह "उच्यते" इति । प्रतिज्ञां सफलीकरोति "तेषाम्" इति । तेषाम् आभासानाम्–पूर्वोक्तानां देशादि-रूपाणामाभासानाम्, न त्वन्येषां रुच्यादिभेदवशेन स्थितानाम् । विमर्शः–घटोऽयं घटोऽयमिति विमर्शनम्, अनुप्राणितभूतः–ग्राहकत्वेन सत्तादायकः, प्रत्याभासम्–सर्वेष्वाभासेषु, प्रत्येकं प्रधानतया यत्र तेषां योजनारहितं यथास्वं ग्रहणम् इत्यर्थः । तदा–तस्मिन्काले, परापरसामान्यग्रहणम्–सत्तारूपगोत्वा-दिरूपसामान्यद्वयग्रहणम्, सदितिग्रहणेन सत्ताग्रहणम् पृथक् पृथगेव, अत्रेदं सदिति योजनाराहित्यात्, तथापरसामान्ये देशकालग्रहणं पूर्ववदेव पृथक् पृथक्, गौरिति गोजातिग्रहणम्, शुक्लेति शुक्लत्वजातिग्रहणं चलेति चलनत्वग्रहणम्, डित्थेति डित्थत्वग्रहणम् पृथक्पृथगेवायमत्र गौः शुक्लश्चलो डित्थसंज्ञ इति योजनयाऽग्रहणात् । पुनः पक्षान्तरे, गुणप्रधानतापादनेन विशेषणविशेष्यभाव-संपादनेन, अत्र–अस्मिन्देशे काले च, इदम्–एतद्वस्तु, इत्थम्–एतैर्गुणैर्युक्तम्, मिश्रणाप्राणः–योजनाप्राणः, स्वलक्षणम्–असाधारणं स्वरूपम्, तदन्यस्य तद्देशादिविशेष्यस्यासंभवात् इति भावः । अपेर्भिन्नक्रमत्वं दर्शयन् "अनुसन्धानसाधिते" इति व्याचष्टे "अनुसन्धानेन" इति । अनुसन्धा-नेत्यवयवं व्याचष्टे मिश्रता–इति । सप्तमीयोजनं करोति "तत्र" इति । अति—

---

1.—परापरसामान्यव्यवहारः–K. S. S.

2. व्यामिश्रणाप्राणः—K. S. S.

स्वलक्षणात्मा तत्र एकस्मिन्नपि सति रुचि—स्वातन्त्र्यम्, अर्थित्वम्—अर्थक्रियाभिलाषपरवशताम्, व्युत्पत्ति—वृद्धव्यवहारशरणतां च अनतिक्रम्य भिद्यत एव आभासः ॥ ३ ॥

क यथा इति निदर्शयितुम् आह—

दीर्घवृत्तोर्ध्वपुरुषधूमचान्दनतादिभिः ।
यथाभासा विभिद्यन्ते देशकाल[1]विभेदिनः ॥ ४ ॥

---

दुर्बोधत्वेन पुनर्योजनां करोति "एक[2]स्मिन्नपि" इति । एवमत्र स्फुटा योजना । अनुसन्धानसाधिते एकस्मिन्नपि वस्तुनि सति देशादिधर्ममिश्रीकारेण स्वलक्षणे एकत्रापि सति, यथारुचि—रुच्यनुसारेण, तथा यथार्थिस्वार्थित्वानुसारेण, तथा यथाव्युत्पत्ति–प्रसिद्ध्यनुसारेण, अर्थात्तस्मिन्नेकत्र वस्तुनि आभासा भिद्यन्ते, अन्यथा हर्षचरिते एकस्य श्रीकण्ठाख्यजनपदस्य संगीतशालादिभावेन वर्णनायोगात् । तथा च प्रत्याभासं भिन्नस्य स्वलक्षणस्यापि एकाभिधानविषयत्वमवतरणिकायां शङ्कितं तद्द्वारेण प्रमाणस्य प्रत्याभासविषयत्वकथनायोग्यत्वं स्वलक्षणस्यैव प्रमाणविषयत्वापादनं च युक्तमिति भावः ॥ ३ ॥

अथ चतुर्थस्य पंचमस्य च श्लोकस्यावतरणिकां करोति—"क यथा" इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "दीर्घ" इति ।

---

1—देशकालाविभेदिनः K. S. S. Both from Bhāskara's quotation of Utpala's text and Abhinava's explanation of it, it is clear that Utpala had विभेदिनः and not अविभेदिनः as found in K. S. S. The Vimar'sinīruns as follows:–एकस्वलक्षणं तु–एकस्मिन् देशाभासे कालाभासे च विश्रान्तेः । देशकालाभासावेव हि सामान्यरूपताप्रयोजकव्यापित्वनित्यत्वखण्डनाविधानसविधवृत्ती विशेषरूपतां वितरतः ।

2. तत्रैकस्मिन्नपि —C.

**तथैव सद्घटद्रव्यकाञ्चनोज्ज्वलतादयः ।**
**आभासभेदा भिन्नार्थकारिणस्ते पदं ध्वनेः ॥ ५ ॥**

इह तावत् एकस्मिन्नपि चेतनतया प्रसिद्धे पुरुषस्वलक्षणे विततदेशव्यापितां दीर्घतामेव कदाचित् विमृशति, या तरूणामपि अस्ति, निःसंधिबन्धनरूपतां[1] वा वृत्ततां या शिलानामपि संभविनी, ऊर्ध्वदिगाक्रमणरूपां वा ऊर्ध्वतां या स्थाणोरपि संबन्धिनी, गमनागमनादिस्वतन्त्रभावयोग्यतारूपं वा पुरुषत्वं यद् अन्यपुरुषसाधारणम् । तथा हि—स्वतन्त्रया वा इच्छया रुचिरूपया यावदेवं[2] कुर्यात् यथोक्तम्

'या त व्याक्षेपसारत्वाच्चेतसः स्वरसोद्गता ।'

---

अत्र टीकाः—

**"दीर्घ"** इति समासावयवं व्याचष्टे "इह" इति । **पुरुषस्वलक्षणे**—पुरुषस्यासाधारणे स्वरूपे । यद्यपि स्वलक्षणस्य चेतनत्वं न युक्तं तथापि लक्षणयैवमुक्तम् । **विततदेशव्यापिताम्**—विस्तीर्णदेशव्यापित्वरूपाम्, दीर्घो हि विततदेशव्यापको भवति, अन्यथा दीर्घत्वायोगात्, **कदाचित्**—तद्रुचित्वादियुक्तत्वावस्थायाम्[3] । ननु सा दीर्घतैव तस्य स्वरूपं भवत्वित्यत आह **"या"** इति । तथा च न तस्या एतत्स्वरूपत्वं युक्तमिति भावः । **"वृत्त"** इत्यवयवं व्याचष्टे **"निःसंधि"** इति । **निःसन्धिबन्धनरूपताम्**—एकघनतारूपाम्, **ऊर्ध्वताम्**—उन्नतत्वम्, गमनागमनादिषु यः स्वतन्त्रभावः—स्वतन्त्रता तत्र या योग्यता सा रूपं यस्य तादृशम् । अत्र समर्थनमुपक्रमते **"तथा हि"** इति । **स्वतन्त्रया इच्छया**—प्रयोजनानुसन्धानविरहितेन इच्छामात्रेण । **"रुचि"** इति । **यावदेवं कुर्यात्**, दीर्घोऽयमित्यादि व्यवहारं कुर्यात् इत्यर्थः । अत्र वृद्धवाक्यमुदाहरति **'यथोक्तम्'** इति । अत्रायमर्थः । सा रुचिर्भवति । सा का ? या **चेतसः**—मनसो **व्याक्षेपसारत्वात्**—व्याकुलतासारत्वात्, व्याकुलतावशेन, **स्वरसोद्गता** भवति—प्रयोजनमनपेक्ष्योद्गता

---

1—निःसन्धिबन्धरूपताम्—K. S. S.

2—रुचिरूपया एवं कुर्यात्—K. S. S.

3—तद्रुचिताद्यवस्थायाम्—C.

इति । विततदेशव्यापिन एव वा अर्थान्[1] तिरोधिलक्षणाम् अर्थक्रियाम् अर्थयमानो विभजेत्, एवं व्यवहारे वृद्धैः कीदृक् दीर्घं नाम गीयते इति व्युत्पित्समानो व्युत्पादयितुमिच्छुः वा विभागं कुर्यात्। इत्येवं-तत्र आभासानां भेदः। एकस्वलक्षणं तु—एकस्मिन् देशाभासे कालाभासे च विश्रान्तेः, देशकालाभासावेव हि सामान्यरूपताप्रयोजकव्यापित्वनित्यत्वखण्डनाविधानसविधवृत्ती विशेषरूपतां वितरतः। एवं पुरुषत्ववत् अन्येऽपि ब्राह्मणाद्याभासा अपि निरूप्याः, एवम् अत्र तावत् प्रसिद्धतर आभासभेदो—जडाजडसाधारणबहुतरधर्मास्पद-

भवतीति यावत्। कदाचिद्धि पुरुषो व्याकुलतावशेन प्रयोजनमनपेक्ष्य येन तेन शब्देन व्यवहरति, स व्यवहारश्चाभासपूर्व एव, अन्यथोच्चारासंभवात्। इति शब्दः समाप्तौ। विततदेशव्यापिनः—दीर्घान्, अर्थान्—वस्तुनः, तिरोधिलक्षणाम्[2]-अन्तर्धानरूपाम्, अर्थयमानः—कांक्षमाणः, एवम्—दीर्घोयमिति, इति व्युत्पित्समानः—एवं स्वयमेव स्वस्य व्युत्पत्तिं कर्तुमिच्छन्। इति किमिति ? वृद्धैः—कर्तृभिः, दीर्घं नाम—दीर्घाख्यं वस्तु, कीदृक्—कीदृशम् गीयते इति। वा पक्षान्तरे। अन्यं व्युत्पादयितुम्—व्युत्पत्तियुक्तं कर्तुम् इच्छुः सन्, विभागं कुर्यात्—दीर्घोऽयमिति विभजनं कुर्यात्। एतेन व्युत्पत्तिकरणसमये एव व्युत्पत्तेराभासकारणत्वमिति सूचितम्। उपसंहारं करोति "इत्येवम्" "इति" तत्र—एकस्मिन् पुरुषस्वलक्षणे। ननु तर्हि एकत्वं न युक्तमित्यपेक्षायां मध्ये **"देशकालविभेदिनः"** इति पदं व्याचष्टे "एक"—इति। विश्रान्तेः, इदमत्रस्थितमिति प्रतीतिविश्रामादित्यर्थः। कुत इत्यपेक्षायामाह "देश" इति। सामान्यरूपताप्रयोजके ये व्याप्यत्वनित्यत्वे तयोर्यत् खण्डनाविधानम्—परिमिततापादनद्वारेण नाशनं तस्य सविधा वृत्तिः—व्यापारः यस्य तौ। तत्र देशेन व्याप्यत्वखण्डना कालेन नित्यत्वखण्डनेति क्रमो ज्ञेयः। विशेषरूपताम्—स्वलक्षणताम्, पुरुषगतेष्वन्येषु धर्मेष्वपि अमुं न्यायमतिदिशति "एवम्" इति। प्रसिद्धतरः—अतिशयेन प्रसिद्धः। कुत इत्यपेक्षायां हेतुमाह 'जडा' इति। जडाजडसाधारणः—चेतनेषु पुरुषादिषु तर्वादिषु[3] अचेतनेषु च

1. अर्थात्—K. S S.
2. तिरोधिलक्षणा सन्तवानरूपाम्-C. 3. तरु..................C.

त्वात्, अनेन निदर्शनेन धूमेऽपि धूमत्वचा[1]न्दनत्वश्रीखण्डचन्दनोत्थि-तत्वादयः प्रसिद्धा आभासभेदा विभजनीयाः। प्रसि[2]द्धेन दृष्टान्तेन अप्रसिद्धभागोऽपि यो घटः तत्रापि आभासभागभेदो भवति, तथाहि-किंचिदपि अत्र नास्ति इति हृद्भङ्गमिव आपद्यमानो घटं पश्यन्

---

साधारणत्वेन स्थिताः ये बहुतरधर्माः-दीर्घत्वादिरूपाः अतिबहवो धर्मास्ते एवास्पदं यस्य स तस्य भावस्तत्त्वं तस्मात्, तद्विषयत्वादिति यावत्। "धूम" इत्यादिभागं व्याख्यातुमवतरणिकां करोति "अनेन" इति। अनेन निदर्शनेन दृष्टान्तेन धूमत्वं च चान्दनत्वम् चन्दनादुत्थितत्वं च श्रीखण्ड-श्वेतचन्दनोत्थितत्वादयश्चेति विभजनीयाः-रूप्यादिविषयत्वेन विभागविषयी-कार्याः, तत्र कृष्णत्वार्थी धूमत्वम्, सौगन्ध्यार्थी चान्दनत्वम् इत्यादिप्रकारेण विभागः कार्यः। प्रसिद्धत्वं चात्र भेदस्य धूमत्वचान्दनत्वादेः भिन्नेन्द्रियग्राह्यत्वेन स्फुटं भिन्नत्वेन भानात्, एकवस्तुगतत्वेन भेदस्य स्फुटतरत्वाभावात्, तरपोऽत्र प्रयोगः प्रसिद्धतरप्रसिद्धदृष्टान्तद्वयावष्टंभेन ॥ ४ ॥

दार्ष्टान्तिकं कथयितुं द्वितीयं श्लोकं व्याचष्टे "प्रसिद्ध" इति। अप्रसिद्धश्चासौ भागः अप्रसिद्धभागः, अप्रसिद्धत्वं चात्र घटस्यैकत्वेनैव स्फुरणात्, तद्गताभासभेदस्य तु प्राक[3]ट्याभावात्। तत्रापि-तस्मिन् घटेऽपि, आभासभागानाम्—सत्त्वघटत्वादिरूपाणाम् भेदः। आभासभागभेदमेव दर्शयति तथाहि इति, हृद्भङ्गम्-हृदयभंगम्, आपद्यमानः-प्राप्नुवन्, वस्त्वदर्शनेन

---

1—चन्दनत्व—K. S. S.

2—अनेन तु प्रसिद्धेन दृष्टान्तेन—K. S. S. The usual practice of भास्कर is to quote the very first word of the sentence, which he introduces with 'व्याचष्टे'. And that word, in the present case, as found in the manuscript, is 'प्रसिद्ध'. We have, therefore, omitted 'अनेन तु' which are found before प्रसिद्ध in K. S. S.

3—प्रकाश्याभावात्—C.

'अस्ति इदम्' इति सत्त्वाभासमेव पश्यति, अपरान् आभासान् नाम्नापि तु नाद्रियते, तथा उदकाहरणार्थी घटाभासम्, स्वतन्त्रनयनानयनयोग्यवस्त्वर्थी द्रव्याभासम्, मूल्याद्यर्थी काञ्चनावभासम्, हृद्यतार्थी औज्ज्वल्याभासम्, आदिग्रहणात् दृढतरभावार्थी दार्ढ्याभासम् इति द्रष्टव्यम्, एवं रुचिव्युत्पत्त्योरपि योजनीयम्। एवम् एते आभासभेदा एव वस्तु आभासमानतासारत्वात् वस्तुतायाः। योऽपि आभासस्य प्राणभूतो विमर्शः सोऽपि प्रत्याभासमेव, शब्दस्य अभिजल्पात्मनो बोधजीवितप्रख्यस्य प्रत्याभासमेव विश्रान्तेः,

---

हि पुरुषस्य हृदयं भज्यते एव, सत्वाभासम्-सत्वरूपमाभासम्, अपरान्—घटत्वादिरूपान्, "नाद्रियते" इति, तत्सत्तामात्रस्यैवात्रार्थित्वविषयत्वात्। तथा-तद्वत्, द्रव्यस्य आनयनादि[1]योग्यतामपेक्ष्य 'स्वतन्त्र' इत्युक्तम्। 'आद्रियते' इति सर्वत्र योजनीयम्। 'मूल्याद्यर्थी' इति। आदिशब्देन नानाभूषणादिनिर्माणग्रहणम्। 'औज्ज्वल्य' इति। उज्ज्वलो हृद्यो भवति। आदिशब्दग्राह्यं वस्तु कथयति "दृढ" इति। आदिशब्देन जलमात्रेण शुद्ध्यर्थी जलाहरणयोग्यताभासमित्यादेर्ग्रहणम्। रुचिव्युत्पत्योरर्थित्वयोजनामतिदिशति "एवम्" इति। एवम्-अर्थित्ववत्। तत्र व्युत्पत्तेः शिक्षाकालमात्रे स्थितत्वात्, रुचेः चित्तव्याक्षेपसारत्वात्। सर्वव्यवहारेष्वर्थित्वस्यैव प्राधान्यात् साक्षाद् योजना दर्शिता। तत्र प्रसिद्धतराऽप्रसिद्धस्थानद्वययोजनेन मध्ये स्थिते प्रसिद्धे स्थाने योजनमप्ययत्नमेवेति ज्ञेयम्। उपसंहारं करोति "एवम्" इति। कुत इत्यपेक्षायामाह "आभास" इति। न ह्याभासाविषयीकृतं वस्तु वस्तु भवतीति भावः। नन्वाभासस्यैव एषा वार्ता भवतु तत्समनन्तरभाविविकल्पस्य किं भेदोऽस्ति न वा इत्यपेक्षायां "पदं ध्वनेः" इति व्याचष्टे "योऽपि" इति। प्राणभूतः—जीवितभूतः, परामर्शं विना ह्याभासोऽसत्कल्प एवेति भावः। "प्रत्याभासमेव" इति, भिन्न एव भवतीति भावः। कुत इत्यपेक्षायामाह "शब्दस्य" इति। अभिजल्पनात्मनः-जल्पनरूपस्य, व्यक्तवाग्रूपस्येति यावत्। एतेन समुद्रघोषादेर्निरासः। विमर्शमूलस्य शब्दस्य प्रत्याभासभेदसाधने विमर्शस्यापि तदयत्नसिद्धमेवेति न कोऽपि विरोधः।

---

1—द्रव्यस्यानयतनादि—C.

सत् घटो लोहितः इत्यादि। अर्थक्रियाकारित्वमपि अन्वयव्यतिरेकाभ्यां प्रत्याभासमेव नियतं—सदाभासेन हृद्धङ्गपरिहारमात्रस्य संपादनात्, तत्र आभासान्तरस्य या अपेक्षा सा अग्न्याभासेन अर्थक्रियायां साध्यायां पात्राभासस्य इव तदाभासनान्तरीयकत्वेन आभासान्तरस्यापि नियतस्य[1] अपेक्षणात्। एवं येन येन मुखेन अर्थो विचार्यते तेन तेन आभासमात्रात्मैव तथैव प्रतिभासनात् विमर्शनात् अर्थक्रिया-

---

अथवा ध्वनेरिति ग्रहणादेवमुक्तम्। विश्रान्तिमेवाभिनीय दर्शयति "सत्" इति। आदिशब्देन द्रव्यमित्यादेर्ग्रहणम्[2], विश्रान्तिविशेषणत्वेन योजनीयम् । अर्थक्रियाकारित्वस्यापि प्रत्याभासं भिन्नत्वं कथयन् **'भिन्नार्थकारिणः'** इति व्याचष्टे "अर्थ" इति। तत्र यस्यान्वयेन यस्या अर्थक्रियाया अन्वयः यस्य व्यतिरेकेण तु व्यतिरेकः तस्य तत्कारित्वं नियमेनेति संक्षेपः। अत्र हेतुकथनं करोति **"सदाभास"** इति। मात्रचा घटाद्याभाससाध्यायाः उदकाहरणाद्यर्थक्रियाया निरासः। ननु तस्य सत्त्वं केनापि उदकाहरणादिप्रयोजनेन कांक्षति इति तत्संपादनमपि सत्त्वकार्यमेव, यदर्थं हि यदपेक्षते सा तस्यार्थक्रियैवेत्यत आह **"तत्र"** इति। **तत्र**-सत्त्वे, **आभासान्तरस्य**-उदकाद्याहरणरूपस्य, **पात्राभासस्य**-इति। अन्यथाऽग्न्यानयनासंभवात् इति भावः। कुत इत्यपेक्षायामाह **"तदाभास"** इति। **तदाभासेन**-सत्त्वाभासेन यत् **नान्तरीयकत्वम्**-अविनाभावः तेन, **नियतस्य**-अवश्यंभाविनः, **आभासान्तरस्य**-उदकाहरणादिरूपस्यान्यस्याभासस्याऽपेक्षणात्। अग्न्याभासेन पात्राभासो नियतोऽपेक्ष्यते एवेति दृष्टान्तीकृतः। प्रक्रियामुपसंहरति, **"एवम्"** इति। **मुखेन**-सत्त्वादिना द्वारेण, **अर्थः**-घटादिः, **आभासमात्रात्मैव**-आभासमात्ररूप एव, **तथैव**-आभासमात्रभावेनैव, **प्रतिभासनात्**-स्फुरणात्, **विमर्शनात्**-विमर्शकरणात्, इति

---

1—अनियतस्य—K. S. S.

2—What भास्कर means is that द्रव्य etc. have to be connected with विश्रान्ति, but his language does not yield this meaning clearly. Some such word as तच्च after 'ग्रहणम्' would make it quite clear.

करणाच्च इति सिद्धम् । एवं प्रसिद्धतरप्रसिद्धाप्रसिद्धत्वातिशयेन एकोऽपि अर्थो ग्रन्थकारेण त्रेधं निरूपितो 'दीर्घवृत्तेति धूमेति सद्धटेति' ॥ ५ ॥

---

सिद्धम्, एतत्सिद्धं भवतीत्यर्थः । स्थानत्रयं विभज्य दर्शयितुमुपसंहारं करोति "एवम्" इति । तत्र प्रसिद्धस्य प्रसिद्धतरेण हस्तादानम्, अप्रसिद्धस्य तु प्रसिद्धेनेति ज्ञेयम् । रूपत्रयमेव दर्शयति "दीर्घ" इति ।

एवमत्र पिण्डार्थः । दीर्घवृत्तोर्ध्वपुरुषाश्च धूमचान्दनतादयश्च ते यथा प्रसिद्धतरत्वेन स्थिताः दीर्घादिरूपाः आभासाः, तथा प्रसिद्धत्वेन स्थिताः धूमादय आभासाः, देशकालविभेदिनः—देशकालभेदरूपस्य तद्देशत्वेन तत्कालत्वेन च स्थितस्यैकस्य वस्तुस्वलक्षणस्य संबन्धिनोऽपि सन्तः, भिद्यन्ते-रुच्यादिवशेन भेदेन भासन्ते, तथा-तद्वद् तद्दृष्टान्तेनेति यावत्, अप्रसिद्धाः सद्घटद्रव्यकाञ्चनोज्ज्वलतादयः आभासभेदाः भिद्यन्ते—रुच्यादित्रयवशेन भेदमासादयन्ति । तत्र दीर्घादीनां कदाचित् रुच्याऽऽभासनं कदाचिदर्थित्वेन कदाचिद्व्युत्पत्त्या । तत्र तेषां दीर्घादीनाम् आभासानां धूमाद्याभासानां च रुचौ अन्यथात्वम्, अर्थित्वेऽन्यथात्वम्, व्युत्पत्तौ चान्यथात्वम्, रुचौ हि निष्प्रयोजनं तथा स्फुरणम्, कथम् ?...[1]अर्थित्वे अतिप्राप्यत्वेन, व्युत्पत्तौ शिक्षामात्रार्थमेव, यथात्र व्युत्पन्नः स्यादिति । इति सर्वत्र रुच्यादित्रययोजनं कार्यम् । तत्र रुचिः—निष्प्रयोजनं वस्तुनो ज्ञाने निर्देशे वा, अर्थित्वम् सर्वव्यवहारेषु, व्युत्पत्तिः शिक्षाग्रहणसमये शिक्षादानसमये चेति । तथा ते—आभासभेदाः, भिन्नार्थकारिणः—भिन्नार्थक्रियाकराः, तथा, ध्वनेः शब्दस्य तन्मूलस्य विमर्शस्य च पदं—विषयः भवन्ति, दीर्घस्य तिरोधानरूपार्थक्रियाकारित्वाद्दीर्घोयमिति विमर्शेन ग्रहणात् दीर्घोऽयमिति शब्दविषयत्वाच्च । एवं सर्वत्र ज्ञेयम् । ४ । ५ ।

---

I—कथम्...............र्थित्वे—The dots, coming after कथम्, as usual, indicate that something has been left out. If the word कथम् is to be retained, a reply to the question, raised by the word, seems to have been omitted. If, however, we put अ before र्थित्वे, as printed, the text will yield a good meaning.

ननु एवं प्रत्याभासमेव वस्तुत्वे एको घटात्मा न वस्तु स्यात् इत्याशंक्याह

आभासभेदाद्वस्तूनां नियतार्थक्रिया पुनः।
सामानाधिकरण्येन प्रतिभासादभेदिनाम् ॥ ६ ॥

आभासानां मिश्रं यद्रूपं तत्र अवश्यं कश्चिदाभासः प्रधानत्वेन अन्याभासानां विश्रान्तिपदीकार्यः[1] स तेषां समानमधिकरणम्, तेन

---

अथ षष्ठस्य श्लोकस्यावतरणिकां करोति नन्वेम् इति। स्पष्टम्। एवम-वतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "आभास" इति।

अत्र टीका:—

प्रथमं **सामाधिकरण्येन** इति पदं व्याचष्टे आभासानाम् इति। मिश्रम्-मिश्रतया स्थितम्, स्वलक्षणरूपमिति यावत्। तत्र-तस्मिन्मिश्ररूपे, विश्रान्तिपदीकार्यः-विश्रान्तिस्थानतया भावनीयः, दृक्ङ्गनिवृत्यर्थित्वे सत्वा-भास[2] इव घटाभासादीनाम्, अथवा उदकाहरणार्थित्वे घटाभास इव सत्वाभा-सादीनाम्। सः-प्रधानीकृत आभासः, तेषाम् तद्व्यतिरिक्तानामाभासानाम्। समानमधिकरणम् एकं स्थानं तत्रैव धर्मत्वेनारोपणात्। तद्धितप्रत्ययव्याख्यां करोति तेन इति। तेन-समानाधिकरणेन, सह तेषाम्-आधेयभूतानामाभा-सानाम्, यः संबन्धः-आधाराधेयभावाख्यः। तृतीयायोजनं करोति 'तेन'

---

1—विश्रान्तिपदीकर्तव्यः K. S. S.

2—दृक्भंग निवृत्त्यर्थत्वे इति सत्त्वाभासः। घटाभासादीनां—अर्थवोद-काहरणार्थित्वे घटाभास इव सत्वाभासादीनाम्।

The text, as it stands, is rather corrupt, We have taken अर्थवा as a scribal mistake for अथवा. Taking the sentence as giving two examples of विश्रान्तिस्थानता we have changed इति into इव and placed it after सत्वा-भास so that it may correspond with the other illustr• ation घटाभास इव सत्वाभासादीनाम्।

सह यस्तेषां संबन्धः तत् सामानाधिकरण्यम्, तेन उपलक्षितो यः प्रतिभासः—अर्थोन्मुखः प्रकाशः तदनुप्राणकश्च[1] नपदात्मा परामर्शः—तस्य सर्वस्य एकाभासविश्रान्ततानियमात्, तस्मात् तं सामानाधिकरण्याभासं समनुप्राणयति यो वाक्यात्मा[2] वाक्यार्थपरामर्शरूपो विमर्शः—इह इदानीं एष घटोऽस्ति इत्येवंरूपः ततो हेतोः ये अभेदिन

इति। उपलक्षितः-विशिष्टीकृतः। एतेनोपलक्षणे इयं तृतीयेति द्योतितम्। 'प्रतिभासात्' इति पदं व्याचष्टे "अर्थोन्मुखः" इति। अर्थोन्मुखः-अर्थविषयीकर्तुं प्रवृत्तः, प्रकाशाव्यभिचारेण विमर्शस्यापि ग्रहणं करोति "तदनु" इति। तदनुप्राणकः-प्रकाशस्यासत्कल्पतानिवारकः[3], यः नपदात्मा-नपदम् आत्मा रूपं यस्य सः नपदात्मा, परामर्शः-विमर्शः। कुतो नपदात्मेत्यपेक्षायामाह "तस्य" इति। तस्य सर्वस्य-पदात्मनः परामर्शस्य, एकाभासविश्रान्ततानियमात्—वाक्याभासरूपैकाभासविश्रान्तत्वनियमात्, न हि पदस्य स्वरूपे प्राधान्यं तस्य वाक्ये त्रुडितत्वात् इति भावः। तर्हि किंरूपः स परामर्शः इत्यपेक्षायामुपसंहाररीत्या कथयति, "तस्मात्" इति। तस्मात्-ततः कारणात्, सामानाधिकरण्याभासम्-उपलक्षणत्वेन स्थितं पूर्वोक्तं सामानाधिकरण्याभासम्, समनुप्राणयति-पुष्टीकरोति, यो वाक्यात्मा-वाक्यसंस्कारत्वेन स्थितः, वाक्यार्थपरामर्शरूपो विमर्शः-परामर्शस्तदनुप्राणकः पदात्मपरामर्शव्यतिरिक्तः वाक्यात्मा च यः परामर्श इति यावत्। वाक्यात्मानं परामर्शमेवानुकृत्याह "इह" इति। इह अस्मिन् देशे, इदानीम्-अस्मिन् काले, एषः—एवंगुणकः, घटः अस्ति। तत्र इहेति देशाभासः, इदानीमिति कालाभासः, एष इति गुणाभासः, घट इति जात्याभासः। अत्र च घटाभासस्यैव समाना

1—तदनुप्राणकश्च कश्चन पदात्मा—K. S. S.

2—समनुप्राणयति वाक्यात्मा—K. S. S. From the later reference in the Bhāskari to this 'यो' in यो ये इत्यस्य द्वयस्याकांक्षां पूरयन् etc. there is no doubt that this 'यो' was a part of अभिनव' s text.

3—असत्कल्पनिवारकः —C.

एकस्वलक्षणताम् प्राप्ता[1] न च[2] स्वरूपभेदम् उज्झन्तः तेषाम् अन्या विशिष्टा समुदिता[3] अर्थक्रिया । आभासविमर्शभेदे पुनरन्या नियता एकैकमात्ररूपा । आभासप्रतिभासशब्दाभ्यां सूत्रे विमर्शोऽपि आक्षिप्तो मन्तव्यः । पुनः शब्दो विशेषद्योतकः काकाक्षिवत् उभयत्र

---

धिकरणत्वम् । तदाभयत्वेनैवान्याभासस्थापनात् । यो ये इत्यस्य द्वयस्याकांक्षां पूरयन् "प्रतिभासात्" इति पंचमीयोजनं करोति "ततः" इति । ततः—प्रतिभासाद्वाक्यात्मकपरामर्शाच्च हेतोः । "अभेदिनाम्" इति व्याचष्टे "एक" इति । एकस्वलक्षणतां प्राप्ताः–देशादिमिश्रता–वशेनैकस्वलक्षणभावं गताः । ननु तर्ह्येकत्वमेव तेषां भवतु इत्यत आह "न च" इति । नचोज्झन्त इति योजना, देशादीनां पृथगेव स्फुरणादिति भावः । षष्ठीयोजनं करोति "तेषाम्" इति । "वस्तूनाम्" इति । प्रसिद्धत्वेन न व्याख्यातम् । अन्यशब्दार्थवाचि "पुनः" शब्दं व्याचष्टे अन्या इति । पुनः अन्या, प्रत्येककार्याय[4] भिन्नेति यावत् । अतएव विशिष्टा तथा समुदिता कुत्रापि न नियमिता, सर्वाभाससाध्यत्वेनाभिमतेति यावत् । अर्थक्रिया भवति । "आभासभेदात्पुनर्नियतार्थक्रिया" इति व्याचष्टे आभास इति । आभासविमर्शभेदे सति अन्या नियता एकैकमात्ररूपा–प्रत्येकं भिन्न-स्वरूपार्थक्रिया भवति । इह तु विमर्शः पदसंस्काररूप एव ज्ञेयः एकाभासो-त्थितत्वात् । ननु सूत्रे विमर्शस्य नामापि न गृहीतमिति कथं व्याख्यायां तस्य योजनं कृतम् इत्यत आह "आभास" इति । आक्षिप्तः—अनुप्राणकत्वेनाक्षेप-विषयतां नीतः । नन्वेक एव पुनः शब्दो दृश्यते, व्याख्यायां कथं द्विर्योजित इत्यत आह "पुनः शब्दः" इति । उभयत्र—समुदितनियमितार्थक्रियारूपे

---

1—एकस्वलक्षणतामाप्ताः K. S, S.

2—न तु—K. S. S.

3—समुदितरूपा—K. S. S.

4—प्रत्येककार्यायाभिन्ना—C.

योज्यः। बहुवचनेन ऐक्येऽपि स्वरूपभेदापरित्याग उक्तः, तत्र च ऐक्यावभासे परतन्त्रं सत् पृथक्त्वं यदा आभासानां तदा समानरूपव्यक्त्युपरञ्जकत्वेन पारमार्थिकं सामान्यरूपत्वम्, घटाभासस्य तु शुद्धस्य स्वतन्त्रपरामर्शे योग्यतामात्रेण सामान्यरूपता न वस्तुतो—

स्थानद्वये। "अभेदिनाम्" इति बहुवचनाभिप्रायमाह "बहुवचनेन" इति। अन्यथैकत्वमेवात्रयुक्तं स्यादित्यर्थः।

एवमत्र योजना—सामानाधिकरण्येनोपलक्षितात्प्रतिभासात्-प्रतिभासविमर्शैक्याद्धेतोरभेदिनां वस्तूनामर्थक्रिया पुनरन्या समुदिता भवति, तथाभासभेदात्-आभासपरामर्शभेदात् पुनः अन्या नियता भवति, इति पुनःशब्दस्य द्विर्योजना।[1]

प्रत्याभासं स्थितस्य आभासमिश्रीभावेन लब्धसत्ताके स्वलक्षणे स्थितस्य सामान्यद्वयस्य योग्यतामात्रेण साक्षाच्च सत्त्वं कथयति "तत्र" इति। तत्र-प्रत्याभासस्थितस्वलक्षणस्थितसामान्यद्वयमध्ये, यदा ऐक्यावभासे—प्रत्येकं देशादीनामैक्यावभासे "देशोऽयं देशोयम्" इत्यादिरूपे, आभासानाम्-देशादिरूपाणां प्रत्येकं स्थितानामाभासानां सत्-वर्तमानम्, पृथक्त्वम्-प्रत्येकभावः, स्वे स्वे रूपे निष्ठत्वमिति यावत्। परतन्त्रम्-धर्मतया भासनं भवति, तदा समानरूपा या व्यक्तयः—बहिःस्थिता-आधारभूता व्यक्तयः, तासामुपरञ्जकत्वेन-स्वविशिष्टीकरणेन, पारमार्थिकम्-सहजम्, सामान्यरूपत्वं भवति सामान्यस्य द्रव्यादिनिष्ठत्वेनैव स्थितत्वात्, देशत्वं नाम सामान्यं हि देशाख्यव्यक्तिरूपद्रव्यपरतन्त्रमेव दृश्यते, न च व्यक्तेरेव स्वलक्षणत्वं वाच्यम्, तस्य प्रमातृकृतदेशकालयोजनाप्राणत्वात्, अस्यास्तु बहिःस्थितत्वात्, अन्यथा सामान्यव्यञ्जकत्वायोगात्। तु व्यतिरेके, शुद्धस्य-अन्याभाससमानाधिकरणत्वेनास्थितत्वात्[2] तद्भेदामिश्रस्य, घटाभासस्य-उदकाहरणार्थित्वादिना प्रधानतया स्थितस्य घटाकारस्याभासस्य, घटस्वलक्षणस्येति यावत्। स्वतन्त्रपरामर्शे-पृथग्वस्तुत्वाभासेन धर्मितया परामर्शे सति, योग्यतामात्रेण—केवलया योग्यतया, भाविनि स्वाभाविकधर्मतया भाने[3] समुचितत्वेनेति यावत्। सामान्यरूपता

1—इति पुनःशब्दस्य त्रिर्योजना—C.

2—अन्याभाससमानाधिकरणत्वेन स्थितत्वात्—C.

3—भाव-c. Should it be भाने instead of भावे, corresponding to योजनाप्राणधर्मितया भानरूपेऽस्मिन् काले, coming later on?

द्रव्यादन्यो हि सर्वः पदार्थः परतन्त्रतासारः, एवम् एकोऽपि घटात्मा च[1] इत्यपि सत्यमेव—आभासविमर्शार्थक्रियाबलेन तथा व्यवस्थापनात्[2] इति ॥ ६ ॥

ननु एकेनैव अर्थक्रिया न तत्र, अपि तु आभाससमुदायात् अर्थक्रियासमुदायः, आभासाश्च भिन्ना अपि यदि एकाम् अर्थक्रियां कर्तुं मिश्रीभवन्ति, तदा कस्तेषाम् इयत्तावधिः इति चोद्यम् अपवदति ।

पृथग्दीपप्रकाशानां स्रोतसां सागरे यथा ।
अविरुद्धावभासानामेककार्या तथैक्यधीः ॥ ७ ॥

---

भवति, वस्तुतः—परमार्थतो न भवति, योजनाप्राणधर्मितया भानरूपेऽस्मिन्काले न भवतीति यावत् । समानव्यक्तिगतस्य धर्मस्यैव पारमार्थिकसामान्यरूपत्वात् । कुत इत्यपेक्षायामाह "द्रव्यात्" इति । अन्यः—गुणादिरूपः, तथा च सामान्यस्यापि द्रव्यान्यत्वेन परतन्त्रत्वमेव युक्तमिति भावः । फलितं स्वाभीष्टमुपसंहरति "एवम्" इति । घटात्मा च—घटस्वरूपं च, अपिशब्देन भिन्नतया स्थितानामाभासानां पारमार्थिकं सत्यत्वं द्योतयति । अत्र हेतुमाह "आभास" इति । आभासः—घटप्रकाशः, विमर्शः—घटपरामर्शः । अर्थक्रिया—उदकाहरणम्, तासां बलेन, तथा व्यवस्थानात्—एकत्वव्यवस्थितेः । इति शब्दः श्लोकव्याख्यासमाप्तौ ॥ ६ ॥

अथ सप्तमस्य श्लोकस्यावतरणिकां करोति "ननु" इति ।

अत्र टीका :—

आभाससमुदायात्—आभाससमूहात्, तेषाम्—आभासानाम्, इयत्तावधिः—मिश्रीभावावसानमर्यादा, केषांचिदेव कुत्रचिदेव मिश्रीभाव इति यावत् । चोद्यम्—शिष्याक्षेपम्, अपवदति—प्रतिसमाधत्ते[3] । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "पृथक्" इति ।

---

1—एकोऽपि घटात्मा इत्यपि—K. S. S.
2—तथा अवस्थापनात्—K. S. S.
3—प्रतिसमादधते—C.

पृथक् वर्तिन्यो याः प्रदीपस्य प्रभाः सूक्ष्मतमावलोकनसामर्थ्या[1]धानलक्षणां याम् अर्थक्रियां न कृतवत्यः तामेव एकभवनाभ्यन्तरं संमूर्छितात्मानो विदधते, न तत्र अर्थक्रियाणां समुदायोऽस्ति। सागरपतितानि च स्रोतांसि बहुतरतरङ्गारंभार्थक्रियाकारीणि। तद्वत् घटः काञ्चनो लोहितः ततोऽयं शिवलिङ्गशिरोमार्जनोचितसलिलाहरणार्थक्रियोचितो[2] दृष्टमात्र एव तीव्रप्रीतिलक्षणार्थक्रियाकारी; इति सिद्धमेवार्थक्रियाकारित्वम्। यत् पुनराभासानां मिश्रणे का सीमा इति ? तत्र उच्यते—येषाम् अविरोधः त एव आभासा मिश्रीभवन्ति, नहि रूपाभासो मारुताभासेन मिश्रीभवति—विरोधात्, सोऽपि च नियतिशक्त्युत्थापितः।

---

अत्र टीका :—

श्लोकं व्याख्यातुं प्रक्रियां करोति "पृथक्" इति। सूक्ष्मतमस्य—अतिसूक्ष्मस्य यदवलोकनम् दर्शनम् तत्र यत्सामर्थ्याधानम्—समर्थतासंपादनम्—, तत् लक्षणम् स्वरूपं यस्यास्तादृशीम्, न कृतवत्य :—नाकुर्वन्, तामेव—सूक्ष्मतमावलोकनसामर्थ्याधानलक्षणामर्थक्रियामेव, संमूर्छितः—समुदायस्थितया वृद्धिं गत आत्मा यासां तादृश्यः, विदधते—कुर्वते। एकं दृष्टान्तमुक्त्वा द्वितीयमपि कथयति "सागर" इति। बहुतरतरङ्गाणां य आरम्भः स एव अर्थक्रिया तां कुर्वन्तीति तादृशानि भवन्ति इति संबन्धः। दृष्टान्तद्वयमुक्त्वा दार्ष्टान्तिकं कथयति "तद्वत्" इति। अयं घटः शिवलिङ्गशिरसो यन्मार्जनम् क्षालनं तत्रोचितं यत्सलिलं तस्य यदाहरणम् तदेवार्थक्रिया तत्रोचितो योग्यः, शिवलिंगे काञ्चनघटेनैव स्नानस्य विहितत्वात्। दृष्टमात्र एव—केवलं दृष्ट एव, "एकार्थक्रियाकारित्वम्" इति, समुदायस्येति शेषः। समुदायादेकामर्थक्रियां सदृष्टान्तमुक्त्वाऽऽभासानां मिश्रीभावे इयत्तावधिं कथयति "यत्पुनः" इति। सीमा—मर्यादा। इयत्तावधिरिति यावत्। येषाम्—येषामाभासानाम्। सामान्यं विशेषेण समर्थयति "नहि" इति। विरोधात् इति, वायो रूपराहित्यादिति भावः। ननु कथं मारुतरूपयोर्विरोधोऽस्तीत्यत आह "सोऽपि च" इति। सोऽपिच—

---

1—सूक्ष्मतमा अवलोकनसामर्थ्या—K.S.S.

2—शिवलिङ्गशिरःसमावर्जनोचितसलिल—K.S.S.

पृथक् ये दीपप्रकाशाः तेषां संबन्धि यदेकं सागरे स्रोतसां च यदेकं वस्तु तेन कार्या यथा ऐक्यधीः तथा अविरुद्धा ये अवभासा घटलोहितकाञ्चनादयः तेषां संबन्धि यदेकं स्वलक्षणं तत्कार्या ऐक्यधीरिति संबन्धः, ऐक्यधिया—प्रतिभासो विमर्शोऽर्थक्रिया च इति स्वीकृतम् ॥ ७ ॥

नन्वेवं प्रत्याभासं प्रमाणस्य विश्रान्तत्वात् अग्न्याभासे अग्निज्ञानं प्रमाणं धूमज्ञानं च धूमाभासमात्रे कार्यकारणभावावभासोऽपि तावन्मात्रे, ततश्च धूमाभासोऽपि अग्न्याभासं व्यभिचरेत् इत्यादि बहुतरोपप्लवप्रसंगः इति शंकाम् अपोहितुम्[1] आह

---

विरोधोऽपि च, न च नियतेः पर्यनुयोगो युक्त इति भावः। प्रक्रियां संपाद्य सूत्रयोजनां करोति "पृथक्" इति । एकं वस्तु इति संबन्धः । वस्तु शब्द उभयत्र स्वलक्षणवाची । तेन–वस्तुना, कार्या–संपाद्या, स्वलक्षणम्–देशकालादियोजनानुप्राणितम् अन्याननुयायि स्वरूपम्। संबन्धः, श्लोकस्येति शेषः । नन्वैक्यधीः स्वलक्षणकार्या भवतु, अर्थक्रिया कथमेका ज्ञेया इत्यत आह "ऐक्यधिया" इति । ऐक्यधिया कर्त्र्या, इति—एतत् स्वीकृतम्, स्वकारणत्वेन लक्षणया गृहीतम् । इति किमिति ? प्रतिभासः विमर्शः 'अर्थक्रिया' इति । तेनैकप्रतिभासः एकविमर्शः, एकार्थक्रिया च एककार्या भवति इति योजनीयम् । प्रतिभासादित्रये एवैक्यधीर्भवति इत्यत्र न कोऽपि विरोधः ॥ ७ ॥

अथाष्टमस्य श्लोकस्यावतरणिकां करोति "नन्वेवम्" इति ।

अत्र टीका :—

एवम्—उक्तप्रकारेण, प्रत्याभासम्—प्रत्येकमाभासेषु, तावन्मात्रे–अग्न्याभासधूमाभासकार्यकारणभावाभासमात्रे, ततश्च–ततो हेतोश्च, "व्यभिचरेत्" इति, भिन्नप्रमाणवेद्यत्वादिति भावः । आदिशब्देनान्येषां व्यभिचाराणां ग्रहणम् । अपोहितुम्[2]—दूरीकर्तुम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "तत्र" इति ।

---

1—व्यपोहितुम्—N. S. S.

2—अपोहयितुम्—C

तत्राविशिष्टे वह्न्यादौ कार्यकारणतोष्णता--
तत्तच्छब्दार्थताद्यात्मा प्रमाणादेकतो मतः ॥८॥

तत्रेति—प्रत्याभासं प्रमाणं विश्राम्यति, इत्यस्मिन्नपि पक्षे न कश्चित् दोषः, तथाहि--अविशिष्टो यद्यपि वह्न्याभासो देशकालाभासप्रमुखैः आभासैः असंकीर्णत्वेन सामान्यमात्ररूपत्वात् तथापि स एवाभासो यावद्भिराभासैरविनाभूतो भगवत्या नियतिशक्त्या नियमितः तावतोऽवभासान् स्वीकृत्यैव प्रमाणकृतां निश्चयपदवीम् अवतरति[1]। ततश्च वह्न्याभास इन्धनकार्यत्वाभासेन धूमकारणताभासेन उष्णस्वभावताभासेन च स्वाभाविकाव्यभिचरितनियमः[2] प्रतीयमानो विश्वत्रैव सर्वदैव च तथा प्रतीतो भवति--एकत्वात् तस्य। अस्वाभा-

अत्र टीका:—

"तत्र" इति पदं व्याचष्टे "प्रत्याभासम्" इति। अपि न कश्चिद्दोषः इति शेषत्वेनाध्याहृतम्। कथं न दोष इत्यपेक्षायाम् "अविशिष्टे" इत्यादि व्याख्यास्यन् समर्थनमुपक्रमते "तथा हि" इति। तथाहीत्यस्याकांक्षां पूरयति "अविशिष्टः" इति। अविशिष्टः—स्वलक्षणतामप्राप्तः। कुतोऽविशिष्ट इत्यपेक्षायां हेतुमाह "देश" इति। "प्रमुख" शब्देनाकारादिग्रहणम्, असंकीर्णत्वेन—अमिश्रत्वेन, स एवाभासः—वह्न्याभास एव, आभासैः—कार्यकारणतादिरूपैः, अविनाभूतः—व्याप्तः, तावतः—तान् समस्तान्, प्रमाणकृताम्—प्रमाणसंपादिताम्, निश्चयपदवीम्—प्रमाविषयताम्, अवतरति—अवगाहते, तादृक्स्वभावत्वात् इति भावः, फलितमाह "ततश्च" इति। ततश्च—तस्माद्धेतोश्च, वह्न्याभासः—वह्निरूपाभासः, वह्नेरिन्धनकार्यत्वम् इन्धनद्योत्यत्वकृतं ज्ञेयम्। स्वाभाविकः—स्वभावादागतः, अत एवाव्यभिचरितो नियमः यस्य सः—स्वाभाविकाव्यभिचरितनियमः, विश्वत्र—सर्वदेशेषु, सर्वदा-सर्वकालेषु, कुतः प्रतीतो भवति इत्यपेक्षायामाह "एकत्वात्" इति।

1.—तथा च—K. S. S.

2.—स्वाभाविकाव्यभिचरितसाहचर्यः—K. S. S.

विकोऽपि यः स्वभावः पुरुषकृतसमयादिमुखप्रेक्षी, तद्यथा-अग्नि-शब्दवाच्यत्वं घटप्रतिपत्तिकारित्वमित्येवमादिः, सोऽपि एकप्रत्यक्षा-देवनिश्चीयते, तस्य हि प्रमातुः कृत्रिमेण इतरेण वा रूपेण आभासान्तरनान्तरीयकतया असौ वह्न्याभासः संविदितः सर्वदेश-कालगतः तथा[1] संविदितः, इति तत्र किं प्रमाणान्तरेण । तस्य

---

तस्य–वह्नेः, एकत्वात्—सामान्यद्वारेण सर्वेषु देशेषु कालेषु चैकतया स्थित-त्वात् । एतेन पूर्वार्धव्याख्या संपन्ना । पूर्वार्धेन सह समस्ततया स्थितं "तत्तत्" इत्याद्युत्तरार्धगतं व्याख्यातुमाह "अस्वाभाविकः" इति । अस्वाभाविकः—पुरुषकृतसंकेतसिद्धत्वेनागन्तुकः, स्वभावः—वह्निस्वरूपम् , कथमस्वाभाविकः इत्यत आह "पुरुष" इति । पुरुषेण–आदिपुरुषेण सामान्यपुरुषेण वा कृतो यः समयः "अस्यायमर्थः" इत्येवंरूपः संकेतः स आदिर्यस्य वृद्धव्यवहारादेस्तस्य मुखं प्रेक्षते इति तादृशः । कोऽसौ स्वभावः इत्यपेक्षायामाह "तद्यथा" इति । वह्नेः अग्निशब्दवाच्यत्वं हि पुरुषसमयसिद्धमेव, न सहजम् । आदिशब्दगृहीतं वस्तु कथयति "घट" इति । प्रदीपभावेन घटप्रकाशकत्वमित्यर्थः । तदपि हि वह्नौ न स्वाभाविकमपि तु नियतिशक्तिकृतत्वात् स्वरूपाद्व्यतिरिक्तमेव, कादा-चित्कत्वात् , स्वरूपस्य[2] च सदास्थितत्वात् । इत्येवमादिः–इत्यादिरूपः, आदि-शब्देन गन्धरसशून्यत्वादेर्ग्रहणम् । सोऽपि—यच्छब्दोक्तः सर्वः अस्वाभाविकः स्वभावोऽपि, एकप्रत्यक्षादेव—एकस्मात्प्रत्यक्षप्रमाणादेव । कुत इत्यपेक्षायां वाक्येन हेतुमाह "तस्य" इति । तस्य—वह्निग्राहकतया स्थितस्य, कृत्रिमेण पुरुषसमयमुखप्रेक्षिणा, इतरेण-अकृत्रिमेण रूपेण, उपलक्षितानि यानि आभा-सान्तराणि—वह्न्याभासादन्ये आभासाः सदाद्याभासास्तैर्या नान्तरीयकता-साहचर्यनियमो व्याप्तिरिति यावत् , तथा संविदितः—प्रथमं सम्यग्ज्ञातो भवति, अतः सर्वदेशकालगतः स तथा संविदितः—आभासान्तरनान्तरी यकतया संविदितः स्यात् , इति किं तत्र प्रमाणान्तरेण एकेन प्रमाणेनैव सिद्धत्वात् न किञ्चिदित्यर्थः । "तत्तच्छब्दार्थ" इत्यस्य समासावयवचतुष्कस्य सूचनीयं वस्तु विग्रहद्वारेण दर्शयति "तस्य" इति । "तस्य तस्य" इत्यस्यार्थमाह

---

1—तथैव संविदितः—K. S. S.

2—रूपस्य च सदा स्थितत्वात्—C.

यथेच्छं पुरुषसमयेन नियुज्यमानस्य शब्दस्य अर्थोऽयं ज्वलद्भास्वराकार आभास इत्यनेन नियतिशक्तिरेव सर्वत्र शरणम् इति पिशुनयति। एतदुक्तं भवति—यत्किंचित् कृत्रिमम् इतरद्वा भावाभासस्य आभासान्तरेण नान्तरीयकतया[1] प्रतिभाति तत्र नियतिशक्तिमात्रमेव परं विजृम्भते। तत्तु नियतिरूपं[2] पूर्वापरविततकालम्—इन्धनकार्यत्वे धूमकारणत्वे उष्णस्वभावत्वे च आभासमाने, अनतिचिरकालं तु वह्न्यादिशब्दवाच्यतावभासादाविति[3] विशेषः। ततश्च नियतिशक्त्युपजीवनेन धूमाभासोऽपि अग्न्याभासाव्यभिचारी इति न कश्चिन् विप्लवः।

---

"यथेच्छम्" इति। इत्यनेन—एतेन, पिशुनयति—सूचयति, दण्डापूपिकान्यायेनेति भावः। यत्र हि पुरुषकृतया नियत्या शब्दानां स्वार्थे स्थितिः तत्र कः संशयः ईश्वरनियतेराभासमिश्रीभावनियमने इति। एतेनोक्तं वस्तु संग्रहेण कथयति "एतत्" इति। किमुक्तं भवतीत्यत आह "यत्किञ्चित्" इति। भावाभासस्य—वह्न्याभासादिरूपस्य पदार्थाभासस्य, नान्तरीयकतया—व्याप्त्या, साहचर्येणेति यावत्। परम्—केवलम्। नियतेर्विषयकृतं विशेषं दर्शयति "तत्तु" इति। नियतिरूपम्—नियतिशक्तिस्वरूपम्। तत्र इन्धनकार्यत्वे भासमाने पूर्वकालं भवति वह्नेः पूर्वस्थितत्वात्, अन्यथेन्धनकार्यतानियमायोगात्, तथा धूमकारणत्वेऽवभासमाने अपरकालं भवति, अन्यथा धूमकारणत्वं प्रति कं नियमयेत्, तथोष्णस्वभावत्वेऽवभासमाने विततकालं लक्षणया सर्वकालं भवति, वह्नेः सर्वदोष्णत्वनियमात्, तथा वह्न्यादिशब्दवाच्यतावभासादौ अनतिचिरकालं भवति, अस्य समयस्य मध्ये कल्पितत्वेनानादित्वाभावात् अन्यथा पुरुषकृतत्वायोगात्, इति विशेषः, एवंरूपो विशेषो भवतीत्यर्थः। फलितं स्वाभिप्रायं कथयति "ततश्च" इति। नियतिशक्त्युपजीवनेन—नियतिशक्त्यपेक्षया, एवमेव नियतेः स्थितत्वात् इति यावत्। विप्लवः—नियमविधुरता। योजनां दर्शयन् प्रथमं

---

१—नान्तरीयकत्वम्—K. S. S.

२—नियतिशक्तिरूपम्—K. S. S.

३—वह्न्यादिशब्दवाच्यत्वाभासादाविति—K. S. S.

कार्यता कारणता उष्णता च तस्य तस्य शब्दस्यार्थता तत्तच्छब्दाभिधेयता, आदिग्रहणात्—गन्धरसशून्यता ऊर्ध्वदिक्संयोगिता जलविरोधिता च, इत्येवंभूतो य आत्मा स्वभावो वह्न्यादौ स एकस्मादेव प्रमाणात् मतः—संविदित इति यावत् । अविच्छेदः[1] इति काव्ये अयं समयो, न ग्रन्थे, इति द्वितीयतृतीयपादयोः सामस्त्येऽपि अदोषः । पृथग्भावप्रत्ययप्रयोगो वस्त्वन्तरापेक्षानपेक्षातः कृतकत्वाकृतकत्वाभ्यां वर्गभेदं सूचयितुम ॥ ८ ॥

---

"कार्यकारण" इत्यादिरूपस्य दीर्घसमासस्य विग्रहं दर्शयति "कार्य" इति । आदिशब्दगृहीतं वस्तु दर्शयितुमाह "आदि" इति । इत्येवंभूतः—इत्येवंरूपः । "आत्म" शब्दवाच्यमाह "स्वभावः" इति । एतन्नये सर्वेषां धर्माणां स्वरूपतानपायात् आत्मशब्दग्रहणम् । "वह्न्यादौ" इति । "आदि" शब्देन सर्वेषां पदार्थानां ग्रहणम् । "प्रमाणात्" इत्येकवचनस्य व्याख्यां करोति "एकस्मात्" इति । "मतः" इत्यस्य व्याख्यां करोति "संविदितः" इति । "यावत्" शब्दः पर्यायत्वसूचनार्थः । पूर्वोत्तराऽवस्थितानां शब्दानां समसने दोषं निवारयति, अविच्छेदः कार्य इति शेषः । ग्रन्थे, संग्रहेण महारहस्यवाचके पदसन्दर्भे इत्यर्थः । अदोषः, दोषाभाव इत्यर्थः । समासान्ते स्थितेनैकेन भावप्रत्ययेनापि सिद्धौ प्रत्यवयवं स्थितस्य भावप्रत्ययस्याभिप्रायमाह "पृथक्" इति । भावप्रत्ययप्रयोगः--तलः प्रयोगः, वस्त्वन्तरस्य-समयादेः, "वर्गभेदम्" इति,

---

1—'अर्धे छेदः' K. S. S. We do not know if this or the corresponding text 'अविच्छेदः' as found in the भास्करी is a quotation or not. Whatever it be, both yield a good meaning, fitting in with the context. In the former case, the meaning would be that there should be a break at the completion of half of the verse, i. e. the compound word should not extend from the 1st half to the 2nd. In the latter case the meaning would be that a compound should not be divided between the two halves of a verse. According to our practice we have adopted the भास्करी text.

एवं भावस्वभावव्यवस्थापनं प्रत्याभासविश्रान्तेन एकेन[1] प्रमाणेन क्रियते, तेषामपि आभासानां यथोचितं यदन्योन्यनान्तरीयकत्वं तत् एकेन संवेदनरूपेण तदनेकप्रमिताभासविषयपूर्वप्रवृत्तसंवेदनकलापानुप्राणकान्तर्मुखस्वरूपेण निश्चीयते, तत्र ऐक्याभासमात्रे अनुसंधानरूपं प्रमाणम्, अनुसन्धीयमानेषु तु आभासेषु गृहीतग्राहित्वात् अप्रमाणम्, तत्र तु प्रत्येकं प्राच्यमेव प्रमाणम्। भावस्वभावव्यवस्थापनात्मकमानसप्रवृत्त्यतिरिक्तकायप्रवृत्त्युपयोगस्तु यथा प्रमाणविषयः तं

---

समानां समूहो हि वर्गः, तत्रैव चैको भावप्रत्ययो युक्तः, न विसदृशसमूहे इति भावः। तत्र कार्यकारणभावादेरकृतकत्वम् शब्दाभिधेयत्वादेः कृतकत्वमिति ॥८॥

अथ नवमस्य श्लोकस्यावतरणिकां करोति "एवम्" इति।

अत्र टीका :—

एवम्—पूर्वश्लोकोक्तप्रकारेण, भावस्वभावव्यवस्थापनम्—वह्न्यादिस्वरूपस्य मर्यादयावस्थापनम्, प्रत्याभासम्—भावगतेषु सर्वेष्वाभासेषु, विश्रान्तेनैकेन प्रमाणेन क्रियते पृथक् पृथक् एकैकप्रमाणेन वह्नौ इन्धनकार्यतादिस्वभावव्यवस्थापनात्। तेषाम् आभासानाम्—इन्धनकार्यताद्याभासानाम्, यथोचितं यदन्योन्यनान्तरीयकत्वम्-परस्परं साहचर्यनियमः, तत् संवेदनरूपेण—संवेदनस्वरूपेण, निश्चीयते, संवेदनरूपेण कीदृशेन? ते च ते अनेके प्रमिता आभासास्ते विषयाः यस्य तादृशः पूर्ववृत्तः-पूर्वसंपन्नः, संवेदनकलापः-प्रमासमूहः, तस्यानुप्राणकं-सत्तादायि अन्तर्मुखं स्वरूपं यस्य तादृशेन, सकलविमर्शरूपेणेत्यर्थः। अनुसन्धानरूपम्-पूर्वगृहीताभासयोजनारूपम्, तच्च-संवेदनरूपं च, ऐक्याभासमात्रे प्रमाणं भवति, योजनारूपत्वात्। तु व्यतिरेके, अनुसन्धीयमानेषु तु आभासेषु गृहीतग्राहित्वात् अप्रमाणं भवति, ते हि यथास्वं स्वविषयेन प्रमाणेनैव पूर्वं गृहीताः, अनेन त्वनुसन्धीयन्ते, अन्यथैक्येन ग्रहणासंभवात्। कथम् इत्यपेक्षायामाह "तत्र" इति। तु शब्दो हिशब्दार्थे, तु-यस्मात् तत्र-तेष्वाभासेषु प्राच्यमेव-ग्रहणकालीनमेव, प्रमाणं भवति। नन्वेवं सति कायप्रवृत्तिरयुक्तैव, विमर्शमात्रसाध्यत्वात् अर्थक्रियायाः तस्य च मानसप्रवृत्तिमात्रसाध्यत्वात् इत्यत आह "भाव" इति। यथा-येन प्रकारेण।

---

1—एकेनैव प्रमाणेन—K. S. S.

प्रकारं दर्शयितुम् आह :—

**सा तु देशादिकाध्यक्षान्तरभिन्ने स्वलक्षणे ।**

**तात्कालिकी प्रवृत्तिः स्यादर्थिनः.........**

बाह्या तावत् अर्थक्रिया स्वलक्षणतः, स्वालक्षण्ये च देशकालाभासयोजनस्यैव अन्तरङ्गत्वम् तत्रापि च विशेषरूपतापि परामर्शं विना न किंचित्, परामर्शद्वारेण तु प्रमातरि विश्राम्यन्ती प्रमातुः संवेदनैकरूपस्य देशकालायोगेन ऐक्यात् अभ्युज्झत्येव विशेषरूपताम्, इति सर्वत्र अद्वयं परमार्थतः, तथापि तु या विशेषरूपता भाति तस्यां[1] परमेश्वरस्वातन्त्र्यमेव निमित्तं यत्, तत् मायाशक्तिरित्युच्यते। तत्र

---

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "सा तु" इति।

अत्र टीका:—

श्लोकं व्याख्यातुं प्रक्रियां करोति "बाह्या" इति। "बाह्या" इति, बाह्यवस्तुसाध्यत्वादिति भावः। तावत्, नात्र कस्यापिविप्रतिपत्तिरित्यर्थः। स्वलक्षणतः-देशाद्याभासयोजनासिद्धात्[2], वस्तुनोऽन्याननुयायिस्वरूपात्, स्वालक्षण्ये च-स्वलक्षणभावे च, अन्तरङ्गत्वम्-असाधारणकारणत्वम्। देशादियोजनेनैव हि सामान्यं स्वलक्षणीभवति। तत्रापि च-तस्मिन् स्वलक्षणे च, परामर्शं विना—विशेषामर्शनं विना, न किञ्चित्-न किमपि भवति, परामृष्टमेव हि वस्तु स्वरूपं लभते। ननु परामर्शोऽपि भवतु इत्यत आह 'परामर्श' इति। परामर्शद्वारेण-परामर्शमुखेन, संवेदनैकरूपस्य-नित्यव्यापकसंवेदनैकस्वरूपस्य, देशकालायोगेन-देशाद्यसंबन्धात्, ऐक्यात् हेतोः, सा विशेषरूपता विशेषरूपतामभ्युज्झत्येव-जहात्येव, इति-अतः कारणात्, अद्वयम्-द्वैताभावः परमार्थतो भवति, तथापि तु या विशेषरूपता भाति-बाह्यवस्तुविषयत्वेन स्फुरति, तस्यां यत् परमेश्वरस्वातंत्र्यमेव भवति निमित्तं तत् पण्डितैः मायाशक्तिरित्युच्यते असंभवोपहतवस्तुभानहेतोरेव मायात्वकल्पनात्। उक्तप्रक्रियावष्टंभेन सूत्रे योजनां करोति "तत्र" इति।

---

1—तस्याः—K. S. S.

2—देशाद्याभासयोजनासिद्धत्वात्—C.

विशेषसाध्यार्थक्रियाविशेषेण योऽर्थी तस्य या स्वलक्षणे तस्मिन् विशेषरूपे अर्थे तत्कालभाविनी वाङ्मनः कायप्रवृत्तिः सा देशे, आदिग्रहणात् काले स्वरूपान्तरे तदनुसन्धानादौ[1] च यानि अध्यक्षान्तराणि बहूनि प्रत्यक्षाणि तेषां भिन्ने भेदे निमित्ते सति भवति, न अन्यथा। नैकैकतः प्रमाणात् सा प्रवृत्तिः अपि तु प्रमाणसमूहादेव। समूहता च परस्य न उपपन्ना, अस्माकं तु एकस्वसंवेदनविश्रान्तिमयी सा

---

तत्र सति। "**अर्थिनः**" इति व्याचष्टे "**विशेष**" इति। विशेषेण—स्वलक्षणेन साध्यो योर्थक्रियाविशेषः तेनार्थी—अर्थित्वयुक्तः, तत्कांक्षायुक्त इति, यावत्। षष्ठीयोजनां करोति "तस्य" इति। "**स्वलक्षणे**" इति व्याचष्टे "**तस्मिन्**" इति। "**तात्कालिकी**" इति व्याचष्टे "**तत्काल**" इति। ग्रहणकालभाविनीत्यर्थः। "**प्रवृत्तिः**" इति व्याचष्टे "**वाक्**" इति। प्रवृत्तेस्त्रिविधत्वादेवमुक्तम्। "**देश**" इत्यादि समस्तं पदं विग्रहपूर्वं व्याचष्टे "**देशे**" इति। आदिशब्दग्राह्यं वस्तु कथयति "**काले**" इति। स्वरूपान्तरे—देशादिस्वरूपाद्भिन्ने तदवच्छिन्ने वस्तुस्वरूपे, तस्यैव वस्तुस्वरूपस्य यः अनुसन्धानादिः, आदिशब्देन देशाद्यनुसन्धानग्रहणम्, तत्र अध्यक्षान्तराणि—ऐक्यग्राहकात् प्रत्यक्षादन्यानि, बहूनि—विषयबहुत्वेन बहुतया स्थितानि, प्रत्यक्षाणि—बाह्यमानसरूपाणि तेषाम् "**भिन्ने**" इति व्याचष्टे "**भेदे**" इति। एतेन भावे क्तोऽत्रेति विद्योतितम्, निमित्ते सप्तमीति च। संग्रहेणामुमेवार्थं पुनः कथयति "**नैकैकतः**" इति। प्रथमं हि पुरुष इह इदानीमयमिति प्रत्येकं देशादिकं प्रमाणैर्गृहीत्वा ततो विकल्पेन सर्वेषां योजनां कृत्वा वागादिकं तत्र प्रवर्तयति। यद्यपि स्वलक्षणग्रहणमेकस्मादेव प्रमाणात्पूर्वमुक्तं तथापि मूले स्थितां प्रत्याभासप्रमाणप्रवृत्तिमपेक्ष्यैवमुक्तमिति पूर्वापरविरोधो न शंकनीयः। अथवा स्वलक्षणस्य ग्रहणमेकस्मात्प्रमाणादुक्तम्, प्रवृत्तिस्तु बहुभिः प्रत्यक्षैरिति पूर्वापरविरोधाशंकैव नास्ति, ग्रहणं ह्यापातमात्रेऽपि भवति प्रवृत्तिस्तु मूलविचारानन्तरमेवेत्यलम्। ननु "स्वाभासोऽभिनवोदयः" इत्यत्र प्रमाणानां क्षणिकत्वमेवोक्तमिति कथं तेषां समूहः संभवतीत्यत आह '**समूहता च**' इति। परस्य—बौद्धस्य, अस्माकम्—श्रीशिवनये निष्ठितानाम्, सा—समूहता। ननु कुत्रोक्तमित्यपेक्षायां

---

1—स्वरूपानुसंधानादौ—K. S. S.

युज्यते, इति उक्तं प्राक्

'न चेदन्तः कृता.........। (२।३।७)

इत्यत्र। इयमेव च सा प्रमाणानां योजना, योजिका च युक्तिरित्युच्यते। गन्धद्रव्यादियुक्तिवत्। एवं प्रत्यक्षसमूहादेव प्रवृत्तिरिति तात्पर्यम्। देशादिकेष्वध्यक्षेष्वपि[1] देशाभासादियोजनायामपि[2], अन्तः-प्रमातरि अभिन्नं यत् स्वलक्षणं तत्र इति वा संगतिः। देशादिकैरध्यक्षान्तरैः प्रत्यक्षीभूतैराभासान्तरैर्भिन्ने स्वलक्षणे निमित्ते सति प्रवृत्तिः, इति वा योजना। अत्रापि प्रमेयबहुत्वनिरूपणदिशा तदनुयायित्वेन अभिधीयमानः प्रमाणसमूहो निमित्तत्वेन उक्तो भवति।

---

पूर्वं व्याख्यातं श्लोकमनुस्मारयति "न चेत्" इति। अस्मिन् श्लोके हि सर्वसंविन्मयपिण्डमयमेकं तत्त्वमात्मत्वेन साधितम्। तत्रैव च प्रमाणसमूहस्यापि स्थितिर्युक्तैवेति भावः। अस्याः समूहताया एव युक्तिरिति नाम कथयति "इयमेव" इति। सा—समूहता। अत्र दृष्टान्तमाह "गन्ध" इति। संग्रहेणास्य श्लोकस्य तात्पर्यं कथयति "एवम्" इति। "**देशादिक**" इति समस्तपदस्यान्यथा योजनां करोति "देशादिक" इति। देशादिकेष्वध्यक्षेष्वपि देशाभासादियोजनायामपि। "**अन्तः**" इत्यस्य व्याख्यां करोति "प्रमातरि" इति। "**अभिन्ने**" एकस्मिन् सति, एतेन कर्मणि क्तप्रयोग इति द्योतितम्, **स्वलक्षणे** इति निमित्तसप्तमी। **सङ्गतिः**—संबन्धः। अन्यथा पुनर्योजनां करोति "**देशादिकैः**" इति। नन्वनेन व्याख्याद्वयेन किं फलितमित्यत आह "**अत्रापि**" इति। **अत्रापि**—अस्मिन् व्याख्याद्वयेऽपि, **तदनुयायित्वेन**—प्रमेयबहुत्वानुगतत्वेन, अत्रापि प्रत्यक्षसमूहादेव प्रवृत्तिरिति भावः। एतेन "**अर्थिनः**" इत्यन्तं व्याख्या संपन्ना। एवमत्र स्फुटा योजना। तु शब्दः एकस्मात् प्रमाणात् कार्यताद्याभासकदंबकात् पक्षान्तरद्योतकः। सा कर्त्री देशादिकाध्यक्षान्तरभिन्नस्वलक्षणे भवति, सा का, या अर्थिनस्तात्कालिकी प्रवृत्तिः स्यादिति।

---

1—देशादिकेष्वप्यध्यक्षेषु सत्सु—K. S. S.

2—देशाभासयोजनायामपि—K. S. S.

ननु किं प्रात्यक्ष्यामेव प्रवृत्तौ प्रमाणसमूह उपयोगी ? नेत्याह

·········अप्यनुमानतः ॥ ९ ॥

न केवल प्रत्यक्षतः प्रवृत्तिः देशादिकाध्यक्षान्तरभेदरूपप्रमाणसमूह-निमित्ता यावत् अनुमानतोऽपि तथैव । धूमाभासमात्रे अग्न्याभासमात्रे धूमस्याग्न्याभासाव्यभिचारित्वे पर्वताभासे च यानि प्रत्यक्षान्तराणि यच्च तद्गृहीतातिरिक्ते अयोगव्यवच्छेदे 'अग्निरत्र' इत्येवंभूते पृथक् अनुमानं प्रमाणम् तत्समूहादेव अर्थिनः तात्कालिकी प्रवृत्तिः इति सबन्धः ॥ ९ ॥

एवं विमर्शबलादेव भेदाभेदव्यवस्था, तदेव हि परमेश्वरस्य संवेदनात्मनः शिवनाथस्य स्वातन्त्र्यशक्तिविजृम्भितम् ; ततश्च परैः यत् उच्यते 'दूरान्तिकादौ अर्थस्य अभेदः इति तदपि उपपद्यते, न तु अन्यथा कथंचित् ,—इति निरूप्यते ।

---

शिष्टस्य "अपि" इत्यादेः श्लोकखंडस्यावतरणिकां करोति "ननु" इति । प्रात्यक्ष्यामेव—प्रत्यक्षसंबन्धिन्यां तदनन्तरभाविन्यामिति यावत् । अत्रोत्तरं कथयति "नेत्याह" इति । एवमवतरणिकां कृत्वा श्लोकखण्डमुपन्यस्यति "अप्यनुमानतः" इति ।

एतद्व्याचष्टे "न केवलम्" इति । तथैव, देशादिकाध्यक्षान्तरभेदरूप-प्रमाणसमूहनिमित्तैवेत्यर्थः । एतदेव विस्तरेण कथयितुमाह "धूम" इति । धूमाभासमात्रे—लिंगरूपे, अग्न्याभासमात्रे—व्याप्तिकालीने, धूमाग्न्याभासाव्यभिचारित्वे—साहचर्ये, पर्वताभासे—पक्षे, तेभ्यो गृहीतेभ्यो धूमादिभ्यः अतिरिक्ते-तद्गृहीतातिरिक्ते, अयोगव्यवच्छेदे-अग्न्यसंबन्धव्यावृत्तौ, तद्वत्त्वे इति यावत् । अयोगव्यवच्छेदस्वरूपं दर्शयति "अग्निः" इति । पृथक्-प्रत्यक्षेभ्यो भिन्नम् , तत्समूहात्—प्रत्यक्षानुमानप्रमाणसमूहात् , इति संबन्धः, अस्य श्लोकखण्डस्यैवं योजना भवति इत्यर्थः ॥ ९ ॥

अथ दशमस्यैकादशस्य च श्लोकस्यावतरणिकां करोति—"एवम्" इति ।

अत्र टीका:—

एवम्—उक्तन्यायेन, तदेव-विमर्श एव, संवेदनात्मनः-प्रकाशरूपस्य,

दूरान्तिकतयार्थानां परोक्षाध्यक्षतात्मना ।
बाह्यान्तरतया दोषैर्व्यञ्जकस्यान्यथापि वा ॥ १० ॥
भिन्नावभासच्छायानामपि मुख्यावभासतः ।
एकप्रत्यवमर्शाख्यादेकत्वमनिवारितम् ॥ ११ ॥

प्रतिभासमात्रेण व्यवस्थां कुर्वतः कथं दूरादूरयोर्वस्तुनोरभेदः, प्रतिभासस्य सकलासकलावृतानावृतादितया यथाकथंचिदपि भेदात् ? ननु विमर्शेऽपि प्रत्याभासं तथैव भिन्नता, ? सत्यम्, तथापि तु परो यो विमर्शः स एवायं पदार्थः इति एकप्रत्यवमर्शरूपः, तेन प्राणितकल्पेन आ समन्तात् ख्यानं प्रथनं यस्य मुख्यावभासस्य एकरूपभावाभासस्य,

---

परैः—तार्किकैः । एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे "दूरान्तिक" इति ।

अत्र टीकाः—

श्लोकं व्याख्यातुं प्रक्रियां करोति "प्रतिभास" इति । प्रतिभासमात्रेण—विमर्शरहितेन प्रकाशेन, व्यवस्थाम्—नीलादिव्यवस्थाम् कुर्वतः बौद्धस्येति शेषः । कुतो नाभेद इत्यपेक्षायामत्र हेतुमाह "प्रतिभासस्य" इति । तत्र दूरेऽसकलः अदूरे सकलः तथा दूरे आवृतः अदूरेऽनावृतः, आदिशब्देनास्फुट-त्वस्फुटत्वयोर्ग्रहणम्[1] । यथाकथञ्चित्, येन केन प्रकारेणेत्यर्थः । अत्र शिष्यः प्रश्नयति "ननु" इति । तथैव—आभासवत्, सकलादितयेत्यर्थः । उत्तरमाह "सत्यम्" इति । परः[2]—सामान्यरूपः, कीदृशः, इत्यत आह "स एवायम्" इति । तेन—परविमर्शेन, प्राणितकल्पेन·सत्कल्पत्वकारिणा, आ इति निपातस्य व्याख्यां करोति "समन्तात्" इति । "ख्या" इति कृत्प्रत्ययान्तधातुप्रकृतिं व्याचष्टे "ख्यानम्" इति । अस्यापि पर्यायमाह "प्रथनम्" इति । प्रत्यव-मर्शेनैव हि अवभासः स्फुरतीति भावः । "मुख्यावभास" इति व्याचष्टे

---

1—आदिशब्देनास्फुटत्वयोर्ग्रहणम्—C.

2—परसामान्यरूपः—C.

एकप्रत्यवमर्शो तदुचितोऽपि[1] हि अस्त्येकावभासः, आभासविमर्शयोर-न्योन्यमवियोगात् । तस्मात् मुख्यावभासादेकत्वमप्रतिहतमास्ते । यदेवानुमितं तदेव दृष्टम् ,—इत्यत्र प्रत्यक्षपरोक्षतारूपेणात्मना स्वभावेन भिन्ना अवभासच्छाया अमुख्योऽवभासो येषां तेषाम् एकत्वं मुख्यावभासत एकप्रत्यवमर्शानुप्राणितात् ,—इति संगतिः । बाह्यान्तर-तया भिन्नावभासानामैक्यं यथा यदेव दृष्टं तदेवान्तरहमुल्लिखामि,—इति । व्यञ्जकानां दीपालोकादीनां दोषैर्भिन्नावभासानाम् ऐक्यम् , यदेव रक्तोत्पलं दीपेन नीलं दृष्टं तदेव सूर्यांशुभिर्लोहितं पश्यामि, इति ।

---

"एक" इति । सामान्यरूपावभासस्येत्यर्थः । नन्वेकरूपोऽवभासो ऽत्र नानुभूयते, इत्यत आह "एक" इति । हि—यस्मात् , एकप्रत्यवमर्शे—स्फुटमेवानुभूयमाने सोऽयं पदार्थ इति सामान्यप्रत्यवमर्शे, तदुचितः—तद्योग्यः, एकावभासः—सामान्यावभासः अस्त्येव, कुतः, आभासविमर्शयोरन्योन्यम-वियोगात् , विमर्शो ह्यवभासं तत्संस्कारं वा बिना नोत्तिष्ठत्येव अवभा-सोऽपि विमर्शं विनाऽसत्कल्प इति । तखिलो योजनां करोति "तस्मात्" इति । "एकत्वमनिवारितम्" इति व्याचष्टे "एकत्वम्" इति । अप्रतिहतम्-प्रतीघातरहितम् , आस्ते-तिष्ठति । **दूरान्तिकतयार्थानाम्** इत्यस्यैतेन योजना कृता ।

एवमत्र संबन्धः । "**भिन्नावभासच्छायानाम्**" इति विशेषणमुत्तरत्र व्याख्यास्यमानमपि इहापि युज्यते एव तेनैवं योजना । दूरान्तिकतया भिन्नाव-भासच्छायानाम्—भिन्नाऽमुख्यप्रतिभासानामपि, अर्थानाम्—नीलादीनाम् , एक-प्रत्यवमर्शाख्यात् , अयमिति सामान्यप्रत्यवमर्शवशेन स्फुरितात् , मुख्यावभासतः एकत्वमनिवारितं भवति । एवमुत्तरत्रापि योजना कार्या । "**परोक्षाध्यक्षता-त्मना**" इत्यस्य योजनां करोति यदेव इति । संगतिः, **अनिवारितम्** इत्यनेन संबन्धः इत्यर्थः । "**बाह्यान्तरतया**" इति योजयति "बाह्य" इति । इति शब्दो योजनासमाप्तौ । अत्रापि योजना पूर्ववदेव कार्या । "**व्यञ्जकस्य दोषैः**" इति योजयति "व्यञ्जकानाम्" इति । "**अन्यथापि वा**" इति योजयति

---

1—अतदुचितः—K. S. S.

अन्येनापि[1] प्रकारेण इन्द्रियापाटवादिना एकपार्श्वसंमुखत्वादिना वा येषामवभासच्छाया भिन्ना, तेषामपि मुख्यप्रत्यवमर्शानुवर्त्यवभास-स्वरूपबलात् ऐक्यमेव,-इति स्थितम् ॥१०—११ ॥

ननु दूरादूरादावस्तु स एवार्थः प्रमात्रध्यवसितार्थक्रियांशे तथैवोपयोगात्, बाह्यान्तरत्वादौ कथम्, आन्तरस्यार्थक्रियायां प्रमात्रध्यवसितायामनुपयोगात्—इति भ्रान्तिं भङ्क्तुमाह

---

"अन्येनापि" इति । अन्यं प्रकारमेव स्फुटयति "इन्द्रिय" इति । आदिशब्देन व्याध्यादिकृतविकारादेर्ग्रहणम्[2] । एकस्मिन्पार्श्वे यत् संमुखत्वादि तेन । आदिशब्देन द्वितीयपार्श्ववैमुख्यग्रहणम् । ताभ्यामपि ह्येकमपि वस्तु भिन्नमिव भाति । मुख्यं प्रत्यवमर्शमनुवर्तते इति तादृशं यत् अवभासस्वरूपम् मुख्यावभासस्वरूपम् तस्य बलात्, स्थितम्, स्थितियुक्तं भवतीत्यर्थः ॥ १० ॥ ११ ॥

अथ द्वादशस्य श्लोकस्यावतरणिकां करोति—"ननु" इति ।

अत्र टीकाः—

"दूरादूरादौ" इति । आदिशब्देन परोक्षाध्यक्षत्वग्रहणम् । स एवार्थः, एक एवार्थ इत्यर्थः । कुत इत्यत आह "प्रमातृ" इति । प्रमात्राऽध्यवसितः—निर्णीतो यः अर्थक्रियांशः तस्मिन्, तथैव—तद्वत्, उपयोगात्,—दूरे परोक्षे वा स्थितं हि अदूरेऽध्यक्षे च स्थितं वा नीलं स्वविषयज्ञानरूपायामर्थक्रियायां हि सदृशमेवोपयोगं करोति, यस्तु मंदत्वादिभेदः सोऽकिञ्चित्कर एव । तु, विशेषे' बाह्यान्तरत्वादौ स एवार्थः कथम्, न युक्तमित्यर्थः । कुत इत्यपेक्षायामाह "आन्तरस्य" इति । नह्यन्तरुल्लिखितोऽग्निः बाह्याग्निसाध्यायां शीतापहरणरूपार्थक्रियायामुपयुक्तो भवतीति भावः । भंक्तुम्—त्रोटयितुम्[3] । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "अर्थक्रिया" इति ।

---

1—अन्येन वापि—K. S. S.

2—व्याख्याविकृत—C.

3—तोषयितुम—C.

**अर्थक्रियापि सहजा नार्थानामीश्वरेच्छया ।**
**नियता सा हि तेनास्या नाक्रियातोऽन्यता भवेत् ॥ १२ ॥**

इह 'कार्यकरणता'[1] ( २।३।८ ) इत्यत्र स्वरूपमिवार्थक्रियापि या मध्ये गणिता, सा सहजार्थस्वरूपभूता न भवति, तत्कारित्वं हि यस्मात् ईश्वरेच्छया नियतं भवने चाभवने च । यतो नैषा स्वरूपं, तेन तस्या अकरणात् हेतोर्भावस्यान्यत्वं नाशङ्कनीयं स्वरूपभेदात् हि संभाव्येतान्यत्वं, नच स्वरूपम् अर्थक्रियाकारित्वम्,–इत्युक्तं वक्ष्यते च बहुशः । स्वरूपं च प्रत्यवमर्शवलादेकमेव बाह्यान्तरादावपि, इति ॥ १२ ॥

---

अत्र टीकाः—

"**अर्थक्रिया**" इति व्याचष्टे "इह" इति । "इह"—अस्मिन् शास्त्रे, "कार्यकारणता" इत्यत्र, 'तत्राविशिष्टे', इत्यादि श्लोकस्थेऽत्र पदकदंबके, स्वरूपमिव—कार्यतादिस्वरूपवत्, "**सहजा**" इत्यस्य व्याख्यां करोति "अर्थ" इति । "न" इति व्याचष्टे "न भवति" इति । "ईश्वरेच्छया" इत्यादि "सा हि" इत्यन्तं हेतुत्वेन व्याचष्टे "तत्कारित्वम्" इति । हि—यस्मात्, तत्कारित्वम्—अग्नेः शीतनिवृत्तिकारित्वम्, निजार्थक्रियेति यावत् । भवने—सत्तायाम्, अभवने च—असत्तायाम् ईश्वरेच्छानियतं भवति तदुक्तम्:—

"दैवं चैवात्र पंचमम्"

इति । दैवं हि क्रीडाशीलपरमेश्वरसंबन्धी इच्छाविशेष एव देवस्येदमिति योगबलात् । ईश्वरेच्छाप्रेरिता एव हि भावाः स्वसाध्यामर्थक्रियां संपादयन्ति नतु स्वरूपमात्रेण । अन्यथा भावानां वैफल्यं कदापि न स्यात्, दृश्यते च शीतज्वरेऽग्नेरपि शीतनिवारणे असामर्थ्यम् इत्यलम् । "तेन"इत्यादि श्लोकखण्डं व्याख्यातुं 'तेन' इत्यस्याकांक्षां पूरयति "यत्" इति । एषा—अर्थक्रिया, तस्याः—अर्थक्रियायाः, "अपि" शब्दाद् दूरान्तिकादावपि । इति शब्दः श्लोकव्याख्यासमाप्तौ ॥ १२ ॥

---

1—कार्यकारणतोष्ण—K. S. S.

ननु विमर्शबलादेव यदि वस्तूनां भेदाभेदव्यवस्था तर्हि इदानीं त्रिजगति निवृत्ता भ्रान्तिसंकथाः, शुक्तिकायामपि सत्यरजततैव आपतति 'इदं रजतम्' इति विमृश्यमानत्वात्, ततश्च भ्रान्त्यभावे बाधानुपपत्तेः किमर्थमुक्तं 'मितिर्वस्त्वन्यबाधिता' (२।३।२) इति। व्यभिचाराभावे हि 'अबाधिता' इत्यस्य विशेषणस्य व्यवच्छेद्यं न लभ्यते, इत्याशङ्कां निरस्यति

रजतैकविमर्शेऽपि शुक्तौ न रजतस्थितिः।
उपाधिदेशासंवादाद् द्विचन्द्रेऽपि नभोऽन्यथा ॥ १५ ॥

'इदं रजतं स्थिरं सर्वप्रमातृसाधारणम् अर्थक्रियायोग्यम्' इति इदमंशे रजताद्यंशेषु तत्संमेलनांशे च आभासविमर्शनबलात् न तावत् किंचित् मिथ्यात्वम्। किंतु उत्तरकालं यो भविष्यति

---

अथ त्रयोदशस्य श्लोकस्यावतरणिकां करोति—"ननु" इति।

अत्र टीका :—

ननु भ्रान्तिसंकथा निवृत्ता भवतु ततः किम् इत्यत आह "शुक्ति" इति। आपतति—बलादायाति। कुत इत्यपेक्षायां हेतुमाह "इदम्" इति। ननु ततोऽपि किम् इत्यत आह "ततश्च" इति। "उक्तम्" इति, प्रागिति भावः। अत्र वाक्येन हेतुमाह "व्यभिचार" इति। व्यवच्छेद्यम्—व्यावर्त्यम्, निरस्यति—दूरीकरोति। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'रजतैक' इति।

अत्र टीका :—

श्लोकं व्याख्यातुं प्रक्रियां करोति "इदम्" इति। इदमंशे–इदमित्यस्मिन् भागे, "रजतादि" इति। आदिशब्देन स्थिराद्यंशग्रहणम्। तेषाम्–इदमंशादीनां यः संमेलनांशः सामानाधिकरण्येन योजनरूपो भागः तस्मिन्। किञ्चित्—लेशेनापि, मिथ्यात्वं न भवति इति संबन्धः। प्रकाशविमर्शावेव हि वस्तुस्वरूपव्यवस्थापकाविति भावः। ननु तर्हि सत्यरजतज्ञानात्कोऽस्य भेदः इत्यत आह "किन्तु" इति। किन्तु—पक्षान्तरे, उत्तरकालम्—बाधकाले, यः भविष्यति

विमर्शो 'नेदं रजतं वस्तु स्थिरं प्रमात्रन्तरगम्यमभिमतकार्यकारि' इति तद्विमर्शविमर्शनीयम् यत तत्पूर्वविमर्शकालसमुचितमेव रूपं तत् तस्मिन् पूर्वविमर्शकाले नैवामृश्यते, भाव्यं च तेनामर्शनीयेन।

---

विमर्शः, किंरूपोसौ विमर्श इत्यपेक्षायामाह 'नेदम्'' इति। अभिमतकार्यकारि–रजतकार्यकारि। 'इति'' शब्द औत्तरकालिकविमर्शस्वरूपदर्शनसमाप्तिपरः। तत्–सः विमर्शः विमर्शविमर्शनीयम्–विमर्शेन कृत्वा विचारणीयो भवति। सामान्यत्वेन नपुंसकलिंगेन निर्देशो नायुक्तः "अव्यक्तलिंगं लिंगानाम्" इति। स्फुटमेव हि बाधोत्पत्तेः पूर्वं तस्य ज्ञानस्य सत्यत्वम्, तदुत्पादनानन्तरं तु तद्विमर्शो युक्तः किमयं[1] बाधः सत्योऽन्यथा वेति। ननु कथं तद्विमर्शविमर्शनीयं भवतीत्यत आह "यत्'' इति। यत्-यतः कारणात्, अर्थात् तेन उत्तरविमर्शेन। तस्मिन् पूर्वविमर्शकाले, तत्पूर्वविमर्शकालसमुचितम्–तस्य पूर्वकालविमर्शस्य योग्यम् तत्–प्रसिद्धं रूपम्, नैवावमृश्यते—नैवावसीयते, यतः पूर्वस्माद्विमर्शात् नवीनोऽसौ विमर्शो विरुद्ध उत्पद्यते, ततोऽस्य विमर्शो युक्त एव, तदनुकूलोत्पादे तु नास्य विचारो युक्तः स्यादिति भावः। ननु यद्युत्तरकाले विमर्शो नोत्पद्यते तर्हि तस्य पूर्वस्य सत्यत्वं न व्याहन्यते एवेत्यत आह "भाव्यं च'' इति। तेनामर्शनीयेन—विमर्शनीयत्वेनोक्तेनोत्तरकालविमर्शेन भाव्यं च—अवश्यमेव भाव्यम् रजतभावेन गृहीता शुक्तिर्हि न रजतकार्ये समर्थेति रजतार्थिनस्तत्र प्रवृत्तस्य अवश्यमेव[2] 'नेदं रजतम्'[3] इति विमर्शोऽवश्यभाव्येव। यत्तु अनर्थो तृणादिन्यायेन तत्रोपेक्षायुक्तस्तस्य चर्चैव नेह युक्ता।[4]

---

1—किमयम्—C. अयं being पुल्लिङ्ग cannot stand, because it does not agree with विमर्शविमर्शनीयम्। Some such word as stands for 'why' is required here. We have, therefore, taken किमयम् as a possible scribal mistaks for 'कथम्'

2—The word अवश्य comes twice in this sentence. One of them seems unnecessary.

3—न मेदरजतमिति विमर्शो—C.

4—चर्चैवो नेह युक्तः—C.

तत्रैव काले 'नेदं[1] रजतं अभूत्' इति हि उत्तरः परामर्शो नतु उदित-प्रत्यस्तमितायां शतह्रदायामिव इदानीमेव 'इदं न' इति विमर्शः ; ततो यावता पूर्णेन रूपेण प्रख्यातव्यं विमर्शपर्यन्तं तावत् न प्रख्याति, इत्यपूर्णख्यातिरूपा अख्यातिरेव भ्रान्तितत्त्वम् । तद्वशेन ह्यसद्विपरीतानिर्वाच्यादिख्यातयोऽपि उच्यन्ताम् ।

---

अपूर्णख्यातिरूपत्वमस्य शुक्तिकारजतज्ञानस्य साधयति "तत्रैव" इति । हि-यस्मात्, तत्र-तस्मिन् रजतपरामर्शे, काले-अग्रे "नेदं रजतमभूत् इति"-"इदं रजतं नासीत्" किन्तु मया भ्रमेणैव ज्ञातमित्येवमुत्तरः परामर्शो भवति । नतु उदितप्रत्यस्तमितायाम्-क्षणादुत्पन्नविनष्टायाम्, शतह्रदायामिव-विद्युतीव, "नेदम्" इति—विमर्शो भवति । ततः—ततः कारणात्, यावता पूर्णेन रूपेण-विमर्शपर्यन्तेन "इदं रजतम्" इति विमर्शपर्यन्तम्—सत्यविमर्शपर्यन्तम्, विश्रान्तिपर्यन्तम् इति यावत्, अग्रे स्थितं वस्तु प्रख्यातव्यम्-प्रकटीकरणीयम् आसीत् तावन्न प्रख्याति[2]—न प्रकटीकरोति भ्रान्तिः, इति—अतः कारणात्, अपूर्णख्यातिरूपा—अपूर्णज्ञानरूपा न तु ख्यात्यभावरूपा, अख्यातिः—अज्ञानम्, भ्रान्तितत्त्वम्-भ्रान्तिस्वरूपं भवति । ख्यात्यभावरूपत्वे तु रजतभावेन ज्ञानमप्ययुक्तमेव स्यात् इति भावः । ईषदर्थेऽत्र नञ् नत्वभावे । नन्वन्ये वादिनो भ्रान्तौ असत्ख्यातित्वादिभावेन व्यवहारं कुर्वन्ति इत्यत आह "तद्वशेन" इति" । तद्वशेन-अपूर्णख्यातिवशेन तैस्तैर्वादिभिः असद्विपरीतानिर्वाच्यादिख्यातयः उच्यन्ताम् का हानिः, अपूर्णज्ञानं त्वत्र तावदस्ति शुक्तेःरजततया ग्रहणात् इति भावः । आदिशब्देनात्मख्यातिग्रहणम् । अत्र वादिनो भ्रान्तेः

---

1—नेदं रजतं हि अभूत्—K. S. S.

2—The meaning given by भास्कर to प्रख्यातव्यम् and प्रख्याति, that is to say, प्रकटीकरणीयम् and प्रकटीकरोति, is not the usual meaning in the Sanskrit language. He does so by making भ्रान्ति, the subject of the verb. The sentnce can, however, be interpreted by taking these two words in their ordinary meaning, प्रकाशनीयम् and प्रकाशते । अभिनव himself, in his commentary on kārikās 10 and 11 explains ख्यानम् as प्रथनम् ।

ननु सत्यरूप्यज्ञानमपि अपूर्णख्यातिः । ततस्तर्हि किम् ? । इदम् , अतः सर्वं भ्रान्तिः,—इत्यागच्छेत् । दिष्ट्या दृष्टिरुन्मीलिष्यति[1] आयुष्मतः, मायापदं हि सर्वं भ्रान्तिः, तत्रापि तु स्वप्ने स्वप्न इव

ख्यातिपंचकरूपत्वं पृथक् पृथक् कथयन्ति । तत्र शून्यवादिबौद्धमते असत्ख्यातिः । ते हि असत्तत्र रजतं भातीति कथयन्ति । भाट्टादयस्तु विपरीतख्यातिं कथयन्ति, 'यतस्तेऽन्यदेशकालगतं रजतं तद्विपरीतान्यदेशकालगतत्वेन संस्कारवशेन पुरुषो गृह्णाति' इति कथयन्ति । अनिर्वाच्यख्यातिर्वेदान्तिमते, ते तु सदसद्भ्यामनिर्वचनीयत्वमेव भ्रान्तेः कथयन्ति, भानेनाऽसत्त्वायोगात्[2], हस्तमृज्ञाभावेन सत्त्वायोगादिति । विज्ञानवादिबौद्धमते आत्मख्यातिः, ते हि "आत्मैव भ्रान्तौ बहिर्वस्तुत्वेन भातीति" कथयन्ति तदुक्तम् :—

'यदन्तर्ज्ञेयतत्त्वं तद्बहिर्वदवभासते ।'

इति । सुशिक्षितमते तु अपूर्णख्यातिरूपा अख्यातिः । इयमेव च ग्रन्थकर्तुरिष्टा इत्यलं प्रपंचेन ।

अत्र मध्ये शिष्यः प्रश्नयति "ननु" इति । अपूर्णख्यातिः—अपूर्णख्यातिरूपमेव भवति, परप्रकाशरूपताज्ञानस्यैव पूर्णख्यातित्वादिति भावः । गुरुरपि शिष्यीभूय पृच्छति "ततः" इति । तर्हि—यद्येवं भवेत् , ततः किम् , को दोषः स्यादित्यर्थः । शिष्यो दोषमाविर्भावयति "इदम्" इति । अतः इति—इदम् , आगच्छेत् , इतीदं किम् ! सर्वं भ्रान्तिः—भासमानं समस्तं वस्तुजातं शुक्तिकारूप्यन्यायेन भ्रान्तिर्भवति । गुरुरिष्टापत्तिं सूचयन् शिष्यस्य प्रोत्साहनं करोति "दिष्ट्या" इति । दिष्ट्या, आनन्दे, आयुष्मतः—तव, दृष्टिः—पूर्णदृष्टिः, उन्मीलिष्यति—प्रकटीभविष्यति, सर्वपदार्थविषयायाः भ्रान्तेस्तर्कितत्वात् । "आगच्छेत्" इति तर्करीत्यांगीकारात् "उन्मीलिष्यति" इत्युक्तमन्यथा उन्मीलितेति ब्रूयात् । कथमियं दृष्टिरित्यत आह "माया" इति । मायापदम् मायाविषयो भेदः । मायोर्ध्वे तु पुनरपि सर्वं[3] सत्यभूतमेव इत्यास्तामेतत् । ननु यदि सत्यतया भासमानं पदार्थजातं भ्रम एव तर्हि प्रसिद्धो

1—उन्मिमीलिषति—K. S. S.

2—भाने नामत्वायोगात्—C.

3—सर्वं सर्व्यभूतम्—C.

गण्डे स्फोट इव अपरेयं भ्रान्तिरुच्यते, अनुवृत्त्युचितस्यापि विमर्श-स्यास्थैर्यात्। अतश्च पृथक् इदन्ताद्याभासेषु न काचन भ्रान्तिः, मेलनांशे तु विमर्शानुवृत्तिनिर्मूलनं विमर्शोदयकालादेव आरभ्य बाधकेन क्रियते, इति तत्रैव भ्रान्तिभावः,—इति सिद्धम्। रजतस्य शुक्तिकया सह यद्यपि एको विमर्शः तथापि शुक्तौ रजतस्य तेन ज्ञानेन

---

भ्रमः किमस्ति इत्यत आह "तत्रापि इति। अपरा" भ्रान्तित्वेन प्रसिद्धा। ननु प्रसिद्धाया भ्रान्तेर्भ्रान्तित्वं युक्तमेव सत्यरूपज्ञानस्य कथं भ्रान्तित्वं युक्तम् इत्यत आह "अनुवृत्ति" इति। अनुवृत्तौ उचितः अनुवृत्त्युचितः तस्य, अपि शब्देन प्रसिद्धभ्रान्तिपरामर्शस्यास्थैर्यं न काप्यसंभावनेति द्योतितम्। अनुवृत्त्यु-चितस्य परामर्शस्यास्थैर्यं च पराहंभावपरामर्शरूपताकृतमेव ज्ञेयम्, पर्यन्ते हि सर्वमहंपरामर्शविषयत्वेनव योगिनां स्फुरति, अन्यथा तेषामप्यज्ञानित्वमेव। तदुक्तम् :—

"एतदन्धकारं यद् भावेषु प्रकाशमानतया स्वात्मानतिरिक्तेष्वपि भवति अनात्माभिमानोऽयम्"

इति। उक्तप्रक्रियया फलितं स्वाभिप्रायं कथयति "अतश्च" इति। पृथक्-स्वस्वविषये, न काचन, न कापीत्यर्थः। इदमिति हि सत्यतयाऽग्रस्थवस्तुविष-यम्, रजतमिति तु स्मर्यमाणरजतविषयम्, अन्यथा दृष्टरजतस्यापि शुक्तौ रजतभ्रमापत्तेः। एवं स्थिरत्वादेरपि सत्यत्वं योज्यम्। ननु तर्हि मिथ्यात्वं कुत्रांशे भवति इत्यत आह "मेलनांशे तु" इति। मेलनांशे यदेवेदं तदेव स्थिरत्वादि-गुणयुक्तं रजतमिति समानाधिकणतया स्थापनरूपे भागे तु, विमर्शस्य—पूर्वविमर्शस्य या अनुवृत्तिः तस्याः निर्मूलनम्, विमर्शोदयकालात्–पूर्वविम-र्शोदयसमयात्, बाधकेन–उत्तरपरामर्शेन क्रियते इति, नेदं रजतमभूदित्येव-मुत्पादादिति भावः। इति–अतो हेतोः, तत्रैव—मेलनांशे एव, भ्रान्तिभावः—भ्रमत्वम्। उक्तप्रक्रियावष्टंभेन सूत्रे योजनां करोति "रजतस्य" इति। तत्रापि. प्रथमं "रजतैकविमर्शेऽपि" इति समस्तं पदं व्याचष्टे "रजतस्य' इति। "शुक्तिकया सह" इति अत्रानुरोधेनाध्याहृतम्। अथवा उक्तार्थानामप्रयोग इति वचनेनैतद्ग्रहणम्। "अपि" शब्दं व्याचष्टे "तथापि" इति। "शुक्तौ-इति" निगदव्याख्यातम्। "रजतस्थितिः" इति व्याचष्टे "रजतस्य" इति।

या दत्ता स्थितिः 'इदं रजतम्' इति, सा न, यत उपाधिरूपो यो देशः 'अत्र रजतम्' इति रजतच्छायाम् आत्मनोपरञ्जयन् शुक्तिदेशः, तस्यासंवादात्, सम्यग्विमर्शानुवृत्त्याभासनं संवादनम् 'वदिः' अत्र भासनविषयः, तस्याभावात् कारणात ।

---

तेन ज्ञानेन-भ्रान्तिज्ञानेन, स्थितिमनुकृत्य दर्शयति "इदं रजतम्" इति । "या" इत्यस्याकांक्षां पूरयति "सा" इति । "न" इत्यपि निगदव्याख्यातम्, न भवतीत्यर्थः । कुत इत्यपेक्षायाम् "उपाधिदेशासंवादात्" इति हेतुत्वेन योजयितुं व्याचष्टे "यतः" इत्यादि । उपाधिरूपः—विशेषणरूपः "यः" "देश" इति पदं व्याचष्टे "अत्र" इति । अत्र रजतम् इति—अनेन प्रकारेण, आत्मना—आधारभावेन स्थितेन इदंशब्दवाच्येन निजस्वरूपेण, रजतच्छायाम्—रजतरचनाम्, उपरञ्जयन्-उपरागयुक्तां कुर्वन्, स्वस्वरूपाधेयत्वावच्छिन्नत्वेन भासयन् इतियावत्, अन्यथा उपाधित्वायोगात् इति भावः । शुक्तिदेशः—शुक्तिस्वरूपो देशः । "यः" इत्यस्याकांक्षां पूरयति "तस्य" इति । तस्य—शुक्तिदेशस्य, "असंवादात्" इति व्याख्यास्यन् "सम्" शब्दं व्याचष्टे "सम्यक्" इति । अत्रापि पर्यायमाह "विमर्श" इति । विमर्शानुवृत्त्या-अत्र रजतमिति विमर्शानुवर्तनेन । "वाद" इति पदं व्याचष्टे "भासनम्" इति । भासनम्, उपाधिभावेन स्फुरणमित्यर्थः । "संवाद" इति संकलय्य व्याचष्टे "संवादनम्" इति । भावघञन्तस्य भावल्युडन्तेनेयं व्याख्या । ननु कथमत्र भासनमर्थः इत्यत आह "वदिः" इति । "यतः" इति पदं युक्तत्वेनात्रैव योजनीयम् । यतः कारणात्, वदिः—वदिरिति धातुः । अत्र—अस्मिन्विषये, भासनविषयः—भासनवाची भवति । अनेकार्थत्वात् धातूनामिति भावः । अथवा यतः इत्यस्य स्थाने कुतः इति पाठः । तथा च न कापि कष्टकल्पना । व्यस्तत्वसमस्तत्वाभ्यां व्याख्यातस्य नञः पञ्चम्याश्च योजनार्थं परामर्शं करोति "तस्य" इति । तस्य—उपाधिदेशसंवादस्य, अभावात्-असत्त्वात् । पञ्चम्या द्योतितं हेतुत्वं स्फुटं कथयति "कारणात्" इति । यत उत्तरकाले रजतार्थित्वे सति प्रवृत्त्यनन्तरं सा शुक्तिः रजतत्वाधारत्वेन न स्फुरति, ततः इदं रजतमिति पूर्वं रजतस्य शुक्त्या सह एकस्मिन्नपि विमर्शे सति शुक्तौ रजतस्थितिर्नभवतीति पिण्डार्थः । रजतस्य शुक्त्या सहैकविमर्शः रजतैकविमर्शः, रजतस्य भ्रमज्ञानेन दत्ता

नन्वेवं भवतु शुक्तिकारजते, द्विचन्द्रज्ञाने तु 'द्वौ चन्द्रौ' इत्याभासे शुक्तिकयेव मेलनं न केनचित्साकमाभासते यत्र बाधः स्यात्, एकाभासांशे च न बाधः,—इत्युक्तं भवतैव। क एतदाह—मेलनं न केनचित्सह इति। एवं हि सति स्वालक्षण्येन नियतदेशकालतया कथमाभासः,? तद्देशकालाभ्यां सह तत्रापि अस्ति मेलनाभासो यद्विमर्शोऽनुविवृत्सुर्निरुध्यते[1], द्वित्वाभासचन्द्राभासयोरपि मेलनाभासे

स्थितिः रजतस्थितिरिति विग्रहः। उपाधिपदप्रयोगः पार्यन्तिकप्रतीतिमपेक्ष्य कृतः। आपाते तस्य रजतत्वेन स्फुरणात्। एतेन संवादादित्यन्तं व्याख्या संपन्ना।

"द्विचन्द्रेऽपि" इत्यादिश्लोकशेषं व्याख्यातुमवतरणिकां करोति "ननु" इति। एवम्. अयं न्याय इत्यर्थः, "द्वौ चन्द्रौ" इत्याभासे, एतदाभासरूपे इत्यर्थः। शुक्तिकयेव—रजतस्य शुक्तिकया सहेवेत्यर्थः। केनचित् साकम्, द्वित्वस्य केनापि सहेत्यर्थः। यत्र—यस्मिन्मेलने, एकस्याभासः-एकाभासः, तद्रूपो यः अंशस्तस्मिन्। गुरुः श्लोकखण्डं व्याख्यातुं प्रक्रियां कुर्वन् उत्तरं कथयति "क एतत्" इति। एतच्छन्दाकांक्षां पूरयति "मेलनम्" इति। "इति" शब्दो वाक्यसमाप्तौ। मेलनाभावायोग्यतां समर्थयति "एवं हि" इति। हि-यस्मात्, एवम्-मेलनाभावे, सति, नियतदेशकालतया-इदानीमत्र नभसि "द्वौ चन्द्रौ" इति नियतदेशकालमेलनया सिद्धेन स्वालक्षण्येनाभासः कथं स्यात्, मेलनारूपाया योजनाया अभावान्न स्यादित्यर्थः। सामन्यस्य हि देशादियोजनेनैव स्वलक्षणतेति बहुवारमुक्तम् इति भावः। फलितमाह "तत्" इति। तत्—ततः कारणात्, तत्रापि-द्विचन्द्रज्ञानेऽपि, देशकालाभ्यां सह मेलनाभासः[2]—मेलनम् अस्ति, किं बाधकेनेति शेषः। बाधकेन कर्त्रा। यत्—मेलनम् अनुवर्तितुमिच्छुः अनुविवृत्सुः सन् विमर्शः कर्म निरुध्यते नात्र नभसीदानीं द्वौ चन्द्राविति निरोधविषयतां नीयते, प्रतिहन्यते इति यावत्। नन्वेतेन द्विचन्द्राभासस्य स्वरूपे न कोऽपि निरोधः संपन्नः। देशकालमेलनामात्रत्वेनैव तस्य स्थितत्वादित्यत आह "द्वित्व" इति। वाच्यम्—अवश्यं वक्तव्यम्। नहि देशकालाभ्यां निष्कृष्टस्य परिमितवस्तुनः सत्ता दृश्यते इति भावः। एतद-

1—निरूप्यते—K. S. S.

2—मेलनाभासः अस्ति मेलनं किं—C.

विमर्शानुवृत्तिव्यावर्तनं वाच्यम्। तदेतदाह—द्विरूपे चन्द्रेऽपि, न केवलं रजत एव। 'नभः' इति देशविशेषः कश्चित्। 'अन्यथा' इति द्विचन्द्रावरुद्धो योविमृष्टः स न तथा,—इति बाधकेन उन्मूलितप्राच्यविमर्शानुवृत्तिकः क्रियते,—इति। एवमाभासस्तन्मेलनं च नियमानुप्राणितम्—इत्येतावदेव प्रमेयम्। एतान्येव आगमे तत्त्वानि वक्ष्यन्ते।

वस्तु तत्त्वं प्रमेयम्—इति पर्याया[1]। तथा च काठिन्याभास इति पृथिवी, लोहिताभास इति रूपं तेजश्च, मेलनाभासो रजः, संनिवेशस्तु नियतिरूपः, नियतिर्हि नियमः, स च अभावप्राणः, अभावस्फुरणमेव

वर्त्मेन सूत्रखण्डं व्याख्यातुमाह "तदेतत्" इति। तदेतत्—समनन्तरोक्तं वस्तु, "आह" इति, सूत्रखण्डेनेति शेषः, आहेति निराकांक्षीकर्तुं सूत्रखण्डमेव व्याचष्टे "द्विरूपे" इति। एतेन द्विरूपश्चन्द्रः—द्विचन्द्रस्तस्मिन् इति विग्रहः सूचितः। "नभः" इति व्याख्यातुमुपन्यस्यति "नभः इति" इति। "देशविशेषः"इति, न तु न किञ्चिद्रूपः। अन्यथा चक्ष्याद्याधारत्वायोगादिति भावः। "अन्यथा" इति व्याचष्टे "द्विचन्द्र" इति। यः–नभोदेशः, द्विचन्द्रावरुद्धः–द्विरूपचन्द्रावरुद्धः, विमृष्टः–पूर्वविमर्शेन विमर्शविषयतां नीतः, सः तथा–द्विचन्द्रावरुद्धः न भवति, इति बाधकेन—एवरूपेण बाधकेन, उन्मूलिता प्राच्यविमर्शस्यानुवृत्तिर्यस्य तादृशः क्रियते। "इति" शब्दः व्याख्यासमाप्तौ। एवमत्र वाक्यखण्डे योजना। नभः अपि कर्तृ द्विचन्द्रेऽन्यथा भवति उक्तन्यायादिति भावः। अत्र प्रमाणनिर्णयानन्तरं प्रमेयं निर्णेतुं फलितं सिद्धान्तमुपसंहाररीत्या कथयति "एवम्" इति। तन्मेलनम्—आभासमेलनम्। नियमानुप्राणितम्-नियतिकृतनियमव्यवस्थापितम्। प्रमेयस्यैव तत्त्वभाव इत्याह "एतान्येव" इति। आगमे–वक्ष्यमाणे आगमकाण्डे। ननु कथमागमे प्रमेयस्य तत्त्वशब्देन निर्देश इत्यत आह "वस्तु" इति। पर्यायाः—पर्यायशब्दा इत्यर्थः। घटदृष्टान्तेन सर्वस्य प्रमेयजातस्य सर्वतत्त्वरूपत्वं कथयति "तथाच" इति। काठिन्याभासः—घटे स्फुटं स्थितः काठिन्यरूप आभासः, रजः–रागतत्वं रागस्य मेलनरूपत्वात्, सन्निवेशः–रचना, नियतिरूपः–नियतितत्त्वरूपः। ननु कथं सन्निवेशस्य नियतित्वमित्यत आह "नियतिः" इति। नियमः–परमेश्वरकृतो नियमः, स च–नियमश्च, अभावप्राणः–अभावदत्तसत्ताकः, तादात्म्याभावेनैव हि

1—पर्यायः—K. S. S.

च पृथिव्याभासस्थ विचित्रतया चकासत् पृथुबुध्नोदराकारता, भेदाभासश्च माया, तत्पृष्ठे सत्यप्रकाशाभासश्च शिवतत्त्वम्,—इत्यास्तां तावत् । अग्रे भविष्यति एतत् । सर्वथा तावदत्र प्रमेये भगवत एव भेदने च अभेदने च स्वातन्त्र्यं घटगताभासभेदाभेददृष्टिरेव च परमार्थाद्वयदृष्टिप्रवेशे उपायः समवलम्बनीयः, न तु व्यवहारोऽपि अयं परमेश्वरस्वरूपानुप्रवेशविरोधी, इति प्रतिपादितम् ॥ १३ ॥

---

भावः स्वस्वरूपे नियतो भवति, पृथिव्याभासस्याभावस्फुरणमेव च विचित्रतया–वैचित्र्येण–चकासत्–भासमानमेव सत्, पृथुबुध्नादराकारता–एतद्रूपः घटनियतः सन्निवेशः भवति, मृद्धि स्वरूपं जहती घटसन्निवेशं गृह्णाति, अन्यथा घटस्य मृदा सह संकीर्णताऽऽपतेत्, भेदाभासश्च–घटगतः स्वगतभेदः, माया–मायातत्त्वं भवति, तत्पृष्ठे—भेदाभासरूपे मायापृष्ठे, सत्यप्रकाशाभासश्च–घटो भाति इति भानकर्तृस्वरूप आभासश्च, शिवतत्त्वं भवति, अत्र च सर्वेषामेव तत्त्वानां योजनं कार्यत्वेन[1] ज्ञात्वाह आस्ताम् इति । अग्रे इति, आगमकाण्डे, एतत्—प्रतिवस्तु सर्वतत्त्वयोजनम् । सिद्धान्तं कथयति "सर्वथा" इति अत्र—भासमानघटादिरूपे, भेदने—भेदकरणे, भेदेन भासने इति यावत् । प्रकाशवशेनैव हि भेदाभेदव्यवस्थापनं भवति । एतदवष्टंभेन मोक्षमार्गं प्रति नवीनं मार्गं दर्शयति "घटगत" इति । घटगतो य आभासभेदः—घटादिमायान्तसकलतत्त्वाभासरूपः भेदः, तथाऽभेदः—शिवतत्त्वान्तरूपोऽभेदः, तयोर्दृष्टिः, सा एव[2] च परमार्थाद्वयरूपा या दृष्टिस्तस्यां यः प्रवेशस्तस्मिन्, उपायः समवलंबनीयः–आश्रयणीयः । नत्वयं व्यवहारोऽपि–घटादिविषयो व्यवहारोऽपि, परमेश्वरस्वरूपे योऽनुप्रवेशस्तस्य विरोधी भवति, तद्द्वारेणापि तत्स्वरूपपर्येषणारूपेण तत्सारभूतपरमेश्वरतत्त्वलाभात् । "अपि" शब्देन समाधिकृतपरमेश्वरस्वरूपानुप्रवेशहेतुना सहास्य समुच्चयो द्योत्यते । वेदान्तादिनिर्णीताद्वयाभासस्य बाह्यव्यवहारं प्रत्युपेयत्वाभावमपेक्ष्य परमार्थपदग्रहणम् । न चैतावता पदार्थापेक्षाग्रस्तैरपि अयमभिमानो धार्यः । पदार्थेषु ममतारहितानां प्रवाहागतपदार्थव्यवहारे पदार्थानपि शिवभावेन गृह्णतामेवात्राधिकारात् । ममताराहित्ये च स्वमन एव साक्षितया ग्राह्यमन्यथा स्ववञ्चकतापत्तेरित्यलम् ॥१३॥

---

1—योजनं कार्यम् । त्वेन ज्ञात्वा—C. 2—स एव च—C.

एतदेव स्फुटयन् सकलप्रमेयसिद्धिः परमेश्वर एव आयत्ता, इति निरूपयति।

गुणैः शब्दादिभिर्भेदो जात्यादिभिरभिन्नता।
भावानामित्थमेकत्र प्रमातर्युपपद्यते ॥ १४ ॥

इह अनुवृत्तं व्यावृत्तं च चकासद्वस्तु कतरेण वपुषा न सत्यमुच्यताम् उभयत्रापि बाधकाभावात्, सत्यतो हि यदि बाधक एव एकतरस्य स्यात् तत्तदुदये स एव भागः पुनरुन्मज्जनसहिष्णुतारहितो विद्युद्विलायं विलीयेत; न चैवम्, अतएव भेदाभेदयोर्विरोधं दुःसमर्थम-

---

अथ चतुर्दशस्य श्लोकस्यावतरणिकां करोति "एतदेव" इति।

अत्र टीका:—

श्लोकं व्याख्यातुं प्रक्रियां करोति "इह" इति। अनुवृत्तम्–सामान्याकारद्वारेण, "व्यावृत्तम्" स्वलक्षणद्वारेण, चकासत्–भासमानम्, वपुषा–स्वरूपेण "उच्यताम्" इति, अपि तु सर्वेण वपुषा सत्यमुच्यतामित्यर्थः। अत्र हेतुमाह "उभयत्रापि" इति। उभयत्र, अनुवृत्ते भागे व्यावृत्ते च भागे इत्यर्थः। नन्वत्र[1] बाधकोऽपि भवतु। का हानिरित्यत आह "सत्यतः" इति। सत्यतः–परमार्थेन, एकतरत्र, व्यावृत्तानुवृत्तभागयोर्मध्यादेकत्रेत्यर्थः। तत्-तदा, तदुदये–बाधकोदये, स एव भागः–बाधविषयो भागः, पौर्वकालिकमुन्मज्जनमपेक्ष्य "पुनः" शब्दप्रयोगः। विद्युद्विलायम् विलीयेत, विद्युदिव विलीयेतेत्यर्थः। उपमाने कर्मणि च इति णमुल्, न चैवम्, सत्यतो बाधक एकतरत्र न चास्तीत्यर्थः। भेदाभेदयोः–अनुवृत्त[2]भागगतस्य भेदस्याभेदस्य च, फलतः एकवस्तुगतयोर्भेदाभेदयोरित्यर्थः। दुःसमर्थम्–समर्थयितुमशक्यम्, एकैः–

---

1—नन्वत्राबाधकोऽपि—C.

2—अनुवृत्तभागगतस्य agrees only with अभेदस्य। The word व्यावृत्तभागगतस्य agreeing with भेदस्य is required here

भिमन्यमानैरेकैरविद्यात्वेन अनिर्वाच्यत्वम्, अपरैश्च आभासलग्नतया सांवृतत्वम् अभिदधद्भिः आत्मा परश्च वञ्चितः। संवेदनविश्रान्तं तु[1] द्वयमपि भाति संवेदनस्य स्वातन्त्र्यात्। सर्वस्य हि तिरश्चोऽपि एतत् स्वसंवेदनसिद्धं—यत संविदन्तर्विश्रान्तमेकतामापाद्यमानं जलज्वलनमपि अविरुद्धम्, तत एव उक्तम्

'अत एव यथाभीष्टसमुल्लेखा............' (१।६।११)

---

वेदान्तिभिः, अविद्यात्वेन—लक्षणयाऽविद्याकार्यत्वेन, अनिर्वाच्यत्वम्—सत्तासत्ताभ्यामनिर्वचनीयभावम्। वेदान्तिमते हि अविद्या तत्कार्यं चानिर्वचनीयमेव, अपरैः-बौद्धैः, आभासलग्नतया-आभासमात्रविश्रान्ततया, वैकल्पिकत्वेन बहिरसत्त्वादिति भावः, सांवृतत्वम्, संवृतिसिद्धत्वम्, अभिदधद्भिः-कथयद्भिः। वञ्चितः इति, मूढत्वेनेति शेषः। मूढ एव ह्यात्मानं परं[2] च वञ्चयति, यस्तु परमेव वञ्चयति स खलस्ततोऽप्यपरपदस्थः। ननु तर्हि कीदृशं तद्द्वयमस्ति इत्यत आह "संवेदन" इति। संवेदने—प्रकाशे तदव्यभिचारिणि विमर्शे च विश्रान्तम्, संवेदनविश्रान्तम्—तेन सत्यतया निर्णीतमित्यर्थः। ननु कथं संवेदनं स्वस्मिन् विरुद्धयोर्विश्रान्तिं दधातीत्यत आह "संवेदनस्य" इति। न हि स्वतन्त्रस्य कुतश्चित्प्रतीघातः स्वतन्त्रताहानेरिति भावः। अत्रापि वाक्ये हेतुं कथयति "सर्वस्य" इति। हि यस्मात्, सर्वस्य—समस्तस्य चेतनवर्गस्य, तिरश्चोपि—तन्मध्येऽतिजडस्य पशोरपि, एतत् स्वसंवेदनसिद्धं भवति। एतत् किम्? जलज्वलनमपि—विरुद्धतया प्रसिद्धं जलाग्न्योर्युगलकमपि, संविदन्तर्विश्रान्तं सत् अविरुद्धम् यत् भवति, बहिरिव परस्परं बाध्यबाधकत्वाभावात्। पूर्वोक्तमत्र निदर्शनत्वेन स्मारयति "तत एव" इति।[3] किमुक्तमित्यपेक्षायां कारिकामेकदेशेन दर्शयति "अत एव"

---

1—सर्वस्य तिरश्चोऽपि—K. S. S.

2—मूढ एव हि आत्मानं च वंचयति—C·

3—किमुक्तमित्यपेक्षायां श्लोकं स्तोकेन निर्दिशति अतएव इति। किमुक्तमित्यपेक्षायां कारिकामेकदेशेन दर्शयति अतएव इति। C.

The two statements, though slightly different in wording, mean the same thing. Hence one has been omitted.

इति । अतश्च गुणैरुपाधिरूपैरुपाधितया[1] विवक्षितैः शब्दादिभिर्वा दण्डादिभिरपि वा यो भेदः, जातिवशात् सादृश्यात् भेदाग्रहणाद्वा, यश्च अभेदो भावानाम् इत्थमित्युक्तनीत्या 'क्रियासंबन्ध' ( २।२।१ ) इत्यतः प्रभृति निरूपितः, स एकत्रप्रमातरि सकलप्रमाप्रमाणसंयोजनवियोजनादिविचित्रासंख्यकृत्यप्रपञ्चोचितस्वातन्त्र्ये भगवत्यस्मदीयहृदयैकान्तशायिनि शिवशब्दव्यपदेश्ये सति उपपद्यते, नान्यथा ।

---

इति । उक्तप्रक्रियावष्टंभेन श्लोकं व्याचष्टे "अतश्च" इति । "**गुणैः**" इति पदं व्याचष्टे "उपाधिरूपैः" इति । अत्रापि व्याख्यां करोति "उपाधितया" इति । गुणो हि विशेषक एवेति भावः । "**आदि**" शब्दगृहीतं वस्तु कथयति "दण्डादिभिरपि" इति । "शब्दादिभिः" इति, आदिशब्देनरूपादिग्रहणम् । "दण्डादिभिः" इत्यादिशब्देन तु कुन्तादिग्रहणम् । सूत्रस्थस्यैकस्य आदि शब्दस्य रूपादि कुन्तादि च ग्राह्यमिति न कोऽपि विरोधः । **जात्यादिभिरभिन्नता** इति व्याचष्टे "जाति" इति । अत्राप्यादिशब्दग्राह्यं वस्तु कथयति "सादृश्यात्" इत्यादि । "**भावानाम्**" इति निगदव्याख्यातम् । "**इत्थम्**" इति पदं व्याचष्टे "उक्तनीत्या" इति । "निरूपितः" इत्यस्य क्रियात्वेनाध्याहारः । यच्छब्दद्वयस्याकांक्षां पूरयति "सः" इति । सः—भेदः अभेदश्च, "**एकत्र प्रमातरि**" इति व्याचष्टे "सकल" इति । "वियोजनादि" इति । आदिशब्देन विश्रान्तिदानादेर्ग्रहणम् । स्वतन्त्रोऽप्यशक्तः अकिञ्चित्कर एव इत्यत आह "भगवति" इति । तादृशस्य बहिःस्थस्य नान्तर्गतेषु संवेदनेषु प्रेरकत्वं युक्तमित्यत आह "अस्मदीय" इति । अस्मदीये हृदये एकान्तेन—निश्चयेन शेते सारतया प्रेरकतया च तिष्ठतीति तादृशे । "न अन्यथा" इति । तस्मिन् असति न युज्यते इत्यर्थः । भेदोपि हि तावद्धर्मिप्रतियोगिद्वयवशेनैव सिद्धिं लभते "अयमस्माद् भिन्नः" इति । तत्र प्रथमानिर्दिष्टस्य धर्मिणः पञ्चमीनिर्दिष्टस्य प्रतियोगिनस्तद्द्वयलब्धसिद्धे र्भेदस्य च भिन्नभिन्नस्वविषयज्ञानमात्रेण ग्राह्यस्य यद्येकः ज्ञानत्रयपिण्डात्मा तत्सारभूतो वा योजको न स्यात्, कथं भेदधर्मग्रहणं सिद्ध्येत्, अभेदेन ग्रहे तु योजकापेक्षाऽवश्यसाध्यैवेति किं तत्साधनेने-

---

1—विशेषाधायितया K. S. S. This reading agrees bett er with भास्कर's note गुणो हि विशेष एव इति भावः ।

विशेषणान्येव च भेदकानि—इति किमन्त्यैरन्यैर्विशेषैः अयं स पर-[1]माणुर्य एतद्देशादिविशिष्टघटारम्भणकालस्थितपश्चात्तनसंघटितद्व्यणु-[2]कारम्भकाले पूर्वं मिलितः। अयं स आत्मा, यः पुरा स्वर्ग-सदने सुरयोषितमिमामित्थं परिरब्धवान्,—इति इयतैव योगिसर्व-

त्यत्वम्। ननु तर्कशास्त्रेष्वन्त्यविशेषैरेव[3] नित्यद्रव्याणां भेद उक्तः, त्वया कथं सामान्येन शब्दादीनामेव भेदकत्वमुक्तमित्यत आह "विशेषणान्येव च" इति। अन्यैः—शब्दादिभ्यो भिन्नैः, गुणपदार्थाद्भेदेनोक्तत्वादिति भावः। अन्त्यैः विशेषैः, अन्त्यविशेषैरित्यर्थः। ननु योगिनां कथमतिसूक्ष्मेषु परमाण्वादिषु स्थूलैः शब्दादिभिर्भेदज्ञानं संभवेत् इत्यत आह "अयम्" इति। अयं सः परमाणुः भवति। सः कः? यः एतद्देशादिविशिष्टः—एतद्देशकालावच्छिन्नः घटः तस्य य आरंभकालस्तस्मिन् स्थितं यत् पश्चात्तनम्—पश्चाद्भवम् संघटितम्—मिलितम् द्व्यणुकं तस्य य आरंभकालस्तस्मिन्। मिलितः—अन्येनाणुना सह संयुक्तः। "पूर्वम्" इति। द्वितीयाण्वपेक्षयेतिशेषः। इयतैव—संयोगाख्यगुणमात्रेणैव, तत्र परमाणोः परमाण्वन्तरेण संयोगः, आत्मनस्तु सुरयोषिता सह। ननु देहस्य सुरयोषिता सह संयोगः, नत्वात्मनः[4] इति चेत्, सत्यम्, स्थूलदृष्टिभिस्तार्किकैः सह संवादे नेदृशीनां सूक्ष्मेक्षिकाणामवसरः, परमार्थविचारे हि शिवमये सर्वजगति कः सर्वज्ञयोगिविभागः, कश्च नित्यानित्यद्रव्यविभागः, को वा अन्त्यविशेषविषयो निर्णयः।

"यादृशो यक्षस्तादृशो बलिः"

इति नीतिमाश्रित्य शिष्यानुकंपया यत्र तत्र प्रवृत्तेषु महाचार्येषु चोद्यचुञ्चुभावो[5] न युक्त एव। अथवा महाद्वैते सर्वसाधनं सर्वनिराकरणं च संभवत्सहमेवान्यथाऽद्वैताभासतापातादित्यलम्। अत्र बहुवक्तव्यतामाशंक्याह

1—अयं च परमाणुः—K. S. S.

2—एतद्देशादिविशिष्टघटारंभणकाले पश्चात्तन—K, S. S.

3—अन्यविशेषैः—C.

4—नात्मना—C.

5—चोद्यचञ्चुभावः—C.

ज्ञादीनां सिद्धः परमाण्वात्मादिषु भेदावभासः,—इत्यलमवान्तरेण। सिद्धं तावत् भेदाभेदरूपं प्रमेयतत्त्वम् एकप्रमातृविश्रान्त्या निःशङ्कतां श्रयति, इति ॥ १४ ॥

नन्वेवंभूतो यद्ययं प्रमाता तत्रव तर्हि प्रमाणोपन्यासे प्रयतनीयं न प्रमेये, यदाह 'प्रधाने हि यत्नः फलवान्' इति। तदेतदाशङ्क्य प्रथमोपक्षिप्तमेव प्रमेयं स्मारयत्याचार्यः। तथा हि।

'अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः।' (१।१।२) इति। वस्तुस्तु तदेवेदानीं ज्ञाते प्रमाणस्वरूपे परमेश्वरस्वरूपे च निर्वाहणार्हम्, एवं भूतं हि प्रमाणं तदेवंभूते हि भगवति कथं क्रमताम्, इति। तदेतत स्फुटयितुमाहः—

**विश्ववैचित्र्यचित्रस्य समभित्तितलोपमे।**
**विरुद्धाभावसंस्पर्शे परमार्थसतीश्वरे ॥१५॥**

---

"अलम्" इति। अवान्तरेण—अप्रकृतेन। इह यथा तथा प्रमात्रैक्यमात्रस्यैव प्रकृतत्वादिति भावः। फलितं सिद्धान्तं सिद्धतया कथयति "भेदाभेदरूपम्" इति। तत्र सामान्यभावेनाभेदरूपम्। स्वलक्षणभावेन भेदरूपम् इति विभागः। एतेन पूर्वाधिकारेण सहास्याधिकारस्यैकाभिधेयत्वं सूचितम् ॥१४॥

अथ पंचदशस्य षोडशस्य च श्लोकस्यावतरणिकां करोति "नन्वेवंभूतः" इति।

अत्र टीकाः—

[1]प्रपंचेन कथनमुपक्रमते "तथाहि" इति। यद्वस्तु भवति, पूर्वप्रतिज्ञातं भवति, तदेवेदानीं प्रमाणस्वरूपे ज्ञाते सति निर्वाहणार्हं भवति। इति किमिति? अजड़ात्मा इत्यादि योजना। वस्तु—निर्णेयं वस्तु, निर्वाहणार्हम्, निर्वाहणयोग्यम्, उपसंहारयोग्यमिति यावत्। निर्वाहणमेवानुकृत्य दर्शयति "एवंभूतम्" इति। तत्—प्रोक्तरूपम्, नवनवोदयशीलमिति यावत्। एवंभूते—सर्वज्ञानैक्यरूपे, क्रमताम्, ग्रहणे योग्यं भवेत् इत्यर्थः। स्फुटयितुम्—स्फुटीकर्तुम्, आह—कथयति। एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे "विश्व" इति।

---

1—नन्वेवंभूत इति। अत्र प्रपंचेन कथनमुपक्रमते। C.

प्रमातरि पुराणे तु सर्वदा भातविग्रहे।
किं प्रमाणं नवाभासः सर्वप्रमितिभागिनि ॥१६॥

परिमितप्रमातृलग्नो नवनवाभासः प्रमेयोन्मुखः प्रमाणम् इत्युक्तम्। तत्र प्रकाशवपुषि प्रकाशमात्रस्वभावे पूर्वसिद्धे कः प्रमाणस्योपयोगः संभावना वा। तथा च पूर्वसिद्धे प्रमातरि सति तल्लग्नप्रकाशान्तर्भूतविमर्शमयीम् अभूतपूर्वां प्रमेयस्य सिद्धिं वितरति प्रमाणम्। प्रमातुश्चासिद्धस्य[1] किं लग्ना सिद्धिरस्तु। विश्ववैचित्र्यं हि तत्र परमेश्वरे प्रकाशैकात्मनि सति भाति यथा चित्रं भित्तौ। यदि हि नीलपीतादिकं पृथगेव परामृश्यते तदा स्वात्मविश्रान्तेषु तेषु तथैव[2] अन्योन्यविषये

अत्र टीकाः—

श्लोकं व्याख्यातुं प्रक्रियां कुर्वन् उपयोगित्वेन पूर्वमुक्तं प्रमाणलक्षणमनुस्मारयति "परिमित" इति। परिमितप्रमातृलग्नः—ग्राहकविश्रान्तः, आभासः—ज्ञानम्, उक्तम् इति। "इदमेतादृग्" इत्यत्र श्लोके, तत्र—एवं प्रमाणस्वरूपे सति। "प्रकाशवपुषि" इति स्वयमेव व्याचष्टे "प्रकाशमात्र" इति। उपयोगस्यात्यन्तमयोग्यतां ज्ञात्वाह "संभावना वा" इति। एतदेव समर्थयितुमाह "तथा च" इति। सति—सत्तां भजति, तल्लग्नः—प्रमातृविश्रान्तो यः प्रकाशस्तस्मिन् अन्तर्भूतो यो विमर्शस्तन्मयीम्, प्रमारूपामिति यावत्। वितरति—दधाति, करोतीति यावत्। प्रमाणनिष्ठाम् अनधिगतार्थाधिगन्तृतामपेक्ष्य "अभूतपूर्वाम्" इत्युक्तम्। "असिद्धस्य" इति। तत्रापि प्रमाणोपयोगांगीकारे प्रमाणप्रवृत्तेः पूर्वसिद्धिरहितस्येत्यर्थः। किं लग्ना—कुत्रविश्रान्ता सकलविश्रान्तिधामस्तस्य स्वविषयज्ञानविश्रान्तिस्थानत्वांगीकारे आत्माश्रयादिपातात्। अन्यस्य विश्रान्तिस्थानस्यानुपलंभात् इति भावः। ननु विश्वं यत्र विश्राम्यति तत्रैव तदपि विश्राम्यत्वित्यत आह "विश्व" इति। तत्र—साधनीयत्वेन स्थिते, कथं भातीत्यपेक्षायामाह "यथा" इति, यथा चित्रं भित्तौ भाति तथेत्यर्थः। ननु स्वप्रधानमेव विश्वं भवतु, तथा चैतत्सिद्धिस्तत्रैव विश्राम्यतीत्यत आह "यदि हि" इति। पृथगेव—स्वप्रधानत्वेन भिन्नमेव, न तु प्रमातृविश्रान्ततया। यदीत्यस्याकांक्षां पूरयति "तदा" इति। तेषु—नीलपीतादिकेषु, तथैव—

1—चासिद्धस्य—K. S. S. 2—तथा वा—K. S. S.

जडान्धबधिरकल्पानि ज्ञानानि स्वविषयमात्रनिष्ठितानि, विकल्पाश्च तदनुसारेण भवन्तः तथैव, इति 'चित्रम् इदम्' इति कथंकारं प्रतिपत्तिः। एकत्र तु निम्नोन्नतादिरहिते भित्तितले रेखाविभक्तनिम्नोन्नतादिविभागजुषि 'गम्भीरनाभिरुन्नतस्तनीयम्' इति चित्रावभासो युक्तः, तद्वत् एकप्रकाशभित्तिलग्नत्वेन वैचित्र्यात्मकभेदोपपत्तिः, इति भावभेदग्रहणप्रकाशभित्तेरनपायिनीं स्वप्रकाशतामाह। तत्र स्वप्रकाशे किं प्रमाणेन ?। अथोच्यते पूर्वमस्य प्रकाशो न भवति, तर्हि स एव नास्ति इति स्यात् प्रकाशमात्ररूपत्वात् तस्य। न च अस्य नास्ति, इत्यभावेन स्पर्श उपपन्नः, यतो हि असावेव परमार्थतः सन्, प्रकाशस्यैव सत्त्वात, सतश्च असद्रूपत्वायोगात्। अथोच्यते-ईश्वरता तस्याप्र-

---

नीलपीतादिवदेव, जडान्धबधिरकल्पानि—जडान्धबधिरसदृशानि, स्वविषयमात्रनिष्ठितानि—स्वविषयीभूतनीलपीतादिग्रहणमात्रे समाप्तिं गतानि, विकल्पाश्च—नीलपीतादिज्ञानानन्तरभाविनो नीलपीतादिविकल्पाश्च, तदनुसारेण भवन्तः—ज्ञानानुसृत्या सत्तां लभमानाः, तथैव—जडान्धबधिरकल्पाः, इति—अतः कारणात्, इति प्रतिपत्तिः कथं कारम्—कथं कृत्वा स्यात्। इति किमिति ? इदम्—विश्वम्, चित्रम्—आलेख्यभावेन स्थितं भवति। पुनः कुत्र चित्रप्रतिपत्तिर्युक्ता इत्यत आह "एकत्र" इति। तु व्यतिरेके, चित्रावभासः—आलेख्यभूतायाः स्त्रियो ज्ञानम्। दृष्टान्तमुक्त्वा दार्ष्टान्तिकं कथयति "तद्वत्" इति। वैचित्र्यात्मकः—विश्ववैचित्र्यरूपः यो भेदः तस्य उपपत्तिः—चित्रभावेनावस्थानयोग्यता, भवतीति शेषः। एतेन पूर्वश्लोकपूर्वार्धं व्याख्यातम्। इति—अतः कारणात्, आचार्यः, भावानां यत् भेदेन ग्रहणम् तद्रूपो यः प्रकाशः—परिमितज्ञानम् तस्य भित्तेः भित्तिभूतस्य परप्रमातुः, स्वप्रकाशताम्—स्वप्रकाशभावम्, आह—"**भातविग्रहे**" इत्यनेन कथयति। विरुद्धे-इत्यादिपदं व्याख्यातुमवतरणिकां करोति "अथोच्यते" इति। अस्य—प्रमातुः, स एव—प्रमातैव, इति स्यात्—एवंभवेत्। कुत इत्यपेक्षायामाह "प्रकाशमात्र" इति। तस्य—प्रमातुः, न हि यो यत्स्वभावः स तदभावे सन्निति वक्तुं योग्यः इति भावः। ननु मास्तु असौ इत्यपेक्षायां "**परमार्थसति**" इति व्याचष्टे "न च" इति। अस्य—प्रकाशस्वभावस्य प्रमातुः। कुत इत्यपेक्षायामाह "यतो हि" इति। "प्रकाशस्यैव सत्त्वात्" इति, यतः प्रकर्षेण

मिता प्रमास्यते तदपि न, यतो हि असौ प्रमातृत्वेन चेत् न चकास्यात्[1] कस्यायमुद्यमः, चकास्ति चेत् तर्हि प्रमातृतैव ईश्वरता, तदाह 'ईश्वरे प्रमातरि सर्वदा भातविग्रहे' इति । विशेषेण गृह्यते इति विग्रहोऽसाधारणं स्वरूपम्, अत एव स्वतन्त्रप्रकाशरूपत्वात् अभावस्पर्शायोगेना[2]भावानुप्रवेशनेन यः कालव्यवहारः सोऽत्र नास्ति,—इति 'पुराणे' इत्युक्तम् । तत्र किं प्रमाणं, कुतः प्रयोजनात्प्रमाणं,

---

काशनशीलत्वात्प्रकाश एवास्ति क्रियाकर्ता भवति न त्वप्रकाशः । बहिरप्यत्रास्तीति स्थानेऽत्र प्रकाशते इति कथयन्ति । सतोऽपि तस्यासत्त्वं भवतु, इत्यत आह "असतश्च" इति । विरुद्धत्वादिति भावः । "**ईश्वरे प्रमातरि सर्वदा भातविग्रहे**" इति विशेषणत्रयं योजयितुमवतरणिकां करोति "**अथोच्यते**" इति । प्रमास्यते—प्रमाविषयीकरिष्यते । कुत इत्यपेक्षायामाह "**यतो हि**" इति । चकास्यात्-स्वप्रकाशत्वेन स्फुरेत् । अयमुद्यमः—ईश्वरताप्रमाविषयीकरणरूपः उद्योगः, "**प्रमातृतैव ईश्वरता**" इति । तथा च नेश्वरतायाः प्रमाविषयीकरणापेक्षा, न हि प्रमाता प्रमाविषयीकरणे योग्यः । तदुक्तम्ः—

"आत्मा यदि भवेन्मेयस्तस्य माता भवेत्परः"

इति ।

एवमवतरणिकां कृत्वा विशेषणत्रयं योजयति "तदाह" इति । सूत्रकार इति शेषः । किमाहेत्यपेक्षायां विशेषणत्रयमनुकृत्याह "**ईश्वरे**" इति । विग्रहपददुर्बोधत्वेन पृथक्कृत्य व्याचष्टे "**विशेषेण**" इति । विशेषेण-विशेषभावेन, स्वलक्षणतयेति यावत् । एतदवष्टंभेन "**पुराणे**" इति पदं व्याचष्टे "**अत एव**" इति । स्वतन्त्रप्रकाशरूपत्वात्—"**सर्वदा भात**" इति पदेनोक्तत्वात्, स्वप्रधानप्रकाशस्वरूपत्वात् । अभावस्पर्शायोगेन—प्रागभावस्पर्शाभावेन, कालव्यवहारः—उत्पत्तिकालव्यवहारः, अत्र—अस्मिन्प्रमातरि, पुराणो हि प्रागभावप्रतियोग्येवेति भावः । "**किं प्रमाणम्**" इति व्याख्यातुमुपन्यस्यति "किं प्रमाणम्" इति । किं शब्दस्याव्ययत्वेनार्थत्रये योजनां करोति "**कुतः**"

---

1—नाचकास्यत्—K. S. S.

2—अभावस्पर्शायोग्ये अभावानुप्रवेशनेन—K. S. S.

कस्तत्र प्रमाणस्योपयोगः,—इति, तत्र च किं प्रमाणम् न किञ्चित् उपपत्त्या घटते इत्यर्थः। यतः प्रमाणं नाम नवाभासरूपं[1] प्रमातरि प्रमितिलक्षणां विश्रान्तिं विदधत् प्रमाणं भवति, प्रमाता चाविच्छिन्नाभासः सर्वाश्च प्रमितीः स्वात्मनि अन्तर्मुखरूपे भजते। तत् तस्मिन् कथमभिनवाभासस्[2]तत्प्रमितिश्च कुत्र विश्राम्यतु तस्मात् देहप्राणपुर्यष्टकशून्यप्राय एव प्रमातरि प्रमाणमुच्यताम्। तत्रापि च वेद्यांशे यदि नाम, न तु कथंचित् संविदंशे, तत्रापि

इति। "नवाभासः" इति व्याचष्टे "यतः" इति। प्रमाणं नाम—प्रमाणाख्यं वस्तु, "नवावभासरूपम्" इति, "अभिनवोदयः" इत्यनेनोक्तत्वादिति भावः।, प्रमितिलक्षणाम्—प्रमारूपाम्, विश्रान्तिम्—बाह्यवस्तुविश्रान्तिम्, अविच्छिन्नाभासः—अविच्छिन्नप्रकाशः, भजते—विश्रान्तिधामतया सेवत इत्यर्थः। तत्—ततः कारणात्, तस्मिन्—प्रमातरि, अभिनवाभासः-अभिनवाभासरूपं प्रमाणम्, तत्त्वव्यवस्थापक इति शेषः। नह्यविच्छिन्नाभासे विच्छिन्नाभासस्तत्त्वव्यवस्थापक इति युक्तम्। अन्यमपि दोषं कथयति "तत्प्रमितिश्च" इति। तत्प्रमितिश्च—प्रमातृविषया प्रमाणकृता प्रमा च, कुत्र विश्राम्यतु, प्रमाणकृताः सर्वाः प्रमितयो हि प्रमातरि विश्राम्यन्ति तस्य तत्स्वभावत्वात्, अन्यथा सर्वेषु प्रयोगेषु अहं जानामीत्यादिरूपेषु अहंशब्दप्रयोगायोगात्। आत्मप्रमितिस्तु स्वयं साध्यमाने तस्मिन् विश्रान्तिं न भजते एवेति तस्या विश्रान्त्यभाव एव आपतेदिति भावः। फलितमाह "तस्मात्" इति। देहप्राणपुर्यष्टकशून्यप्राये—देहप्राणबुद्धिशून्यकल्पे, प्रायग्रहणेन पारमार्थिकप्रमातृत्वनिरासः। अन्यथा प्रमाणविषयत्वकथनायोगात्। देहादिचतुष्टयं हि स्वतो बाह्यं प्रति प्रमाणभूतमान्तरं प्रति प्रमेयभूतमेव। तत्रापि च—देहादावपि च, वेद्यांशे—वेद्यभागे प्रमेये, तत्—प्रमाणम् यदि नाम भवेत्, नतु कथंचित्-केनापि प्रकारेण, संविदंशे-प्रमातृभागे तत् प्रमाणम भवति, यद्यपि बाह्यवस्तूनामपि प्रमेयभागे एव प्रमाणप्रवृत्तिर्न तु भानरूपे संविद्भागे तथापि तावदास्तामेतत् अप्रकृतत्वेन। तत्रापि-तस्मिन् देहादिगते संविदंशेऽपि,

1—अभिनवाभासरूपम्—K. S. S.

2—अभिनवः आभासः—K. S. S.

विषयोन्मुखे तत एव संकुचितत्वात् अभिनवाभासे संकोचविहीन-सत्यप्रमातृलग्नतापेक्षया कथ्यतां स्वसंवेदनं प्रमाणम्। सौगतेनापि 'ममेदं ज्ञानम्' इति कल्पितप्रमातृलग्नमेव तदुपेत्यम् न तु परमार्थप्रमातरि प्रमाणेन किंचित्। उक्तं च मयैव

यत्प्रमेयीकृताऽस्मीति सर्वोऽप्यात्मनि लज्जते।
कथं प्रमेयीकरणं सहतां तन्महेश्वरः॥'

इति ॥ १६ ॥

नन्वेवं यदि भगवति प्रमाणमनुपयोग्यनुपपत्ति च किमर्थं

---

विषयोन्मुखे तत एव—विषयोन्मुखत्वादेव, संकुचितत्वात्—संकोचविषयत्वाद्धेतोः, अभिनवाभासे—अभिनवाभासरूपे, अत एव संकोचविहीनः यः सत्यप्रमाता प्रकाशाख्यः परमार्थप्रमाता तस्मिन् लग्नतापेक्षया न तु परमार्थतः, स्वसंवेदनम्—स्वरूपभूतं संवेदनम्, प्रमाणं कथ्यताम्, अवच्छिन्नत्वेनानवच्छिन्नां परसंविदं प्रति प्रमेयत्वात् अन्यथाऽस्यैव पर संवित्त्वापातात् इति भावः। ननु विज्ञानवादी तं स्वविश्रान्तमेव कथयति, अन्यथा विज्ञानवादित्वायोगादिति अत आह "सौगतेन" इति। तत्—संविदंशरूपं ज्ञानम्, उपेत्यम् अंगीकार्यम्, सौगतानां परमार्थप्रमात्रनङ्गीकारमपेक्ष्य कल्पितेत्युक्तम्। परमार्थप्रमातरि—परशिवरूपे सत्यप्रमातरि, किञ्चित्—किमपि। तदुक्तम् "प्रमाणान्यपि वस्तूनाम्" इति। अत्र स्वकीयं पद्यं दृष्टान्तयितुमाह 'उक्तंच" इति। किमुक्तमित्यत आह "यत्" इति। यत्—यतः कारणात्, सर्वोपि—समस्तोऽपि जनः, इति—एवम्, लज्जते—लज्जाकर्तृत्वं भजते। इति किमिति? अनेन अस्मि—अहं प्रमेयीकृतः—ज्ञातः, किंसारोऽयमिति निर्णीतः, तोलित इति—यावत्। तत्—ततः कारणात्, अयं महेश्वरः प्रमेयीकरणं कथं सहताम्, अनीश्वरो हि बलादायातेन प्रमेयीकरणेनासमर्थत्वात्केवलं लज्जते एव, ईश्वरस्तु समर्थत्वात्तन्न सहते एव लेशतोपि, स्वात्मरूपस्य परमेश्वरस्य प्रमेयता न युक्तैवेति भावः॥ १६॥

अथ सप्तदशस्य श्लोकस्यावतरणिकां करोति—"नन्वेवम्" इति।

अत्र टीका—

एवम्-उक्तप्रकारेण, अनुपपत्ति च-उपपत्तिरहितं च, अयुक्तं चेति

तद्विषयं शास्त्रम्, तद्धि प्रमाणमेव, परार्थानुमानात्मकं हि शास्त्रम्, तत्र च प्रमाणादिषोडशपदार्थतत्त्वमयत्वमेव परमार्थः। यत्तु सौगतैः पञ्चावयवत्वादि दूष्यते तदाग्रहमात्रं, षोडशसु हि पदार्थेषु-निरूप्यमाणेषु सम्यक् प्रतिपाद्यं परः प्रतिपाद्यते[1], 'हिताहित-प्राप्तिपरिहारयोः' इत्यादिना च ग्रन्थेन। परस्य किं प्रयोजनम्, तद्धि परस्य प्रतिपत्त्यै, सा च परार्थानुमानात्, तत्र च प्रतिज्ञादेरुपयोगः इति। तत् परिपूर्णपरप्रतिपत्तिकारि परमार्थतः सकलमेव शास्त्रं परार्थानुमानम् आगमव्यतिरिक्तं न्यायनिर्माणवेधसाक्षपादेन निरूपितम्। इति अत्रापि पूर्वोक्तमेव 'किंतु मोहवशात्' (१।१।३) इति स्मारयितुमाह।

---

यावत्। तद्विषयम्—भगवदभिधायकम्, तत्—शास्त्रम्, कुतः प्रमाणमेवेत्यत आह "परार्थ" इति। परार्थानुमानात्मकम्—परार्थानुमानरूपम्, तत्र—तस्मिन् शास्त्रे, प्राचुर्ये मयट्प्रयोगः, सौगतैः—बौद्धैः दूष्यते—प्रत्याख्यायते, प्रतिज्ञादेस्तन्मते प्रत्याख्यानात्। तत्—दूषणम्, आग्रहमात्रमेव, हठमात्रमेवेत्यर्थः। कुत इत्यपेक्षायामाह "षोडशसु" इति। प्रतिपाद्यम्—अभिधेयं वस्तु, प्रतिपाद्यते—ज्ञाप्यते, परः—बोध्यमानः, ग्रन्थेन—बौद्धैरंगीक्रियमाणेन वाक्यसन्दर्भेण, "आदि" शब्देनान्येषां वाक्यानां ग्रहणम्। परस्य—सौगतस्य, यदेव प्रयोजनं तदेवास्माकमपि इत्यत आह "तद्धि" इति। तत्—स ग्रन्थः, परस्य बोध्यमानस्य, सा च—परप्रतिपत्तिश्च, तत्र च—परार्थानुमाने च, इतिशब्दः प्रमेयसमाप्तौ। एतेन सौगतोऽपि पंचावयवत्वादौ युक्त्यांगीकारं कारितः। फलितं कथयति "तत्" इति। तत्—ततो हेतोः, आगमव्यतिरिक्तम्—आगमशास्त्रव्यतिरिक्तम्, तस्य महारहस्योपदेशकत्वेन प्रत्यक्षादपि श्रेष्ठत्वेनानुमानत्वकथनायोगात्। न्यायनिर्माणवेधसा—न्यायशास्त्रकरणे ब्रह्मतुल्येन, न्यायशास्त्रकारिणेति यावत्। इति-अतः कारणात्, एवमाशंक्येति यावत्। अत्रापि—अस्मिन् व्याख्यास्यमाने श्लोकेऽपि, "अपि" शब्दः पूर्वश्लोकेन समुच्चयद्योतकः। तत्रापि पूर्वोक्तस्मारणत्वात्, स्मारयितुम्—विस्मृतिशीलान् स्मृतिं प्रति प्रेरयितुम्,

---

1—प्रतिपद्यते—K. S. S.

अप्रवर्तितपूर्वोऽत्र केवलं मूढतावशात् ।
शक्तिप्रकाशेनेशादिव्यवहारः प्रवर्त्यते ॥१७॥

इह परमेश्वरस्येदमेव परं स्वातन्त्र्यं—यत् अस्मादृक्प्राच्यपशुदशा-[1] विशेषासंभाव्यमानातिदुष्करवस्तुसंपादनं नाम। इतश्च किम् अतिदुष्करं भविष्यति,—यत्प्रकाशात्मनि अखण्डिततादूरूप्ये एव प्रकाशमाने प्रकाशननिषेधावभासः प्रकाशमानः। तस्मात् परमेश्वरस्य[2] तत्परं स्वातन्त्र्यं यत् तथा[3]नवभासनं पशुरूपतावभासनं नाम ग्राहकांशसमु-

---

"आह" इति, अर्थतः इति भावः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे—**अप्रवर्तित** इति।

अत्र टीकाः—

"**मूढतावशात्**" इति पदं व्याख्यातुं प्रक्रियां करोति "इह" इति। परम्—निरतिशयम्, अस्मादृशानां यः प्राच्यपशुदशाविशेषः—पूर्वकालीनः पश्ववस्थाविशेषः, तत्रासंभाव्यमानानि यानि अतिदुष्कराणि वस्तूनि-सदाशिवादिधरान्तानि तत्त्वानि, तेषां संपादनम्–उद्भावनम्। ननु कथं वस्तूनामतिदुष्करत्वम् इत्यत आह "इतश्च" इति। "इतः" इत्यस्यापेक्षां पूरयति "यत्" इति। प्रकाशात्मनि-प्रकाशरूपे परप्रमातरि, अखंडितम् ताद्रूप्यम्-प्रकाशरूपत्वं यस्य तादृशे, प्रकाशनस्य यो निषेधः तस्यावभासः—न प्रकाशते इत्येवंरूपः, प्रकाशमानः—स्फुरणशीलः, अस्यैवंरूपस्य स्वातन्त्र्यस्य वेदान्तेषु प्रतिबन्धत्वेन व्यवहारः। तदुक्तम्—

प्रतिबन्धोऽस्ति भातीति व्यवहारार्हवस्तुनि।
तन्निरस्य विरुद्धस्य तस्योत्पादनमुच्यते॥

इति। फलितमाह "तस्मात् इति" तस्मात्—ततः कारणात्, परमेश्वरस्य तत् परं स्वातन्त्र्यं भवति, तत् किम्? यत् तथानवभासनम्-परमेश्वर-

---

1 अस्मादृशो प्राच्यपशुदशा—K. S. S.
2—परमेश्वरस्येदं तत् परं—K. S. S.
3—तथावभासनम्—K. S. S.

त्थापनं तद्द्वारेण च ग्राह्योल्लासनमपि। सैषा भगवतो मायाशक्ति-रुच्यते। यथोक्तम्।

'माया विमोहिनी नाम..............।'

इति। तदेवंभूतान्मायाशक्तिरूपात् स्वातन्त्र्यात् या मूढता विनष्ट-पूर्णचेतनता स्वात्मवर्तिन इच्छास्पन्दोदयस्फुटस्फुरितविश्वभाव-निर्भरतात्मनः[1] पूर्णत्वस्य, स्मृत्यादिशक्त्यात्मनः स्वातन्त्र्यस्य, देश-कालसंकोचवैकल्यात् अयत्नसिद्धवैभवनित्यताधर्मस्य च प्रकाशमा-

---

भावेनाप्रकाशनरूपं ग्राहकांशसमुत्थापनं भवति, तथा यत् तद्द्वारेण च— ग्राहकांशसमुत्थापनद्वारेण च, ग्राह्योल्लासनम् भवति। सैषा—प्रोक्तस्वातन्त्र्य-रूपा। अत्र वृद्धसम्मतिमाह "यथोक्तम्" इति। विमोहिनी—विमोहकारिणी, इति शब्दः वृद्धवाक्यसमाप्तौ। उक्तप्रक्रियावष्टंभेनामुं पदं व्याख्यास्यन् उपसंहारं करोति "तदेवम्" इति। एवं भूतात्-पशुतावभासनरूपात्, स्वातन्त्र्यात्—स्वतन्त्रतायाः हेतोः। "मूढता" इत्यवयवं व्याचष्टे "विनष्ट" इति। अस्यापि पदस्य स्वयमेव व्याख्यां कुर्वन् "पूर्ण" इत्यवयवस्य व्याख्यां करोति "स्वात्म" इति। स्वात्मनि वर्तते इति तादृशस्य, तथा इच्छारूपो यः स्पन्दः तस्योदयेन स्फुटं यथा भवति तथा स्फुरिताः ये विश्वे भावाः पदार्थाः तैर्या निर्भरता तदा-त्मनः तद्रूपस्य, पूर्णत्वस्य—पूर्णभावस्य। किं रूपस्य? स्मृत्यादिशक्त्यात्मनः स्वातन्त्र्यस्य—स्मृत्यादिशक्तित्रयरूपस्वातन्त्र्यरूपस्य, एतेन "चेतनता" इत्यवयवव्याख्या, पुनः कीदृशस्य? देशकालसंकोचवैकल्यात्[2]—देशकाल-कृतसंकोचराहित्यात्, अयत्नसिद्धौ वैभवनित्यताधर्मौ विभुत्वनित्यताख्यं धर्मद्वयं यस्य तादृशस्य। तत्र देशकृतसंकोचवैकल्यात् वैभवधर्मस्यायत्नसिद्धता, काल-कृतसंकोचवैकल्यात् नित्यताधर्मस्यायत्न सिद्धतेति क्रमो ज्ञेयः। विनष्ट—

---

1—इच्छास्पन्दोदयस्फुटस्फुरितविश्वभावनिर्भरितात्मनः K. S. S.

2—This word is not found in the manuscript o the भास्करी, but because of भास्कर's own subsequent use of the word वैकल्यात् twice and because of the fact of its being found in K. S. S. it has been restored.

नस्यापि यदप्रकाशमानतया अभिमननम्, तस्या वशात् सामर्थ्यात्, पूर्वं यो न प्रवर्तितः समनन्तरश्लोकद्वयोक्तस्वरूपे प्रमातरि भगवति ईश्वरत्वादिना उक्तेनैव पूर्णतादिना[1] व्यवहारो यः खलु 'अहम्' इति भाति स पूर्णः विभुः स्वतन्त्रो नित्यः,—इत्येवमादिरूपः, तं प्रवर्तयन्तु व्यवहारं लोका इति। एतेन शक्तीनाम् इच्छाज्ञानक्रियाणां प्रकाशकेन प्रत्यभिज्ञारूपेण व्यवहारसाधनपरार्थानुमानात्मना शास्त्रेण तं व्यवहारं प्रवर्तयतां तत्समर्थाचरणं क्रियते। 'प्रवर्त्यते' इति द्वौ णिचौ। केवलमिति न तु किंचिदपूर्वं क्रियते, नापि तत्त्वतोऽप्रकाशमानं प्रकाश्यते, प्रकाशमान एव यत् 'न प्रकाशते' इत्यभिमननं

इत्यवयवमपि व्याचष्टे "यत्" इति। "अभिमननम्" इत्यनेनाप्रकाशमानताया अपारमार्थिकत्वं द्योतितम्। षष्ठीयोजनं करोति "तस्याः" इति। तस्या-मूढताया इत्यर्थः। "वशात्" इति व्याचष्टे "सामर्थ्यात्" इति। "अप्रवर्तितपूर्वः" इति व्याचष्टे "पूर्वम्" इति। पूर्वम्—मूढतावस्थायाम्। "ईशादिव्यवहारः" इति व्याचष्टे "पूर्ण" इति। पूर्णतादिना—पूर्णतादिभावेन। कीदृशो व्यवहार इत्यपेक्षायामाह "यः खलु" इति। तम् व्यवहारमिति योजना, प्रवर्तयन्तु—प्रवृत्तिविषयतां प्रति प्रेरयन्तु। इति—एवम्, "शक्तिप्रकाशेन" इति व्याचष्टे "एतेन" इति। एतेन—क्रियमाणेन, प्रकाशकेन—ज्ञानकारिणा, एतेन "प्रकाश" इति पदस्य कर्तरि साधनमिति द्योतितम्। प्रत्यभिज्ञारूपेण-प्रत्यभिज्ञासाधकत्वात् प्रत्यभिज्ञास्वरूपेण। प्रत्यभिज्ञाख्येनेति यावत्। "प्रवर्त्यते" इति व्याचष्टे "प्रवर्तयताम्" इति। प्रवर्तयताम्-प्रवृत्तिविषयतां नयताम् लोकानाम्, तत्समर्थाचरणम्—तस्मिन् व्यवहारप्रवृत्तिविषयतानयने समर्थाचरणं क्रियते। "प्रवर्त्यते" इति, अस्मिन् प्रयोगे इत्यर्थः। "द्वौ णिचौ" इति। द्वयोरपि "णेरनिटि" इति लुप्तत्वादिति भावः। तत्र प्रवर्तमानं प्रेरयतीति एको णिच्, व्यवहारं प्रवर्तयतः प्रेरयतीति द्वितीयो णिच्। "केवलम्" इत्यस्याभिप्रायमाह "न तु" इति। तत्त्वतः-परमार्थतः, अप्रकाशमानम्-अप्रकाशकर्तृभूतम्। पुनः किं क्रियते इत्यत आह—"प्रकाशमान एव" इति। ननु किं व्यर्थेन तदपसारणेनेत्यत आह

1—पूर्णत्वादिना—K. S. S.

तदपसार्यते। तदपसरणमेव हि परमेश्वरतालाभो मुक्तिः, तदनपसरणमेव संसारः, अभिमननमात्रसारं हि एतद्द्वयम्, उभयमपि चेदं भगवद्विजृम्भितमेव। एतदुक्तं भवति—यथा भौतस्य भासमाने एवात्मनि 'अपहारितोऽहम्' इति मोहान्मन्यमानस्य मोहोऽपसार्यते,—कः खलु त्वं ?, यस्येदृशं वस्त्रं मुखमीदृशम्—इति चेत्, पश्य तदस्ति भवतः—इति पुनः पुनरभिदधता न च अस्य अपूर्वं किंचन रचितम्, तथा पशुलोकस्य भासमान एव आत्मनि 'नाहमीश्वरः' इत्यादि मोहादभिमन्वतो मोहोऽपोह्यते। यो हि ज्ञानक्रियास्वातन्त्र्ययुक्तः स ईश्वरो यथा सिद्धान्तपुराणादिषु प्रसिद्धः, तथा च त्वम्—इति। यदि वा यस्मिन् यदायत्तं स तत्रेश्वरो राजेव स्वमण्डले, तथा च त्वयि

---

"तदपसरणमेव"[1] इति। परमेश्वरतालाभः—परमेश्वरतालाभरूपः। एतद्द्वयम्–मुक्तिः संसारश्च। इदम्—मुक्तिसंसाररूपम्। नन्वेतेन किमुक्तम् इत्यत आह "एतदुक्तं भवति" इति। भौतस्य–भूताविष्टस्य, इति—एवम्, पुनः पुनरभिदधता पुरुषेण मोहोऽपसार्यते। इति किमिति ? "कः खलु" इति। हे भूताविष्ट ! खलु-निश्चये त्वं कः असि ? त्वं चेत् इति कथयसि, इति किमिति, यस्येदृशं वस्त्रं भवति, तथा यस्येदृशं मुखं भवति स एवाहमस्मि, तर्हि त्वं पश्य तत्–तादृशं वस्त्रं मुखं च भवतः अस्ति। इति शब्दः भौतमोहापसारणसमाप्तौ वाक्यार्थाक्षेपे च। अस्य–भौतस्य न रचितम्–न कृतम्, सिद्धस्यात्मनो दर्शनात् इति भावः। दृष्टान्ते दार्ष्टान्तिकयोजनां करोति "तथा" इति। भासमान एव—अहंताविषयत्वेन नित्यं स्फुरणशीले एव, अपोह्यते—अपसार्यते, कथमपोह्यते इत्यत आह "यो हि" इति। नन्वीश्वरस्य सर्वविषये ज्ञानक्रिये जीवस्य तु किञ्चिन्मात्रविषये इति कथं तयोरेकत्वम्। सत्यम्, यथाऽतिसूक्ष्मोप्यग्निकणः दाहकत्वेन महाग्निचयादभिन्न एव, तथा जीवोऽपि ज्ञानक्रियास्वतन्त्रत्वेन ईश्वराभिन्न एव, दृष्टान्ते संभवत्यपि उपाधिकृतः कणचयभावरूपो भेदः दार्ष्टान्तिके तु सोऽपि न संभवति एव उपाधेरपि तत्त्वानपायात्, न हि स एव तस्मिन्नुपाधिरिति युक्तम्। पक्षान्तरमाह "यदि वा" इति। आयत्तम्–वशे स्थितम्, विश्वमायत्तमिति योजना, जीवायत्तत्वं च विश्वस्य

---

1—तदपसारणमेव—C.

विश्वम्,—इति ईश्वरताव्यवहारो नान्यनिमित्तकः,—इति व्याप्तिः। यत् खलु यल्लग्नं भाति तत्तेन पूर्णं निधानमिव मणिभिः त्वल्लग्नं च विश्वम्,—इति। यस्य यदन्तर्वर्ति भाति, स तावति व्यापकः समुद्ग इव मणिषु, त्वयि च संविद्रूपे धरादिसदाशिवान्तं शास्त्र-

---

ज्ञानक्रियायत्तताद्वारेण ज्ञेयम्। अन्यनिमित्तकः-आयत्तताव्यतिरिक्तनिमित्तकः। अन्यमपि प्रकारं कथयति "यत् खलु" इति। यः लग्नः यस्मिन् तत् यल्लग्नम्, तेन—लग्नेन, "त्वल्लग्नम्" इति। अहं जानामीति त्वल्लग्नज्ञानसिद्धत्वादिति भावः। चतुर्थमपि प्रकारं कथयति "यस्य" इति। अन्तर्वर्तित्वं चात्र तन्मयत्वमेव ज्ञेयम् न मध्यदेशवर्तित्वम्। स्वप्नजगतश्च स्फुटं स्वप्नद्रष्ट्रन्तर्वर्तित्वम्, इति नायस्तम्। घटादिसदाशिवान्तम्, तत्त्वपंचत्रिंशत्करूपम् इत्यर्थः। पंचमं[1]

---

1—षष्ठं प्रकारम्—C. Abhinava mentions only five ways of removing ignorance. The first is stated in

योहि………………………तथा च त्वम् इति।

the second in

यदि वा………………इति व्याप्तिः।

the third in

यत् खलु…………………विश्वम् इति।

the fourth in

यस्य यदन्तर्वर्ति………शास्त्रप्रक्रियोक्तं विश्वमिति।

the fifth in

यस्मिन् स्थिते,…………त्वयि प्रकाशरूपे विश्वम् इति।

After stating the fourth 'प्रकार' which, according to him also, is contained in Abhinava's text beginning with यस्य यदन्तर्वर्ति as stated above, he explains the next way contained in the text यस्मिन्… which should, therefore, be the fifth. The word षष्ठ seems to have crept in by mistake. We have, therefore, altered the text accordingly.

प्रक्रियोक्तं विश्वम्,—इति। यस्मिन् स्थिते यदुदेति लीयते च तत् तत्पूर्वापरभागव्यापि यथा भूमावङ्कुरः, तथा च त्वयि प्रकाशरूपे विश्वम्,–इति। एवम् अन्येऽपि धर्माः सहस्रशोऽपि आगमादिसिद्धा योज्याः। तदेवं व्यपोहिते व्यामोहे स्थितेऽपि तत्संस्कारमात्रधृते[1] शरीरादौ अनात्मताभिमानपुरःसर एवात्मताभिमाने घटादौ च प्रकाशमान एवानात्मताभिमाने ज्ञातेन्द्रजालतत्त्वस्य पश्यतोऽपि इन्द्रजालं यथा न तत्त्वतो व्यामोहः तथा प्रत्यभिज्ञातात्मस्वरूपस्य। ततो निवृत्ते प्रयाणप्रापितपर्यन्ते देहे परमेश्वरतैव। अभ्यासभावना-

---

प्रकारं कथयति "यस्मिन्" इति। पूर्वापरभागव्यापि—आद्यन्तभागव्यापकम्। अन्ये–प्रोक्तेश्वरतादि धर्मव्यतिरिक्ताः, "आगमादि" इति, आदिशब्देन वेदान्तिग्रहणम्। उपसंहारं करोति—"तदेवम्" इति। तदेवं सति व्यामोहे—स्वात्मनि अनीश्वरतारूपे मोहे, व्यपोहिते—अपसारिते सति, तथा तत्संस्कारमात्रधृते—पूर्वकालीनव्यामोहसंस्कारमात्रधृते, "शरीरादौ" आदिशब्देन प्राणादिग्रहणम्। अनात्माभिमानपुरःसर आत्मताभिमाने स्थिते सति। तत्र समाधिकाले अनात्मताभिमानः व्युत्थानकाले अवश्यकार्यव्यवहृतिवशेन आत्मताभिमान इति क्रमो ज्ञेयः। तथा घटादौ–परमार्थत आत्मभावेन स्थिते पदार्थजाते, अनात्मताभिमाने प्रकाशमान एव—व्यवहारवशेन भासमाने एव सति, प्रत्यभिज्ञातात्मस्वरूपस्य—ईश्वरतया प्रत्यभिज्ञाविषयीकृतात्मस्वरूपस्य योगिनः, तथा व्यामोहः—देहमात्रात्माभिमानसत्यतारूपः, घटाद्यनात्माभिमानसत्यतारूपश्च, विश्लिष्टः समन्तात्स्थितः, मोहः न भवति। तथा कथम्? यथा–ज्ञातेन्द्रजालतत्त्वस्य–निर्णीतेन्द्रजालरहस्यस्य, इन्द्रजालं पश्यतोऽपि—मन्त्रस्वभाववशेन दर्शनविषयतां नयतोऽपि, व्यामोहः—तत्सत्यतारूपो भ्रमो न भवति तथेत्यर्थः। जीवन्मुक्तिमुक्त्वा विदेहमुक्तिं कथयति "ततः" इति। प्रयाणेन मरणेन प्रापितः पर्यन्तः यस्य तादृशे "परमेश्वरता" इति, सर्वव्यापकतालाभादिति भावः। तदुक्तम्:—

"सूर्यो भूत्वा प्रतपति विष्णुः पाति जगत्त्रयम्।
रुद्रो भूत्वा संहरति सृजत्येष पितामहः।"

---

1—तत्संस्कारमात्रविधृते—K. S. S.

बलेन तु शिवशासनोपदिष्टेन देहघटादावेव परमेश्वरतासमावेश-मभिनिविश्य पश्यत इहैव शरीरे पारमेश्वर्यांशधर्मोद्गमः, न तु वस्तुतः पूर्णता, देहत्वस्यैव संकोचप्राणस्य गलने यथास्थितविश्वात्मकता-पत्तेः। यस्य तु व्यवहारसाधने हेतुकलापेऽपि असिद्धताभिमानः,

---

इति। जीवन्मुक्तेः परां काष्ठां कथयति "अभ्यास इति। शिवशासनोपदिष्टेन–शिवशास्त्रकथितेन, अभिनिविश्य–अभिनिवेशं कृत्वा, हठेनेति यावत्। अभिनिवेशश्च अविच्छिन्नपरामर्शमात्ररूपो ज्ञेयः। कुतो न पूर्णतेति आह "देहत्वस्य" इति। गलने–नाशे, विदेहमुक्तौ इति यावत्। यथास्थितविश्वात्मकतापत्तेः, पारमार्थिकसर्वात्मताभावात् इत्यर्थः। एतेन जीवन्मुक्तिविदेहमुक्त्योर्महान्भेदः उक्तः। जीवन्मुक्तिर्हि तत्त्वदर्शित्वमेवास्वादसहितम्, विदेहमुक्तिस्तु तत्त्वे लयः। परं तु जीवन्मुक्तिं विना विदेहमुक्तिर्दुष्प्रापैव। यत्तु भगवतोक्तम्।

"प्रयाणकालेऽपि च"

इति। तदपि जीवन्मुक्तिविषयमेव। प्रयाणसमयेऽपि हि जीवत्वमेव, मृतस्य प्रयाणायोगात्। यथा तथा तु सर्वदैव परतत्त्वनिष्ठेनैव भाव्यमुभयलोकहितत्वात्। तदुक्तम्—

भुक्त्वा भोगान् भवभ्रान्तिं हित्वा लप्स्ये परं पदम्।
इत्याशंसेह शोभेत शंभोः भक्तिमतः परम्॥

इति। शंभोर्भक्तिर्ह्यत्रपरतत्त्वनिष्ठैव, न तु कल्पिताकारनिष्ठत्वम्। परतत्त्वनिष्ठो हि यथाप्राप्तं कुर्वन्नेव परतत्त्वनिष्ठो भवति। तेन च तस्योभयोरपि भोगमोक्षयोः सिद्धिरेव। तत्र भोगैकरतत्वं मूढत्वमेव मोक्षैकरतत्वमसंभवोपहतमुभयनिष्ठत्वं तु श्रेष्ठतरम्। तत्र भोगसाधने स्मृतिशास्त्रं प्रमाणम्। मोक्षसाधने च पतिशासनादीनि। ननु केचिद् ब्रुवन्ति मोक्षः सर्वेषां देहपाते स्वयंभाव्येवेति भोगैकपरेणैव भाव्यम्। सत्यम्, मोक्षस्तेषामनिष्टोऽस्तीष्टो वा इति निर्णेयम्। यद्यनिष्टस्तर्हि तैः सहेयं चर्चैव न युक्ता, यदि त्विष्टस्तर्हि तेषां वाच्यम्, इष्टं यदि सत्वरमेव सिद्ध्यति तदिष्टतरमेवेति मोक्षार्थमुद्यमः दिनानुदिनं वृद्धिं नेयः। परमार्थविचारे तु द्वयमप्येतदीश्वरायत्तमेवेति यद्यपि स एव सर्वत्र प्रमाणं तथापि भगवतैव दत्तसामर्थ्यानि निजबाह्यान्तःकरणानि अपि व्यापारयितव्यानि। यस्तु न व्यापारयति तानि तस्य तत्र प्रवृत्तिर्भगवतैव रुद्धा इति कोऽभ्युपायः। इत्यलमनाख्येषु वस्तुषु प्रसंगपरंपराभिः। यतो यद्भगवतः

तस्य तत्रापि व्यवहारसाधनैरेव व्यामोहोऽपसार्यः। यस्य तु सर्वथा नापसरति, तत्रेश्वरशक्तिबलान्मूढतैव, तस्यापि कर्णपथगमनात् संस्कारपाकेनावश्यं कदाचिद्भविष्यत्येव स्वरूपलाभः इति। तदेवं[1]

करणीयम् तत्स्वयमेव सर्वान् कारयति। ननु यदि अभ्यासभावनाबलेनैव पारमेश्वर्यांशधर्मोद्गमः तर्हि कृतमनया व्यवहारेण परतत्त्वसाधनपरया नवमार्गप्रदर्शिन्या प्रत्यभिज्ञयेत्यत आह "यस्य तु" इति। तु व्यतिरेके। यस्य पुरुषस्य अर्थादभ्यासादिना साधितपरतत्त्वनिर्णयस्य, व्यवहारसाधने हेतुकलापे-हेतुसमूहे असिद्धताभिमानः, लक्षणया तन्निष्ठान् महागुरून् प्रति असिद्धाः एते इत्येवंरूपः अभिमानो[2] भवति, तस्य—सर्वं वाक्यं सावधारणमिति न्यायेन तस्यैव, नत्वभ्यासादिरहितस्य। तत्रापि—देहस्थितिं यावत् प्रहेये व्यवहारेऽपि, व्यवहारसाधनैरेव[3]—स्मृत्यादिरूपैर्व्यवहारकारणैर्वस्तुभिरेव, व्यामोहः अपसार्यः, प्रत्यभिज्ञोक्तनयेन नाशनीयः, येन तेषां शुद्धे व्यवहारे प्रवृत्तिः तत्कारिषु महागुरुषु च भक्तिरुत्पद्यते इति भावः। एवं च ये केचिदेवं कथयन्ति-व्यवहाररतानामेव व्यवहारसाधनैरुपदेशः कार्य इति, ते तु तैः अवटपतिता अवटान्तरे पात्यन्त एवेत्यलं परचोद्याविर्भावनेन खलत्वाव्यभिचारिणा। ननु एवमुक्तोपि यदि न शृणोति तर्हि किं कार्यमित्यत आह "यस्य" इति। अभ्यासादिवशेन किञ्चिन्मोहापसारणमपेक्ष्य "सर्वथा" इत्युक्तम्, योग्यत्वेपि व्यवहारेपि परमार्थदृष्टियुक्तान्महागुरूनपेक्ष्यैवमुक्तम्। यथा सम्राडपेक्षया माण्डलिकस्यानीश्वरत्वमिति। ननु तर्हि तस्य कदापि किमेतच्चित्ते न लगिष्यतीत्यत आह "तस्यापि" इति। तस्यापि कालेनैतच्चित्ते लगिष्यत्येवेति भावः। ननु यस्यैतत्कर्णपथं न गतम् तस्य का वार्ता? सत्यम्, प्रथममगमनमेवासंभवोपहतम्[4], तत्संभवेऽप्यभ्यासमहानिष्ठतायामयमर्थः स्वयं स्फुरिष्यत्येवान्यथा स्वतः सिद्धासंभवापत्तेः, कथिताश्च शास्त्रे स्वतः सिद्धाः। दृष्टाश्च शास्त्राध्ययनेन विनैव एवंविधोपदेशकर्तारो महागुरव

१—स्वरूपलाभः। तदेवं कर्तरि........................K. S. S.

२—इत्येवंरूपः अभिमानो न भवति—C.

३—व्यवहारसारसाधनैरेव—C.

४—प्रथममगमनमेवासंभवोपहतम्—C,

'कर्तरि' ( १।१।२ ) इत्यादिश्लोकद्वयेन यदुक्तं तदेव 'विश्ववैचित्र्य' इत्यादिश्लोकत्रयेणोपस्कृत्य पुनर्निरूपितम्, एवं भूतं तावत् प्रमाणम् तदेवं-भूते भगवति कथमुपपद्यताम्। ततश्च युक्तमुक्तं शास्त्रादाविति भङ्ग्यन्तरेण इदानीं तदेव निर्वाहितम्—इति शिवम् ॥ १७ ॥ आदितः ॥ १२० ॥

इति श्रीमदभिनवगुप्ताचार्यविरचितायां प्रत्यभिज्ञासूत्रविमर्शिन्यां क्रियाधिकारे मानतत्फलमेयनिरूपणं नाम तृतीयमाह्निकम् ॥ ३ ॥

---

इत्यलं प्रपंचेन। भविष्यति इति, अत्र व्यामोहापसार इति शेषः, इति शब्दः प्रमेयसमाप्तौ। उपसंहारं करोति "तदेवम्" इति। "शास्त्रादौ" ज्ञानाधिकार प्रथमाह्निकप्रारंभे इत्यर्थः। उपस्कृत्य—उपस्कारयुक्तं कृत्वा, सविशेषमितियावत्। गुणाधानं हि उपस्कारः स एव विशेष इति। सिद्धान्तं कथयति एवं इति। एवंभूतम्—नवनवाभासरूपं प्रमेयतासहं च। एवंभूते—नित्ये स्वप्रकाशे च। उक्तम्—"सिद्धिं विदधीत कः" इत्येवं रूपं वस्तु, शास्त्रादौ, "कर्तरि" इत्येवं रूपे शास्त्रप्रारंभे इत्यर्थः। इति—अतः कारणात्, इदानीम्—क्रियाधिकारतृतीयाह्निकान्तसमये, तद् एव भंग्यन्तरेण—अन्यया रचनया, निर्वाहितम्—सिद्धीकृतम्, प्रारम्भोपन्यस्तवस्तुनिर्वाहणपरत्वात् सर्वशास्त्राणाम् इति भावः। इति शब्दः आह्निकव्याख्यासमाप्तौ। शिव—पदं मंगलवाचकं परतत्त्वसूचनपरञ्च इति शिवम् ॥ १७ ॥

इति श्रीमन्महामाहेश्वराचार्यवर्य श्रीभास्करकण्ठविरचितायामीश्वरप्रत्यभिज्ञासूत्रविमर्शिनीटीकायां श्रीभास्कर्याख्यायां क्रियाधिकारे तृतीयमाह्निकं समाप्तम्।

इति शम्

## क्रियाधिकारे

# चतुर्थमाह्निकम्

---

भावानाभासयन् कर्ता निर्मले स्वात्मदर्पणे ।
कार्यकारणभावं च यश्चित्रं तं स्तुमः शिवम् ॥

---

## भास्करी

स्वभित्तिदर्पणे भावान्भासयेद्योऽति निर्मले ।
कार्यकारणभावञ्च तेषां तं संस्तुमः शिवम् ॥

अथ क्रियाधिकारे चतुर्थाह्निकस्य निर्विघ्नव्याख्यासमाप्तये प्रचयगमनाय च कायमनोभ्यां कृतमपि परतत्त्वरूपेष्टदेवतानमस्कारलक्षणं मङ्गलं सकलाह्निकतात्पर्यसूचकेन श्लोकेन शिष्यशिक्षार्थं वाग्विषयीकरोति 'भावान्' इति । वयं तं शिवम्–सर्वाभासकरूपं सर्वकर्तृरूपं च शिवम् स्तुमः । तं कम् ? कर्ता—सर्वकर्तृतया स्थितो यः शिवः, निर्मले—स्वयं भासनयोग्यत्वेन परभासनरूप प्रतिबिम्बसहिष्णुतया च मलरहिते, स्वात्मदर्पणे–चिन्मात्राख्यनिजरूपमुकुरे, भावान्–सदाशिवादि धरण्यन्तं स्थितं तत्त्ववृन्दम्, आभासयन्—ज्ञातृत्वावस्थायां प्रतिबिम्बभावेन भासनशीलान् कुर्वन् भवति, ततः चित्रं कार्यकारणभावं च—नानाविधं कार्यकारणभावं च भासयन् कर्ता भवति । पूर्वाह्निकोक्तज्ञाप्यज्ञापकभावपूर्वं कार्यकारणभावमाभासयन् भवतीति यावत् । एतेनात्राह्निके कार्यकारणभावो भविष्यतीति[1] सूचितम् । भासेर्णिजन्तस्य प्रथमासमानाधिकरणे शतृप्रयोगे रूपम् । तत्र च भावाः स्वयमेव भासनकर्तारः, अयन्तु तेषां तत्र

---

1 Though from the context, the meaning of the sentence is clear, yet the complement of भविष्यति seems to have been left out. Could it have been 'निरूपितः' ?

क्रियाशक्तिस्फारप्रायसंबन्धप्रसङ्गात्[1] ज्ञाप्यज्ञापकभावस्य तत्त्वं प्रसाध्य, कार्यकारणभावस्य तत्त्वं प्रसाधयितुं श्लोकैकविंशत्या आह्निकान्तरमारभ्यते,—'एष च' इत्यादि 'एवमिच्छैव हेतुता कर्तृता क्रिया' इत्यन्तम्। तत्र श्लोकेन स्वमते कर्तृकर्मभाव एव कार्यकारणभावः,-इत्युपक्षिप्यते। ततः श्लोकत्रयेण जडस्य कारणत्वं पराक्रियते। ततः श्लोकषट्केन चेतनस्यैव कर्तृतारूपा कारणता प्रसाध्यते। ततः प्रसङ्गादनुमाने नियतिशक्तिरवश्योपजीव्या,-इति श्लोकत्रयेणोच्यते। ततः सौगतोक्तकार्यकारणपरमार्थोऽपि[2] अस्मन्मतमेवावलम्बते, नो चेत् न किञ्चित्,-इति त्रिभिः श्लोकैः। सांख्योपदर्शितोऽपि कार्यकारणभावो नोपपद्यते, यद्यस्मदुक्तं चेतनस्य कर्तृत्वं नाङ्गीक्रियते,-इति त्रिभिः। चेतनस्यापि अनीश्वरतायां नैतद्घटते,-इति द्वाभ्यामिति संक्षेपार्थः। ग्रन्थस्तु[3] व्याख्यायते।

---

भावने प्रेरणां करोति, प्रेरणा एव च समर्थाचरणम्। एवं मङ्गलं संपाद्य सकलाह्निकतात्पर्यं समस्तव्यस्तत्वाभ्यां कथयति 'क्रिया' इति।

अथ टीकाः—

क्रियाशक्तेर्यः स्फारः—स्फुरणम्, विजृम्भणमिति यावत्, तत्प्रायः—तत्कल्पः यः सम्बन्धः तस्य प्रसङ्गात्, न तु प्रस्तुतत्वेनेति भावः। तत्त्वम्—स्वरूपम्, प्रसाध्य—पूर्वाह्निके प्रकर्षेण साधयित्वा। एवं सामस्त्येनाभिप्रायमुक्त्वा व्यस्तत्वेन कथयति 'तत्र' इति। तत्र—श्लोकैकविंशतिमध्ये, उपक्षिप्यते, कथ्यते इत्यर्थः। "एवम्" शब्दः करणादेः कारणत्वव्यावर्तनसूचनपरः, ततः—तदनन्तरम्, "श्लोक" इति, द्वितीयतृतीयचतुर्थैरित्यर्थः। पराक्रियते-निवार्यते, अवश्योपजीव्या—अवश्यापेक्षणीया, श्लोकत्रयेण, एकादशद्वादशत्रयोदशश्लोकैरित्यर्थः। ततः[4] सौगतोक्तकार्यकारणपरमार्थः त्रिभिः, चतुर्दशपञ्चदशषोडशरूपैरित्यर्थः, कुतो नोपपद्यत इत्यत आह 'यदि' इति। 'त्रिभिः' इति।

---

1 सम्बन्धाभिधानप्रसङ्गात्–K. S. S.

2 सौगतोक्तकार्यकारणभावपरमार्थो K. S. S.

3 ग्रन्थार्थस्तु–K. S. S. 4 तत्–C.

एवं क्रियाशक्तिमुखेन प्रमात्रेकरूपतां भगवति व्यवहर्तव्यां प्रसाध्य, कर्तृरूपतापि तत एवायत्नसिद्धा,—इति दर्शयितुमाह

एष चानन्तशक्तित्वादेवमाभासयत्यमून् ।
भावानिच्छावशादेषा क्रिया निर्मातृतास्य सा ॥ १ ॥

चोऽवधारणे। एष एव पुराणः प्रमाता अमून् भावान् आभासितपूर्वान् आभासान् आभासयति अविच्छिन्नेन प्रबन्धेन। कथम्, इच्छाया ईशितुरभिन्नाया अविकल्परूपाया अक्रमाया वशेन सामर्थ्येन; कुत्रास्य ते भावाः स्थिताः ? आह, 'अनन्तशक्तित्वात्' इति। विश्वे हि भावास्तस्यैव शक्तिरूपेण स्वरूपात्मत्वेन स्थिताः;

---

सप्तदशाष्टदशैकोनविंशतिरूपैरित्यर्थः । द्वाभ्याम्, विंशत्येकविंशतिरूपाभ्यामित्यर्थः ।

अथ प्रथमश्लोकस्यावतरणिकां करोति "एवम्" इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "एष च" इति ।

अत्र टीकाः—

'एषः' इति व्याचष्ट 'पुराणः' इति, 'अमून् भावान्' इति व्याचष्ट "आभासित" इति। पूर्वं न त्वद्यैव आभासितान् आभासितपूर्वान्, स्वरूपत्वादनादित्वेन स्थितानिति यावत्। आ समन्तात् भासन्ते इति आभासाः, तान्, अथवाऽऽभासमात्रसारत्वेनाभासरूपानित्यर्थः। 'आभासयति' इति निगदव्याख्यातम्। वर्तमानताभिप्रायमाह 'अविच्छिन्नेन' इति। वर्तमानता हि स्फुटं सातत्यद्योतनपरा, अन्यथा भासयेदिति ब्रूयात्। "इच्छावशात्" इति व्याख्यातुमवतरणिकां करोति 'कथम्' इति। एतदुत्तरत्वेनैतत्पदं व्याचष्टे "इच्छायाः" इति। ईशितुः-इच्छायाः कर्तुः, शक्तितद्वतोरभेदमपेक्ष्याह 'अभिन्नायाः' इति। लौकिकेच्छायाः अस्याः श्रेष्ठत्वं कथयितुमाह "अविकल्प" इति। अविकल्परूपायाः, एषणीयोपरागरहिताया इत्यर्थः। 'अनन्तशक्तित्वात्' इति व्याख्यातुमवतरणिकां करोति "कुत्र" इति। विश्वे-सर्वे, अस्य-पुराणप्रमातुः, स्वरूपात्मत्वेन-स्वरूपभावेन, शक्तिर्हि शक्तिमतः स्वरूपमेव।

---

1 आभासमानान् आभासयति अविच्छिन्नेन प्रबन्धेन—K. S. S.

इत्युक्तं

'स्वमिनश्चात्मसंस्थस्य..............१ । ५ । १० ।

इत्यत्र । यदेतदाभासनं यासाविच्छा, सा क्रिया, अस्य भगवतो निर्मातृत्वम् ॥ १ ॥

ननु बीजादङ्कुर उद्भवन् दृश्यते, नच अत्र कश्चिच्चेतनोऽनुप्रविशन् दृष्टः, तत्कथमेतदुक्तम् ?,-इत्याशङ्क्याह

**जडस्य तु न सा शक्तिः सत्ता यदसतः सतः ।**
**कर्तृकर्मत्वतत्त्वैव कार्यकारणता ततः ॥ २ ।**

जडस्य बीजस्यैवंभूतं सामर्थ्यं नास्ति यत् असद्रूपं सद्रूपं वाङ्कुर

---

तदुक्तम्ः—

शक्तिश्च शक्तिमद्रूपाद्[1] व्यतिरेकं न वाञ्छति ।
तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव ॥

इति । कुत्रोक्तमित्यत आह "स्वामिनः" इति । अत्र, अस्मिन् श्लोक इत्यर्थः । "एषा" इत्यादि श्लोकशेषं व्याचष्टे "यदेतत्" इति । एतच्छब्देन व्यवहिताव्यवहितयोः परामर्शः । असौ–आभासनविषया, निर्मातृत्वम्, निर्मातृरूपेत्यर्थः । सर्वं वाक्यं सावधारणमिति नीत्या, न तु अन्या स्थूला करणरूपेत्यर्थः ॥१॥

अथ द्वितीयस्य श्लोकस्यावतरणिकां करोति "ननु" इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "जडस्य" इति ।

अत्र टीकाः—

"जडस्य" इति व्याचष्टे 'बीजस्य' इति । "सा" इति व्याचष्टे "एवंभूतम्" इति । "शक्तिः" इति व्याचष्टे "सामर्थ्यम्" इति । "सत्ता" इति व्याकुर्वन् एवंभूतमित्यस्याकांक्षां पूरयति 'यत्' इति । "सद्रूपम्" इति

---

1 The first line 'शक्तिश्च शक्तिसाद्रूपाद् व्यतिरिक्तम्' as it stands in the M. S. does notyield the required meaning. Could it have been

शक्तिश्च शक्तिमद्रूपं व्यतिरिक्तं न वाञ्छति ।

or

शक्तिश्च शक्तिमद्रूपाद् व्यतिरेकं न वाञ्छति । ?

परिदृश्यमानसत्तावन्तं करोति। बीजादङ्कुरो जायते,-इति नाङ्कुरस्य महिमा असत्त्वात्; अङ्कुरो जायत,-इति च महिमा कथं बीजस्य, ततोऽङ्कुरादन्यत्वात्। यत एवं तस्मात् कार्यं क्रियाशक्त्या भास्यमानं[1] कर्मैव इति कृत्येनैव आविष्कृतम्, कार्यते अनेन कर्ता तत्समर्थाचरणेन,-इति कारणमपि कर्तरि चेतने विश्राम्यति। असतः सतः इति असद्रूपस्य सत इत्यर्थः। वार्थो वात्र गर्भीकृतः, असतोऽङ्कुरस्य सतो वा बीजस्य-इति। अङ्कुरस्य सतोऽसतो वा इत्येवं वा॥ २॥

ननु जडस्य कथमेषा शक्तिर्न भवति,—इत्याह

यदसत्तदसद्युक्ता नासतः सत्स्वरूपता।

सतोऽपि न पुनः सत्तालाभेनार्थः········

सद्वा कार्यमसद्वा संभाव्यते। उभयात्मकम् अनुभयात्मकमनिर्वा-

---

सांख्यमतापेक्षया, तेषां मते हि सत्कार्यम्, "असद्रूपम्" इति तार्किकमतापेक्षया। अत्र समर्थनं करोति "बीजात्" इति। 'असत्त्वात्' इति, न हि शशशृङ्गस्य क्वापि महिमा दृश्यते इति भावः। एतेन पूर्वार्धस्य व्याख्या संपन्ना। उत्तरार्धं व्याख्यातुमवतरणिकां करोति "यत एवम्" इति। एवम्-जडस्य सा शक्तिर्न भवति इत्येवम्, भास्यमानम्-भासनविषयीकृतम्। कृत्येन-ण्यता, आविष्कृतम्-सूचितम्, कर्मणि विहितत्वादिति भावः। एतेन कार्यस्य कर्मतत्त्वता साधिता। कर्ता-स्वतन्त्रकर्ता, तत्समर्थाचरणेन-प्रेरणरूपेण तत्समर्थाचरणेन, कर्तरि-हेतुकर्तरि, एतेन णिजन्तात्करोतेरत्र कर्तरि ल्युडिति सूचितम्। एतेन कारणस्य प्रयोजककर्तृतत्त्वता साधिता। व्याख्यातमपि "असतः सतः" इति पदद्वयं प्रकारत्रयेण पृथक् व्याचष्टे "असद्रूपस्य" इति। सतः, वर्तमानस्येत्यर्थः। 'वा' अर्थः विकल्पः। अत्र तृतीयः प्रकार एव युक्तः स एव च पूर्वं गृहीतः॥ २॥

अथ तृतीयस्य श्लोकस्यावतरणिकां करोति "ननु" इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "यत्" इति।

अत्र टीकाः—

संभाव्यते-संभावयितुं शक्यते। ननु वेदान्तिभिरुभयात्मकत्वेऽपि अनु-

---

1 अवभास्यमानम्—K. S. S.

च्यम्, इति तु स्ववाचैव विरुध्यते तत् किमनेन। यदि असन् घटः, तर्हि तस्यासद्रूपतैव परमार्थः[1] इति कथं स्वरूपविरुद्धं सत्त्वमभ्युपगच्छेत्, नहि पादपतनशतैरपि नीलमात्मनि पीतिमानं मृष्यते। अथ सन्नेव घटस्तर्हि किमन्यत् उपपाद्यते दण्डचक्रसूत्रात्। अभिव्यक्तिविषयत्वस्फुटत्वादयोऽपि सदसद्रूपतया चिन्त्याः ॥

नन्वेवं तूष्णीमास्यताम्, नैतदपि युक्तम् इत्याह

·········अथ चोच्यते ॥ ३ ॥

तदवश्यसमर्थ्योऽयमर्थ इति यावत् ॥ ३ ॥

---

भयात्मकतारूपमनिर्वाच्यत्वमत्र संभाव्यत इत्यत आह उभयात्मकम् इति। "विरुध्यते" इति, उभयात्मकत्वानुभयात्मकत्वयोः स्फुटं विरोधादितिभावः। अनेन–अनिर्वाच्यत्वपक्षेण, परमार्थः–सत्यं स्वरूपम्। अभ्युपगच्छेत्–अङ्गीकुर्यात्। कुत इत्यपेक्षायामाह 'न हि' इति, पीतिमानम्–पीतताम्, मृष्यते–सहते। अन्यत्–सत्ताव्यतिरिक्तं वस्तु, दण्डचक्रसूत्रात्, एतद्रूपाद्धेतोरित्यर्थः। नन्वत्राभिव्यक्तिः स्फुटत्वादि[2] च दण्डादिभिः साध्यत इत्यत आह "अभिव्यक्ति" इति। "चिन्त्याः"–इति, यदि सद्रूपास्तर्हि तत्साधनमफलमेव,[3] यदि त्वसद्रूपास्तर्हि तत्साधनमसंभवोपहतमेवेतिभावः। एतेन 'अर्थः' इत्यन्तं व्याख्या संपन्ना।

'अथ चोच्यते' इति व्याख्यातुमवतरणिकां करोति 'नन्वेवम्' इति। अत्रोत्तरं कथयति "नैतत्" इति। केनाह इत्यपेक्षायां व्याख्येयं श्लोकखण्डमुपन्यस्यति "अथ चोच्यते" इति। अत्र वाक्येन पर्यायत्वेन भावं कथयति "तदवश्य" इति, तत्–ततो हेतोः, अयमर्थः–कार्यकारणभावाख्योऽर्थः, अवश्यसमर्थ्यः–अवश्यसमर्थनीयो भवति। यतो लोके इयं कार्यकारणतोच्यते ततः समर्थनीयेतिभावः। एतेन उत्तरश्लोकस्थं "कार्यकारणता लोके" इति पदद्वयमिहैव योजनीयमिति सूचितम् ॥ ३ ॥

---

1 परमार्थतः—K. S. S.

2 स्फुटत्वादण्डादिभिः—C.

3 तत्साधने महलमेव—C.

ततश्च इत्थमुपपद्यत[1] इति दर्शयति

**कार्यकारणता लोके[2] सान्तर्विपरिवर्तिनः ।**

**उभयेन्द्रियवेद्यत्वं तस्य कस्यापि शक्तितः ॥ ४ ॥**

कुम्भकारहृदये अन्तर्मनोगोचरत्वात् पूर्वमपि स्वसंविदेकात्मतया विचित्रत्वेन विश्वस्य भेदाभेदात्मना परिवर्तमानस्य स्पन्दनेन स्फुरतो

---

अथ चतुर्थस्य श्लोकस्यावतरणिकां करोति "ततः" इति ।

अत्र टीका:—

अयमर्थ इति शेषः । इत्थम्–वक्ष्यमाणेन प्रकारेण, उपपद्यते–घटते । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "कार्य" इति ।

अत्र टीका:—

"**कार्यकारणता लोके**" इति पदद्वयं पूर्वश्लोके योजितत्वेन विहाय '**सान्तर्विपरिवर्तिनः**' इत्यादि व्याख्यातुं तावत् "**अन्तर्विपरिवर्तिनः**" इति समस्तं पदं विग्रहपूर्वं व्याचष्टे "कुम्भकार" इति । तत्रापि '**अन्तः**' इति अवयवं व्याचष्टे "कुम्भकार" इति । मनोगोचरत्वात्–इच्छाद्वारेण मनोविषयत्वात्, पूर्वमपि–निर्माणादग्रेपि । अव्ययत्वेन सर्वलिङ्गत्वात् अन्तरित्यस्य तृतीयार्थद्योतकत्वम्, अन्तः शब्दस्य संविदात्मत्वं पूर्वमेवोक्तम् । "वि" इत्युपसर्गं व्याचष्टे 'विचित्रत्वेन' इति । 'विश्वस्य' इति विशेष्यत्वेनाक्षिप्तम्, अन्यथा विशेषणस्य निर्विषयत्वापत्तेः । तच्चात्र[3] घट एव । 'भेदाभेदात्मना' इति 'विचित्रत्वेन' इत्यनेन योजनीयम् । भेदाभेदरूपया विचित्रतयेत्यर्थः । **परिवर्तिनः** इति व्याचष्टे 'परिवर्तमानस्य' इति, अत्रापि स्वयमेव व्याख्यां करोति 'स्पन्दनेन' इति । स्पन्दनेन–परामर्शरूपेण, स्फुरतः—भेदाभेदभावेन भासमानस्य, पदार्थवर्गस्येति यावत् । तत्र सामान्यभावेनाभेदः स्वलक्षण-

---

1 उपपाद्यते—K. S. S.

2 Bhāskara gives 'कार्यकारणता लोके' not along with अथचोच्यते as does the K. S. S., but with the following verse.

3 ततश्चात्र घट एव भेदाभेदात्मना इति विचित्रत्वेनोत्पन्नेन योजनीयम्—C.

यत् अन्तःकरणबहिष्करणद्वयवेद्यत्वमाभास्यते, एषैव सा कार्यकारणता। उभयग्रहणमुपलक्षणम्, यस्य यावति पूर्णार्थक्रिया[1] समाप्तिरिति यावत्। सुखादीनाम् अन्तःकरणैकवेद्यतापादनमेव निर्माणम्। न च कुम्भकारे प्राणपुर्यष्टकबुद्धिशून्यदेहप्राये तदेतत् स्थितम्, एतस्यापि[2] जडत्वात्। ततः संविदेव विश्वमात्मनि भासयति शक्तिवैचित्र्यात्। तस्य कस्यापि इति पूर्वमुक्तस्य अचिन्त्यापर्यनुयोज्यमहिम्न इत्यर्थः। नच वाच्यम् उभये-

---

भावेन भेद इति क्रमः। 'उभय' इति समस्तं[3] पदं व्याचष्टे 'यत्' इति। आभास्यते—स्वयमेव भासविषयतां याति, कर्मकर्तरि लकारः। 'एषा' इत्यनेन वाक्यार्थपरामर्शः। उभयेन्द्रियवेद्यत्वमिति यावत्। श्लोकस्थं 'सा' इति पदं व्याचष्टे 'कार्यकारणता' इति। सामर्थ्यत्वेनोक्तेत्यर्थः। कार्ये—कार्यविषये कारणता कार्यकारणता। 'अर्थक्रिया' इत्यस्य पर्यायमाह 'समाप्तिः' इति। स्वरूपग्रहणमिति यावत्। अन्यथानुमानादिवेद्यस्य ग्रहणं न स्यादिति भावः। ननु सुखादेरुभयेन्द्रियवेद्यत्वं नास्तीति तस्य कार्यत्वं न प्राप्नोतीत्यत आह 'सुखादीनाम्' इति। 'तस्य कस्यापि' इत्यादि व्याख्यातुमवतरणिकां करोति 'न च' इति। तदेतत्—साध्यमानं कारणत्वम्, एतस्यापि—कुम्भकारप्राणादे-रपि। फलितकथनरीत्या 'तस्य' इत्यादि व्याचष्टे 'ततः' इति। 'तस्य कस्यापि' इत्यस्य व्याख्या 'संविद्' इत्यनेन। 'शक्तितः' इत्यस्य व्याख्या 'शक्तिवैचित्र्यात्' इत्यनेन। एतेन 'शक्तितः' इत्यस्य शक्तिभ्य इत्यर्थ इति द्योतितम्। ननु 'तस्य कस्यापि' इत्यनेन संविदो न ग्रहणम् इत्यत आह 'पूर्वम्' इति। अचिन्त्यापर्यनुयोज्यमहिमत्वं च संविद एवेति भावः। नन्व-भिव्यक्त्यादिविषये यत् सदसत्त्वाभ्यां चिन्त्यत्वमुक्तं तदुभयेन्द्रियवेद्यत्वेऽपि समानमित्यत आह 'न च' इति। चिन्त्यमित्यर्थः। कुतो न वाच्यमित्यत आह

---

1 यस्य यावति पूर्णार्थक्रियासमाप्तिरिति यावत्—K. S. S.

According to Bhāskara, समाप्तिः is the पर्याय of अर्थक्रिया. समाप्तिः, therefore, is not to be compounded with अर्थक्रिया.

2 तस्यापि—K. S. S.

3 उभयम् इति व्याचष्टे समस्तम्—C.

न्द्रियवेद्यत्वमपि सदसद् वा इति। यतोऽयमत्र परमार्थः–यथा दर्पणान्तः कुम्भकारनिर्वर्त्यमानघटादिप्रतिबिम्बे दर्पणस्यैव तथाभासनमहिमा,[1] तथा स्वप्नदर्शने संविदः, तथापि तन्महिम्नैव एतेन इदं बहिः स्फुटरूपं क्रियत इत्यभिमान उल्लसति। एवं संविन्महिम्ना कुम्भकृति दण्डचक्रादौ घटे स्थिते[2] तन्महिम्नैव अभिमानो जायते; यथा मया इदं कृतम्, अनेन इदं कृतम्, मम हृदये स्फुरितम्, अस्य हृदये स्फुरितमिति। तत्र जडस्य मृदादेर्दूरापेतोऽभिमान इति संवित्स्वभावे कर्तृत्वं व्यवस्थाप्यते।

---

"यतोऽयम्" इति। अत्र—अस्मिन्विषये। क इत्यत आह 'यथा' इति। दर्पणान्तः—मुकुरमध्ये, निर्वर्त्यमानः—अस्मिन्समय एव क्रियमाणः, न तु निर्वर्तितः, 'आदि' शब्देन कुम्भकारनिर्वर्त्यमानतादिग्रहणम्। तथा भासनमहिमा—घटस्य कुम्भकारनिर्वर्त्यमानतया भासनरूपो महिमा, संविदः—स्वप्नसंविदः। अत्रापि कुम्भकारनिर्वर्त्यमानताग्रहणमेवेष्टम्। ननु तत्रापि कथं कुम्भकारेणायं घटः क्रियत इत्यभिमानो दृश्यत इत्यत आह 'तथापि' इति। यद्यपि कुम्भकारेण निर्वर्त्यमानतयैवग्रहणमस्ति तथापीत्यर्थः। तन्महिम्ना–प्रतिबिम्बविषये दर्पणमहिम्ना स्वविषये संविदः महिम्ना, एतेन—कुम्भकारेण, 'क्रियते' इति, नत्वहं स्वान्तर्भ्रमेणैव पश्यामीत्यर्थः। उल्लसति—स्फुरति, दर्पणाभावे हि घटोपि न भायात्, नापि कुम्भकारः, नापि तेन तस्य निर्वर्त्यमानत्वम्। अत्र हि पृष्ठे घटं कृतवतः कुम्भकारस्य पुरःस्थे दर्पणे प्रतिबिम्बतया ग्रहणमिष्टम्, न तु साक्षात्, तथा स्वप्नेऽपि घटस्य कुम्भकारक्रियमाणतयैव ग्रहणमिष्टम्, अतोऽत्रापि स्वप्नसंविद एवैतद्दर्शने सामर्थ्यमित्यलं प्रपञ्चेन। दृष्टान्तद्वयमुक्त्वा दार्ष्टान्तिकं कथयति 'एवम्' इति। संविन्महिम्ना—घटनिर्माणप्रवृत्तकुम्भकारग्रहणप्रवृत्तायाः संविदः महिम्ना, स्थिते सति–'संविन्निष्ठा वस्तुस्थितय' इति न्यायेन सिद्धे सति। 'घट' इत्यस्यानन्तरं समुच्चयवाचकशब्दाध्याहारः। अभिमानं दर्शयति 'यथा' इति। तत्र—तस्मिन्घटव्यवस्थाकरणे, संवित्स्वभावे—संवित्स्वरूपे, व्यवस्थाप्यते—समर्थीक्रियते,

---

1 तथावभासनमहिमा—K. S. S.

2 घटेऽवस्थिते—K. S. S.

ननु भावरूपमेव इत्थं भास्यतां किं द्वयेन्द्रियवेद्यत्वेनोक्तमत्र, स्फुटमर्थक्रियाक्षमं रूपमनेनोक्तम्,–इति को विरोधः ॥ ४ ॥

अनेन च विचारेण प्रकृतमपि क्रियास्वरूपं सिद्धं भवति,–इति दर्शयति

**एवमेका क्रिया सैषा सक्रमान्तर्बहिः स्थितिः ।**
**एकस्यैवोभयाकारसहिष्णोरुपपादिता ॥ ५ ॥**

सैषेति, यस्याः 'स्वरूपत आश्रयतश्च नोपपद्यते इति उपालम्भः

---

तत्रैव युक्तत्वादिति भावः । तदुक्तम्ः—

कुम्भकारस्य या संविच्चक्रदण्डादियोजने ।
शिव एव हि सा यस्मात्संविदः का विशिष्टता ॥
तस्मादेकैकनिर्माणे शिवो[1] विश्वैकविग्रहः ।
कर्तेति पुंसः कर्तृत्वाभिमानोऽपि विभोः कृतिः ॥

इति । अत्र शिष्यः प्रश्नं करोति 'ननु' इति । इत्थम्, त्वदुक्तप्रकारेणेत्यर्थः । गुरुरुत्तरं कथयति 'उक्तमत्र' इति । अत्र, अस्मिन्विषये इत्यर्थः । किमुक्तमित्यत आह 'अर्थक्रियाक्षमम्' इति । अनेन, उभयेन्द्रियवेद्यत्वेनेत्यर्थः । यत्तूभयेन्द्रियवेद्यत्वेन[2] स्वलक्षणस्याक्षेपः ततस्तस्यैवाभिधानं युक्तमितिभावः । कोऽत्र विरोधः, नात्र विरोधोऽस्तीति भावः । एवमत्र योजना, तस्य कस्यापि शक्तितः सिद्धम् अन्तर्विपरिवर्तिनः उभयेन्द्रियवेद्यत्वम्, सा कार्यकारणता भवति इति । 'कार्यकारणता लोके इति अथ चोच्यत इत्यनेन सम्बध्यते ॥ ४ ॥

अथ पञ्चमस्य श्लोकस्यावतरणिकां करोति 'अनेनच' इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे **'एवम्'** इति ।

**अत्र टीकाः—**

'सैषा' इति व्याचष्टे 'यस्याः' इति । उपालम्भः–मृषा प्रत्याख्यानम्,

---

1 शिवे—C.

2 Should it be यत उभयेन्द्रिय— ?

कृतः, सा उपपत्त्या स्थापिता। यतः संविद्रूपादान्तरात् प्रभृति इन्द्रियगोचरतया बहिष्पर्यन्ततया स्थितिराभासनारूपा, तत एव वेद्यात्मककर्मालिङ्गनेन सक्रमा तावदुपपन्ना, कर्तृकर्मैकाश्रयतादात्म्याच्च एका। स चैक आश्रयः संविद्रूपत्वेन स्वच्छत्वस्वतन्त्रत्वाभ्यामुभयमप्यन्तर्बहीरूपं सहत इति ॥ ५ ॥

---

क्रियया सह योजनार्थं पुनः परामर्शं करोति 'सा' इति। **उपपादिता** इति पदं व्याचष्टे 'उपपत्त्या' इति। उपपत्त्या–युक्त्या, स्थापिता–स्वयमेव स्थितवती सती तत्समर्थाचरणविषयतां नीता। **अन्तर्बहिः स्थितिः** इति विशेषणं हेतुत्वेन व्याचष्टे 'यतः' इति। '**स्थिति**' पदं व्याचष्टे **आभासनारूपा** इति। सत्ता यस्याः सेति शेषः। तत्र संविद्रूपस्याभासना 'अहम्' इति, बाह्यस्य तु करणरूपेति क्रमो ज्ञेयः। एतद्धेतुत्वेन '**सक्रमा**' इति पदं व्याचष्टे 'तत एव' इति। वेद्यात्मकम्–वद्यरूपं यत्कर्म–कार्यम्, तस्यालिङ्गनेन, बहिर्विषयीकरणेनेत्यर्थः। 'तावदुपपन्ना' इत्यध्याहृतेन पारमार्थिकत्वनिवारणं कृतम्[1], अन्यथा व्याख्यास्यमानैकत्वायोगात्। **एका** इति **एकस्य** इति च पदं व्याचष्टे कर्तृकर्म इति। ननु कोऽसौ कर्तृकर्मरूप एक आश्रयः येन तादात्म्यं[2] भजते इत्यपेक्षायाम् '**उभय**' इति व्याचष्टे 'स चैक' इति। संविद्व्यतिरेकेण स्वच्छत्वस्वतन्त्रतयोरयुक्ततामपेक्ष्य 'संविद्रूपत्वेन' इत्युक्तम्। '**उभय**' इति पदं व्याचष्टे 'अन्त' इति। तत्र स्वच्छत्वेनान्तारूपत्वम् स्वतन्त्रत्वेन बहीरूपत्वमिति क्रमः। आन्तरत्वं हि सारत्वं तच्च सूक्ष्मस्यैव संभवति, सूक्ष्मत्वस्य परा काष्ठा च सत्त्वेऽप्यभानमेव। तच्च चिद्रूपस्यातिशुद्धस्फटिकदर्पणन्यायेन[3] स्फुटमेव। स्वतन्त्रत्वं च स्वेच्छया सर्वकारित्वम्, तच्चात्र सर्वान्तरत्वेऽपि बहिर्भावासादनमेव। स्वेच्छया नीचयोग्येऽपि कर्मणि प्रवृत्तो हि सम्राट् स्वतन्त्र उच्यते इति सर्वमनवद्यम्। 'सहते' इति, सर्वसहत्वादिति भावः। तदुक्तम्—

"अस्य ब्रह्मण ईदृगेव महिमा यत्सर्वरूपं वपुः"

इति। 'इति' शब्दः श्लोकव्याख्यासमाप्तौ ॥५॥

---

1 पारमार्थिकनिवारणम्—C.

2 'क्रिया' as the subject of भजते seems to be understood here. 3 स्फाटिकदर्पणन्यायेन—C.

ननु भवतु घटादावेवं, यत्र तु बीजाङ्कुरादौ चेतनानुप्रवेशो न दृश्यते तत्र कथं बीजस्यैवाङ्कुरः कार्यो न भवति ? इत्याशङ्क्याह

बहिस्तस्यैव तत्कार्यं यदन्तर्यदपेक्षया ।
प्रमात्रपेक्षया चोक्ता द्वयी बाह्यान्तरस्थितिः ॥ ६ ॥
मातैव कारणं तेन स चाभासद्वयस्थितौ ।
कार्यस्य स्थित एवैकस्तदेकस्य क्रियोदिता ॥ ७ ॥

अन्तराभासमानस्य तथारूपापरित्यागेनैव बहिराभासनं निर्माणम् । ततश्च यद् वस्तु यमपेक्ष्य अन्तरित्युक्तं तद् वस्तु तस्यैव आन्तररूपविपरिवृत्तिमात्रस्य[1] बहिष्कार्यं बहिष्करणार्हं भवति । संविद्रूपं च

अथ षष्ठस्य सप्तमस्य च श्लोकस्यावतरणिकां करोति ननु इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे **'बहिः'** इति ।

अत्र टीकाः—

श्लोकद्वयं व्याख्यातुं प्रक्रियां करोति 'अन्तः' इति । **अन्तराभासमानस्य**—मृद्रूपत्वेन मृदन्तराभासमानस्य घटस्य, **तथारूपापरित्यागेन**—आन्तररूपापरित्यागेन, घटो हि घटभावेऽपि मृत्त्वं न जहात्येव, न तु त्यागेन, **बहिराभासनम्**—मृद्व्यतिरिक्ततयाभासनम्, 'घटोऽयम्' इति आभासनम् इति यावत् । **निर्माणम्**—करणम्, भवति । नन्वेवं भवतु ततः किमित्यपेक्षायां प्रथमे श्लोके योजनां करोति **'ततश्च'** इति । **ततश्च**—ततो हेतोश्च, **इत्युक्तम्**—इति कथितम् । **तद्वस्तु**—घटाख्यं वस्तु, **तस्यैव**—मृद्रूपस्य भावस्यैव, नत्वन्यस्य कस्यापि । सूत्रे व्यवहितत्वेन स्थितमपि **'बहिः'** इति **"कार्यम्"** इति च पदद्वयं संयोज्य व्याचष्टे **'बहिष्कार्यम्'** इति । अत्र पर्यायमाह **बहिष्करणार्हम्** इति, अर्हे कृत्यप्रत्ययः । तस्य **कीदृशस्य ?** आन्तररूपेण, भावप्रधानो निर्देशः, आन्तररूपत्वेन सारत्वेन, **विशेषेण** परितः वृत्तिमात्रम्—केवलं वर्तनं यस्य तादृशस्य, घटस्य ह्यान्तरं रूपं मृदेव । एतेन पूर्वार्धं गतव्याख्यम् । नन्वेवं भवतु ततः किम् इत्यपेक्षायामुत्तरार्धं व्याचष्टे **"संविद्रूपञ्च"** इति ।

1 आन्तरवस्तुरूपविपरिवृत्तिमात्रस्य बहिष्करणार्हं भवति । K. S. S.

प्रमातारमपेक्ष्य अन्तराभासिनो भावास्तदपेक्षयैव बाह्याभासा इति तेनैव एतेषां[1] बहिष्करणाभासनं[2] युक्तम्।

ततश्च प्रमातैव कारणं भवति न जडः। ह्यर्थे चः। यस्मात् स प्रमाता कार्यस्यान्तर्बहिराभासनद्वयनिमित्ततया स्थितस्तेन विना तदपेक्षस्याभासद्वयस्यानुपपत्तेः, तस्मादेकस्य प्रमातुरेव न तु कथंचित् जडस्य उदिता प्रसाधितरूपा क्रिया निर्मातृता भवतीति ॥ ७ ॥

---

अन्तराभासिनः—इच्छाविषयत्वान्यथानुपपत्त्या 'प्रागिवार्थः' इत्यत्रोक्तन्यायेन वा ऐकात्म्येन भासनशीलाः, भावाः—सर्वे पदार्थाः, तदपेक्षयैव—संविद्रूपमात्रपेक्षयैव[3]। योग्यतया पूर्वार्धोक्तस्य वस्तुनोऽत्रापि योजनां करोति 'इति' इति। इति—अतः कारणात्, तेनैव—आन्तररूपत्वेन स्थितेन प्रमात्रैव, एतेषाम्—भासमानानां सर्वेषां भावानाम्, बहिष्करणाभासनं युक्तम् भवति।

फलितं कथयन् द्वितीयमपि श्लोकं व्याचष्टे 'ततश्च' इत्यादि। 'तेन' इति व्याचष्टे ततश्च इति। "मातैव" इति व्याचष्टे 'प्रमातैव' इति। एवशब्दव्यावर्त्यं कथयति 'न जडः' इति। 'सचाभासद्वयस्थितौ' इत्यादेर्योजनां कर्तुमाह 'ह्यर्थे' इति, चः—स च इत्यत्र स्थितः च शब्दः, ह्यर्थे—हि—शब्दार्थे। योजनां करोति 'यस्मात्' इति। 'सः' इति व्याचष्टे प्रमाता इति। कार्यस्य इति निगदव्याख्यातम्। आभासद्वयस्थितौ इति व्याचष्टे अन्तः इति। सप्तमीयोजनां करोति निमित्ततया इति। एतेन निमित्तसप्तमीयम् इति द्योतितम्। तत् इति व्याचष्टे तस्मात् इति। एकस्यैव इति व्याचष्टे प्रमातुरेव। एवकारव्यावर्त्यमाह न तु इति। उदिता इति व्याचष्टे प्रसाधित इति, प्रसाधितरूपा—पूर्वं प्रसाधितस्वरूपा। क्रिया इति पदं व्याचष्टे निर्मातृता इति। भवति इति शेषत्वेनाक्षिप्तम्। इति शब्दः श्लोकद्वयव्याख्यासमाप्तौ।

एवमत्र श्लोकद्वये योजना। तस्यैव तद्बहिष्कार्यम्—स्वतो बहिः कार्यत्वेन भासनयोग्यं भवति। तस्य कस्य ? तत् किम् ? यदपेक्षया,

---

1 तेषाम्—K. S. S.

2 बहिष्करणावभासनम्—K. S. S.

3 संविद्रूपमात्रापेक्षया—C.

एतदेव द्रढयति

अत एवाङ्कुरेऽपीष्टो निमित्तं परमेश्वरः ।
तदन्यस्यापि बीजादेर्हेतुता नोपपद्यते ॥ ८ ॥

यत एवं चेतन एव निर्माता, अत एव नैयायिकादिभिरङ्कुरादौ

---

यस्मिन्निति यावत्, यदन्तः भवति । पण्डितैः द्वयी-द्विरूपा बाह्यान्तरस्थितिः प्रमात्रपेक्षयोक्ता-प्रमातुरेव, तद्व्यतिरिक्तस्यान्यस्याभावात् । ततश्च प्रमातृकार्यत्वमेव सर्वेषां भावानामितिभावः। तेन-ततः कारणात्, मातैव-प्रमातैव, भावानां कारणं भवति । च-यस्मात्, सः-एकः प्रमातैव, कार्यस्य आभासद्वयस्थितौ[1] कारणम्-बाह्यान्तरस्थितिनिमित्तम् उक्तः । तत्-ततः कारणात्, उदिता-पूर्वं साधिता, क्रिया एकस्य-प्रमातुः संबन्धिनी भवति । अन्यनिमित्तताभासनस्यापि स्वप्ने घटे कुलालनिर्मीयमानताभानस्येव प्रमातृहेतुताऽनपायात् । न हि प्रमात्राऽगृहीतो हेतुर्हेतुर्भवतीति भावः इति ॥ ६ ॥ ७ ॥

अथाष्टमस्य[2] श्लोकस्य अवतरणिकां विनैव व्याख्यां कर्तुमुपन्यासं करोति **अत एव** इति ।

अत्र टीकाः—

**अत एव** इति व्याचष्टे **यत एवम्** इति । **एवम्**—उक्तप्रकारेण, **निर्माता**–कर्ता, कारणमिति यावत्,. **नैयायिकादिभिः** इत्यस्य शेषत्वेन अध्याहारः । 'आदि' शब्देन वैशेषिकादिग्रहणम् । **इष्टः** इति निगद-

---

1 बाह्यान्तरस्थितौ—C.

The योजना of the 7th verse begins with 'तेन'. There is no word like 'बाह्यान्तरस्थितौ' in this verse. Instead there is 'आभासद्वयस्थितौ' which means the same thing. 'बाह्यान्तरस्थितौ' probably came in through confusion with 'बाह्यान्तरस्थितिः' of the previous verse.

2 सप्तमस्य-C. It is obviously a mistake, as the seventh verse has just been explained.

बुद्धिमानेव परमेश्वरो हेतुत्वेन इष्टः । ननु तैः निमित्तकारणतास्य अङ्गीकृता क्रियाविभागादिक्रमायातपरमाण्वादिद्वारकतया, समवायिकारणनिजावयवारम्भपरम्परया तु तत ईश्वरादन्यस्यापि बीजभूमिजलादेर्हेतुता कथिता । सत्यम् कथिता, सा तु नोपपद्यते, उक्तयुक्त्या जडस्य हेतुतायोगात्; ततश्चेश्वर एव बीजभूमिजलाभाससाहित्येनाङ्कुरात्मना भासते,-इतीयानत्र परमार्थः ॥ ८ ॥

ननुपरिदृष्टबीजादिव्यतिरिक्तबुद्धिमत्कारणकल्पनेन विना किमुपरुध्यत इति परस्य भ्रान्तिं भिन्दन्नाह

---

व्याख्यातम् । एतेन पूर्वार्धव्याख्या संपन्ना । अथोत्तरार्धं व्याख्यातुमवतरणिकां करोति ननु इति । तु व्यतिरेके, तैः—नैयायिकादिभिः अस्य—ईश्वरस्य, क्रियाविभागादिक्रमेण—पूर्वं क्रिया, ततो विभागः, ततः पूर्वसंयोगनिवृत्तिः, तत उत्तरसंयोगोत्पादादिरितिक्रमेण, आयाता या परमाण्वादिद्वारकता—परमाणुहेतुता, "आदि" शब्देन द्व्यणुकहेतुता, तया सिद्धया, समवायिकारणभूता ये निजावयवास्तैर्या आरम्भपरम्परा—द्व्यणुकाद्यारम्भपङ्क्तिः तया हेतुभूतया, तत ईश्वरात्—तस्मादीश्वरात्, अन्यस्यापि—व्यतिरिक्तस्यापि, बीजभूमिजलादेर्हेतुता कथिता, नहीश्वरस्य व्यापकस्य क्रियाविभागादि युज्यते इति भावः । एवं प्रश्नरीत्यावतरणिकां कृत्वोत्तररीत्योत्तरार्धं व्याचष्टे 'सत्यम्' इति । सर्वं वाक्यं सावधारणमिति न्यायेन कथितैव इति योजनीयम् । 'एव' शब्द व्यावर्त्यमाह "सा तु" इति । सा—बीजादिनिमित्तता । एतेन **'हेतुता'** इत्यस्य व्याख्या । 'उपपद्यते' इति निगदव्याख्यातम् । स्पष्टत्वेन नान्यद् व्याख्यातम् । अत्र हेतुमाह 'उक्त' इति । एतच्च क्षित्यादेः परमार्थतः स्थितां चेतनतामनपेक्ष्योक्तम् । अर्थबुद्ध्याविष्टं शिष्यं प्रत्येवमुक्तम् । फलितरीत्या सिद्धान्तं कथयति ततश्च' इति । साहित्येन—सहिततया, तैः सह समेत्येति यावत् । अङ्कुरात्मना—बीजादिकार्यतया प्रसिद्धाङ्कुरभावेन, इयान्—एतावन्मात्रम्, परमार्थः—सत्यवस्तु ॥ ८ ॥

अथ नवमस्य श्लोकस्य व्याख्यां करोति 'ननु' इति ।

अत्र टीका:—

उपरुध्यते—प्रतिबध्यते, कर्मकर्तरि लकारः,परस्य—बौद्धस्य, भ्रान्तिम्—

तथा हि कुम्भकारोऽसावैश्वर्यैव व्यवस्थया ।
तत्तन्मृदादिसंस्कारक्रमेण जनयेद् घटम् ॥ ६ ॥

'तथा हि' इति निदर्शनोपक्रमेण व्याप्तिरेवंभूतैव दृष्टा,-इति द्रढयति। जडा हेतवश्चेतनप्रेरिताः कार्यं कुर्वन्ति, मृदादयो यदि हि सन्निधानमात्रेण[1] विदध्युः कुम्भकारेण किमत्र कृत्यम् । शिविकस्तूपकादिपरम्परया ते जनयन्ति; सा च कुम्भकारायत्ता इति चेत् सिद्धं नः साध्यम्-शिविकसंपादनेऽपि ते चेतनप्रेरणामपेक्षन्ते इति । तज्जडकारणानां चेतनप्रेरणामन्तरेण न कचित् कार्यकारित्वम् । यदि हि स्यात्

---

भ्रमम् , भिन्दन्—नाशयन् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे तथा हि' इति ।

अत्र टीकाः—

तथाहि इति व्याचष्टे "तथाहि" इति । निदर्शनोपक्रमेण-दृष्टान्तारम्भेण, 'दृढयति' इति, दृष्टान्तेनैव दार्ष्टान्तिकदृढत्वापादनात् इति भावः । श्लोकं व्याख्यातुं प्रक्रियां करोति 'जडाः' इति। चेतनेन-कुम्भकारादिना प्रेरिताः । कार्यम्-घटादिकम् । के ते जडा इत्यपेक्षायामाह मृदादयः इति । अत्र समर्थनं करोति 'यदि हि' इति । सन्निधानमात्रेण—चेतनप्रेरणारहितेन सन्निधानेन । विदध्युः-कुर्युः । अत्र-अस्मिन्घटे, कृत्यम्-कार्यम्, । अत्र शिष्यः प्रश्नं शङ्कते शिविक इति । ते-मृदादयः, सा च, शिविकस्तूपकादिपरम्परा च, कुम्भकारायत्ता, घटापेक्षया प्रथमोत्पादादिति भावः । शङ्किते उत्तरमाह सिद्धम् इति, साध्यम्-साधयितुमिष्टं सर्वत्र चेतनकर्तृत्वम् । तदेव दर्शयति शिविक इति । शिविकसम्पादने—प्रथमभाविशिविकाख्याकारकरणे, ते-मृदादयः, 'इति' शब्दः सिद्धसाध्यदर्शनसमाप्तौ । 'अपि' शब्देन यत्रापूर्णघटरूपशिविकसंपादने चेतनापेक्षा तत्र घटकरणे तदपेक्षायाः का चिन्तेति दण्डापूपिकान्यायः सूचितः । फलितं कथयति 'तत्' इति, कचित्-कुत्रापि देशे काले वा । व्यतिरेके व्याघातमाह यदि हि इति । स्यात् इति, समानन्या-

---

1 यदि सन्निधिमात्रेण—K. S. S.

मृदादीनामपि स्यात्, इति एकान्त एषः। ततश्च यत् अचेतनं कार्यकारि तत् चेतनापेक्षं मृदादय इव, तथा च बीजादि,-इति स्वभावः। अचेतनकार्यकारित्वं हि कादाचित्कत्वात् सनिमित्तम्, न चान्यदस्य निमित्तमुपपद्यते अनुपलम्भात्, इति[1] तत् चेतनप्रेरणं यदि न निमित्तीकुर्यात् व्यापकविरुद्धम[2]निमित्तकत्वं प्रसज्येत; न च युक्तं तत्, मृदादावपि तस्यै[3]व प्रसङ्गात्, इति सिद्धा व्याप्तिः। अतश्च कुम्भकदेव

यत्वादितिभावः। सिद्धमभीप्सितं संग्रहेण कथयति 'इति' इति। इति-अतः कारणात्, एष एकान्तः—निश्चयो भवति। जडानां चेतनापेक्षत्वे न कोऽपि सन्देहोऽस्तीतिभावः। अत्र फलितमाह ततश्च इति। तथा च-यतोऽचेतनं कार्यकारि च अतश्चेतनापेक्षम् इति स्वयमेव योजनीयम्। इति स्वभावः-अयं स्वभावो भवति। न रूपादिसिद्धम् भवतीति भावः। कथमित्यपेक्षायामत्र समर्थनं करोति अचेतन इति। कादाचित्कत्वात्—कदाचिद्भवत्वात्, अनन्यथासिद्धनियतभाव्यन्यचेतनसन्निधिकाल एव भवनशीलत्वादिति यावत्। ननु तन्निमित्तं चेतनव्यतिरिक्तमेव भवतु इत्यत आह 'न च' इति। अन्यत्-चेतनव्यतिरिक्तं किमपि वस्तु, अस्य-अचेतनकार्यकारित्वस्य, कुतो नोपपद्यत इत्यत आह अनुपलम्भात् इति। नह्यनुपलब्धस्योपपन्नत्वं युक्तमिति भावः। इति-अतः कारणात्, तत्-अचेतनकार्यकारित्वम्, यदि चेतनप्रेरणां न निमित्तीकुर्यात् तदा तस्य अनिमित्तकत्वम्—निमित्तरहितत्वम् प्रसज्येत। अनिमित्तकत्वं कीदृशम्? व्यापकविरुद्धम्, व्यापकेन-चेतनापेक्षारूपेण, विरुद्धम्-विरोधयुक्तम्, तेन बाध्यमानमिति यावत्। नह्यनिमित्तस्य सापेक्षत्वं युक्तमिति भावः। धूमेनाग्न्यनुमानेन चाग्निदेशगतं शीतं व्यापकविरुद्धम्। ननु व्यापकविरुद्धमप्यनिमित्तकत्वमत्र भवतु इत्यत आह न च इति। तत्-अनिमित्तकत्वम्। तस्यैव-अनिमित्तत्वस्यैव, प्रसङ्गात्—अनिष्टतया प्राप्तेः। नहि मृदादि चेतनानपेक्षं दृश्यत इति भावः। फलितमाह 'इति' इति। इति-अतः कारणात्, अचेतनकार्यकारित्वचेतनापेक्षत्वयोः व्याप्तिः सिद्धा भवति।

1 इति चेतनप्रेरणम्—K. S. S.

2 व्यापकविरुद्धमन्यनिमित्तकत्वम्—K. S. S.

3 तस्य प्रसङ्गात्—K. S. S.

तत्रेश्वरः । तदेतदाह–ईश्वररूपया[1] व्यवस्थया यः स स मृद्दण्डचक्रादीनां संस्कारः, मृदो मर्दनं, दण्डस्य प्रगुणत्वं, चक्रस्य परिवर्तनम् इत्यादिः, तदारम्भो यः क्रमः शिविकस्तूपकादिरूपः, तेन घटं नियोगतो जनयति, नान्यथा,–नियोगे लिङ्[2] । किं च यदि न क्रुध्यते वस्तुतः कुम्भकारोऽपि ऐश्वर्यैव स्वतन्त्रविश्वात्मतारूपया व्यवस्थया मृदादि-

---

अत्रापि फलितं कथयति 'अतश्च' इति । तत्र–घटे, मृदादिप्रेरकत्वादिति भावः । उक्तप्रक्रियावष्टम्भेन श्लोकस्य व्याख्याकरणं प्रतिजानीते 'तदेतदाह' इति । केनाहेत्यपेक्षायां श्लोकं व्याख्यातुमारभते 'ईश्वर' इति । कुम्भकार इति पदं 'कुम्भकृदेव तत्रेश्वरः' इत्यनेन कृतव्याख्यम् । 'ऐश्वर्यैव व्यवस्थया' इति व्याचष्टे ईश्वर इति । ईश्वर इव रूपं यस्या सा ईश्वररूपा तया, व्यवस्थया–रचनया, ईश्वरसम्बन्धिन्या व्यवस्थया, ईश्वरवदिति यावत् । 'आदि' शब्देन सूत्रादीनां ग्रहणम् । संस्कारमेव क्रमेण दर्शयति 'मृदः' इति । मर्दनम्–पिण्डीकरणयोग्यतासंपादनम् । प्रगुणत्वम्–चक्ररन्ध्रे ऋजुतया स्थापनम् । 'आदि' शब्देन रज्जोर्वेष्टनादेर्ग्रहणम् । तेन–संस्कारेण आरम्भो यस्य सः तदारम्भः । क्रमस्य स्वरूपं दर्शयति 'शिविक' इति । ततीयायोजनां करोति 'तेन' इति । लिङर्थमाह 'नियोगतः' इति । नियोगतः, नियमेनेत्यर्थः । नियोगव्यावर्त्यमाह 'नान्यथा' इति । ननु नियोगोऽत्र कस्यार्थः इत्यत आह 'नियोगे' इति । एतेन दृष्टान्तवाक्यत्वमस्य दृढीकृतम् । दार्ष्टान्तिकयोजनं तु स्वयमेव निपुणः करिष्यत्येव । तथा चैवमत्र योजना । असौ मृदादिकं प्रति प्रेरकत्वेन तदीश्वरतया स्थितः कुम्भकारः, ऐश्वर्या व्यवस्थयैव तत्तन्मृदादिसंस्कारक्रमेण घटं जनयेत्–नियमेन जनयति इति, तथेश्वरोऽप्यङ्कुरादीन् जनयतीति दार्ष्टान्तिकयोजना स्वयमेव कार्या । अत्र च साध्यस्यापीश्वरस्योपमानीकरणं शास्त्रमपेक्ष्य कृतं न विरोधावहम् । 'ननु यद्येवं तर्हि दृष्टान्ते घटे कुम्भकारस्यैव परमार्थतः कर्तृत्वमायातमितीश्वरस्य सर्वकर्तृत्वं न युक्तमित्यपेक्षायामस्यैव श्लोकस्य द्वितीयां व्याख्यां कर्तुमवतरणिकां करोति 'किञ्च' इति । ऐश्वर्या–ईश्वरे परमार्थतः स्थितया,

---

1 ईश्वररूपा या व्यवस्था तया—K. S. S.

2 नान्यथा,–इति नियोगे लिङ्—K. S. S.

संस्कारापेक्षया प्रदर्शितनियत्यभिधाननिजशक्तिविजृम्भातो घट जनयेत्; अन्यथा अचेतना मृदादयः कथं कुम्भकारेच्छामनुरुध्येरन्, "तन्तवोऽपि वा पटसंपादनेच्छां किं नाद्रियेरन्।" तदेतदपि उक्तम् अनेनैव सूत्रेण 'तथा हि' इति। नन्वेवं कुम्भकृतो नास्ति कर्तृत्वम्,— इति समुत्सीदेत् धर्माधर्मव्यवस्था। यदि प्रत्येषि युक्त्यागमयोः तदेवमेव। तथापि समस्तेतरनिर्माणमध्य एव इदमपि परमेश्वरेणैव निर्मितं यदविचलस्तस्य कुम्भकारपशोर्मिथ्याकर्तृत्वाभिमानः प्रतिभुव इव अधमर्णताभिमानः। यदि पुनरीश्वरस्येच्छैव इयमीदृशी 'मा अस्य

---

अनुरुध्येरन्–अनुगच्छेयुः। ईश्वरकृतया नियत्यैव कुम्भकारोऽपि मृदादिक घटकरणे प्रेरयितुं शक्नोतीति भावः। एवमत्र योजना। असौ—ईश्वरप्रेरितः कुम्भकारः ईश्वरस्थितया व्यवस्थयैव घटं जनयेत् न[1] स्वतन्त्रतया। व्यवस्थया कीदृश्या? तत्तन्मृदादिसंस्कारक्रमेण, प्रदर्शितनियतिशक्तिविजृम्भारूपयेत्यर्थः। युक्तत्वेनास्य पदस्याध्याहारः। अन्यथा स कुम्भकारः घटकरणे तन्तूनपि प्रेरयेदिति भावः। नन्वियं व्याख्या कस्य श्लोकस्य कृतेत्यत आह 'तदेतत्' इति। केन सूत्रेणेत्यपेक्षायां सूत्रं भागेन दर्शयति 'तथाहि' इति। तृतीयामपि व्याख्यां कर्तुमवतरणिकां करोति 'नन्वेवम्' इति। एवम्—उक्तप्रकारेण, समुत्सीदेत्–नश्येत्। इति, सर्वत्रेश्वरकर्तृत्वाभिमानमभिनीय सर्वे उत्पथगामिन एव भवेयुरिति भावः। धर्माधर्मव्यवस्था–धर्माधर्ममर्यादा। उत्तरमाह 'यदि' इति। यदि युक्त्यागमयोः—युक्तौ आगमे च, प्रत्येषि–प्रतीतिं करोषि, तदेवमेव भवति। ननु तर्हि धर्माधर्मव्यवस्थानाशः कथं निवार्यते इत्यपेक्षायामवतरणिकाविषयीकृतं श्लोकं व्याचष्टे 'तथापि' इति। समस्तं यत् इतरत्—स्वस्माद् व्यतिरिक्तं भावजातम्, तस्य यन्निर्माणं तस्य मध्ये। इदं किमित्यपेक्षायामाह 'यत्' इति। यस्त्वधमर्णमरणादिवशेन[2] प्रतिभुवोऽधमर्णत्वाभिमानः स इह न विवक्षितः, तस्य सत्यरूपत्वात्। ननु तर्हि कदास्यासावभिमानो नश्यति इत्यत आह 'यदि' इति। ईदृशी केत्यपेक्षायामाह 'मा-अस्य'

---

1 न is omitted in C.

2 यस्त्वधमर्णादि—C.

अभिमानोऽयम् उद्गमत्' इति, तदा नासौ कर्ता कश्चित् । तदिदमपि उक्तं सूत्रेणैव 'तथा हि' इति । कुम्भकारस्यापि 'मृदादिसंस्कार क्रमेण किं घटं जनयामि, उत न जनयामि' इति य एकपक्षनिश्चयाय संप्रश्नात्मा विचारः, स ईश्वरसंबन्धिन एव विविधात् स्वरूपा-वच्छादनतत्त्वप्रकाशनरूपात् अवस्थानात्,-इति संप्रश्ने लिङ् । तस्मात् वस्तुत 'ईश्वर एव सर्वत्र कर्ता, अहं च स एव' इति न परिमिते

---

इति । अस्य—कुम्भकारस्य, अभिमानः-घटकर्ताऽहमित्यभिमानः मा उद्गमत्-मा उदेतु । 'इति' शब्दः ईश्वरेच्छासमाप्तौ । असौ-कुम्भकारः, ईश्वर एव प्रमातृषु कर्तृताऽभिमानमुत्पाद्य धर्माधर्मव्यवस्थां रक्षतीति भावः । ननु तर्हि गलिताभिमानानामुत्पथगमनमेव प्राप्नोति इति चेत् अहो नैपुण्यम्, गलिताभिमानानां पन्था अपि विस्मृतिमेव गच्छति इति का कथोत्पथगमनस्य । परन्तु ते पुरातनसंस्कारवशेन प्रवाहागतं देशकालाविरुद्धम् कर्मैव देहस्थितिं तावत्कुर्वन्तीत्यलं प्रपञ्चेन । नन्वियं व्याख्या कुत्र कृतेत्यपेक्षायामाह 'तदिदम्' इति । एवमत्र योजना । असौ मिथ्याभिमानेन युक्तः कुम्भकारः, ऐश्वर्या व्यव-स्थया-ईश्वरसम्बन्धिन्या इच्छयैव, तत्तन्मृदादिसंस्कारक्रमेण घटं जनयेत्—घट-जननाभिमानं कुर्यात्, अभिमानाभावे कर्तृत्वाभावादिति भावः । अत्र व्याख्या त्रयेऽपि नियोग एव लिङ् । अथ चतुर्थीं व्याख्यां कर्तुमवतरणिकां करोति 'कुम्भ-कारस्यापि' इति । संप्रश्नात्मा-संप्रश्नरूपः । नन्वत्र संप्रश्नः कस्य पदस्यार्थ इत्यत आह 'संप्रश्ने' इति । एवमत्र योजना । असौ—घटकरणे उद्युक्तः कुम्भकारः विविधया नानारूपया, स्वरूपावच्छादनतत्त्वप्रकाशनरूपया[1], अव-स्थया-अवस्थानेन, तत्तन्मृदादिसंस्कारक्रमेण घटं जनयेत्-घटजननं प्रति निश्चितः, एकपक्षनिश्चित इति यावत्, भवतीति । एतेन सिद्धं वस्त्ववधान विषयीकार्यत्वेनादिशति 'तस्मात्' इति । तस्मात्-ततः कारणात्, ईश्वर एव सर्वत्र कर्ता भवति अन्यकर्तृत्वस्यापि परमार्थतस्तत्रैव विश्रान्तेः । अहं च स एव—अस्मि तन्निष्ठकर्तृत्वादियोगात्, दाहकत्वशक्तियुक्तोऽ-ग्निकणोऽपि हि अग्निरेवेति भावः । इति अहं परिमिते—एतद्देहविषये एव,

---

1 स्वरूपावच्छानन्तत्त्व—C.

कर्ता, अपि तु सर्वत्र कर्ता,–इति एतावति सर्वथा हृदयेन अवधातव्यम् इति स्थितम् ॥ ९ ॥

[1]दृश्यतेऽस्य चेतनस्य स्वातन्त्र्यमेव सर्वत्र जृम्भमाणं जडानपि यत् स्वात्मतामापादयति, न तु जडानां वस्त्वन्तराविष्करणे सामर्थ्यम्,— इति यदुक्तं, तत् सर्ववादिप्रसिद्धनिदर्शनेन द्रढयति

योगिनामपि मृद्बीजे विनैवेच्छावशेन तत् ।
घटादि जायते तत्तत्स्थिरस्वार्थक्रियाकरम् ॥ १० ॥

यदिह चेतनप्रेरितं कारणम् इति प्रसिद्धं मृदादि, यच्च तदनपेक्षं

---

कायकर्ता नास्मि, अपि तु सर्वत्र कर्ता अस्मि ईश्वरकर्तृत्वेनैव तत्त्वात्, इति एतावन्मात्रे अवधातव्यम्—अवधानं कार्यम्। तदुक्तम् :—

[2]'कर्मण्यकर्म यः पश्यत्यकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु' इति ॥

इति—एतत्, स्थितम्–स्थितियुक्तं भवति ॥ ९ ॥

अथ दशमस्य श्लोकस्यावतरणिकां करोति 'दृश्यतेऽस्य' इति।

अत्र टीकाः—

चेतनस्यैव इति योजना। सर्वत्र–सर्वेषु जडवस्तुषु, स्वात्मताम्–स्वातन्त्र्यरूपां चेतनताम्, आपादयति–प्रापयति। ननु तेषां सा चेतनता स्वकीयैवास्त्वित्यत आह न तु इति। द्रढयति–दृढीकरोति। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे योगिनाम् इति।

अत्र टीकाः—

व्यतिरेकभङ्ग्या श्लोकं व्याख्यातुं प्रक्रियां करोति 'यदिह' इति। कारणमिति, कारणतयेत्यर्थः। तदनपेक्षम्–चेतनानपेक्षम्। तत्–तदा,

---

1 दृश्यते चास्य—K. S. S.

2 The usual reading of this verse is :

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः

(श्रीमद्भगवद्गीता IV, 18)

बीजादि घटादेरङ्कुरादेश्च जनकं, तदेव यदि परमार्थतः कारणं स्यात् तत् तद्व्यतिरेकेण घटाङ्कुरादेः कथं योगीच्छामात्रेण जन्म स्यात्, अकारणकत्वप्रसङ्गात्[1] तेषां वा अकारणत्वप्रसंगात्[2]। अथोच्यते—अन्ये एव ते घटाङ्कुरादयो मृद्बीजादिजन्याः, अन्ये एव च योगीच्छादिजन्याः,-इति, तत्रापि प्रबोध्यसे-विमर्शाभेदात् तावदभेद,-इति पूर्वमेव उक्तम्; तत्रापि योगी खलु अप्रतिहतेच्छः, तस्य च इच्छा तादृगेव घटो भवतु यो मृदादिकृतकुम्भसंभवभूयर्थक्रियाकरणचतुरवृत्तिरिति। तदेतदाह-तस्य तस्य स्थिरस्य अर्थक्रियान्तरानुबन्धिनः कालान्तरानुबन्धिनश्च स्वस्य आत्मीयस्थ अर्थक्रियाविशेषस्य करणे हेतुतच्छीलानुकूलरूपं घटादि जायते,-इति। ये त्वाहुः-नोपादानं विना घटाद्युत्पत्तिः, योगी तु इच्छया परमाणून् पश्यन् संघट्टयतीति।

---

तद्व्यतिरेकेण-मृद्बीजादिव्यतिरेकेण। कुतो न स्यादित्यपेक्षायां विकल्परीत्या हेतुद्वयमाह 'अकारणकत्व' इति। अकारणकत्वप्रसंगात्-घटाङ्कुरादेः कारणरहितत्वप्रसङ्गात्, वा-पक्षान्तरे, तेषाम्-मृदादीनाम्, अकारणत्वप्रसंगात्-घटाङ्कुरादीन् प्रति कारणत्वाभावप्रसंगात्। अत्र शिष्यः प्रश्नं शङ्कते 'अथोच्यते' इति। उत्तरमाह 'तत्रापि' इति। अन्यत्किञ्चिदपि कथयेत्यपेक्षायामाह 'तत्रापि' इति। तादृगेव, तादृश्येवेत्यर्थः। तादृक् का इत्यपेक्षायामाह 'घटो भवतु' इति। तत्तत् इत्यादि समस्तं पदं व्याचष्टे तस्य तस्य इत्यादि। तत्तत् इति व्याचष्टे 'तस्य तस्य'[3] इति। स्थिर इति व्याचष्टे अर्थक्रियान्तर इति। अस्या अर्थक्रियाया अन्याः अर्थक्रियाः-अर्थक्रियान्तराणि, तदनुबन्धिनः, तदनुवर्तिन इत्यर्थः। स्व इत्यवयवं व्याचष्टे आत्मीय इति। कृञो वाच्यमाह करणे इति। 'ट' प्रत्ययवाच्यमाह हेतु इति। अत्र तार्किकमतं प्रत्याख्यातुमुपन्यस्यति, 'ये त्वाहुः' इति। 'इति' शब्दः शङ्कितप्रश्नसमाप्तौ।

---

1 अकारणत्व प्रसङ्गात्—K. S. S.

2 अकारणत्वापत्तेः—K. S. S.

3 तत् तत् इति व्याचष्टे तस्य इति—C.

'तस्य' is an explanation of 'तत्तत्'. Another तस्य, therefore, is necessary, as printed.

ते वाच्याः–यदि खलु अन्वयव्यतिरेकागमादिपरिदृष्टः कार्यकारणभावो योगिषु न विपर्येति,–इति हृदयमावर्जयति वः तत् किं परमाणुग्रहेण; नो चेत् घटस्य कपालानि[1] शरीरस्य स्वावयवाः, तेषां निजं निजं प्रसिद्धं तृणशस्तिलशोऽपि अन्यथाभवनमसहमानं लौकिकमेव कारणम्, इति घटे मृद्दण्डचक्रादि, देहे स्त्रीपुरुषसंयोगादि उभयमपेक्ष्यं[2] परिदृष्टदीर्घतरकालपरिवासमिति। योगीच्छया तु समनन्तरोदितघट-देहादिसंभवो दुःसमर्थ एव। चेतन एव तु तथा तथा भवति। भगवान् भूरिभर्गो महादेवो नियत्यनुवर्तनोल्लङ्घनघनतरस्वातन्त्र्यः,–इत्यत्र पक्षे नियत्यनुवर्तिनः[3] लौकिके प्रसिद्धे कार्यकारणभावे स्वातन्त्र्यं,

---

अत्र प्रत्याख्यानं करोति ते वाच्याः इति। विपर्येति–व्यभिचरति। वो हृदय-मावर्जयति इति संबन्धः। परमाणुग्रहो ह्यन्वयव्यतिरेकादिसिद्धौ व्यभिचारार्थमेव कल्प्यत इति भावः। नो चेत्, यदि नावर्जयतीत्यर्थः। कपालानि कारणमिति शेषः। तेषाम्–कपालानामवयवानाञ्च, तृणशस्तिलशः, लेशेनापीत्यर्थः, अन्यथाभवनम्–व्यभिचारम्, अपेक्ष्यम्–अपेक्षणीयम्। उभयं कीदृशम्? परिदृष्टो दीर्घतरकालं परिवासः–कारणेनावस्थानं यस्य तादृशम्। दुःसमर्थ एव, समर्थयितुमशक्य एवेत्यर्थः। ननु त्वन्मतेऽपि दुःसमर्थ एवाऽसमर्थ इत्यत आह चेतन इति, तु–पक्षान्तरे, अस्मत्पक्षे इति यावत्। चेतन एव तथा तथा भवति—तत्तद्भावरूपेण स्फुरति, तथा च नायमर्थो दुःसमर्थः, न हि स्वतन्त्रस्य किमप्यशक्यमिति भावः। स्थूलदृष्टिशैवपक्षेऽपि विरोधाऽभावं कथयति 'भगवान्' इति। भगवान्—माहेश्वर्ययुक्तः, भूरिभर्गः—बहुतेजाः, महादेवः, नियतेः ये अनुवर्तनोल्लङ्घने तत्र स्वातन्त्र्यं यस्येदृशः भवति। इत्यत्र पक्षे–अस्मिन्पक्षे, नियत्यनुवर्तिनः[4], लौकिकस्येति यावत्। लौकिके प्रसिद्धे कार्यकारणभावे स्वातन्त्र्यं भवति। तु व्यतिरेके।

---

1 कपालादि—K. S. S.

2 सर्वमपेक्ष्यम्—K. S. S.

3 नियत्यनुवर्तिनि—K. S. S.

4 नियत्यनुकृतिनः—K. S. S.

तदुल्लङ्घनमाद्रियमाणस्य तु योगिप्रायप्रसिद्धे लोकोत्तरे,–इति न कश्चित् विरोधः। इयांश्च लोके एव। परमार्थतस्तु स एव क्रमाक्रमरूपविश्वसृष्ट्यादिकृत्यपञ्चकप्रपञ्चस्वभावः प्रकाशते। चेतनो हि स्वात्मदर्पणे भावान् प्रतिबिम्बवदाभासयति इति सिद्धान्तः। यदाह पूर्वगुरुः

'निरुपादानसंभारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने॥' ( स्तवचि० ९ श्लो० )

इति ॥ १० ॥

ननु यदि प्रसिद्धकारणोल्लङ्घनेनापि तत्कार्यविशेषतुल्यवृत्तान्येव[1] कार्याणि जायन्ते, भग्नास्तर्हि अनुमानकथाः। तथा हि कथमन्यदन्यत्र

---

तदुल्लङ्घनम्–नियत्युल्लङ्घनम्, आद्रियमाणस्य—आदरविषयतां नयतः, योगिन इति यावत्। योगिप्रायप्रसिद्धे–योगिषु प्रायेण प्रसिद्धे, अतएव लोकोत्तरे कार्यकारणभावे स्वातन्त्र्यं भवति। लौकिकभावेन च भगवतो महादेवस्यैव स्थितत्वादिति भावः। ननु तर्ह्यस्य पक्षस्य त्वत्पक्षात्को भेदः इत्यत आह 'इयांश्च' इति। इयांश्च–त्वत्पक्षे प्रोक्तं वस्तु च, लोक एव भवति भेदरूपत्वात्। ननु तर्हि परमार्थतः किमस्तीत्यत आह 'परमार्थतः' इति। स एव–भगवानेव, क्रमाक्रमरूपं यद्विश्वं तस्य यत्सृष्ट्यादिपञ्चकृत्यम्–सृष्टिस्थितिध्वंसपिधानानुग्रहरूपं कृत्यपञ्चकम्, तदेव स्वभावः–स्वरूपं यस्य तादृशः। प्रकाशते। तेषां मते भगवतः कृत्यपञ्चकव्यतिरिक्तत्वम्, अस्मन्मते तत्स्वरूपत्वमिति भावः। कथं प्रकाशते इत्यतो हेतुमाह 'चेतनो हि' इति। न च दर्पणात् प्रतिबिम्बस्य भेदो युक्त इति भावः। इति सिद्धान्तो भवति। अत्र दृष्टान्तत्वेन श्री भट्टनारायणवाक्यमुदाहरति यदाह इति ॥ १० ॥

अथैकादशश्लोकस्यावतरणिकां करोति 'ननु' इति।

अत्र टीकाः—

प्रसिद्धकारणानाम्–मृदादीनाम्, यत् उल्लङ्घनं तेन। तेभ्यः–प्रसिद्धकारणेभ्यः ये कार्यविशेषाः–घटादिरूपाः कार्यभेदाः, तेषां तुल्यं वृत्तं स्वरूपं येषां तानि। कथं भग्नाः इत्यपेक्षायां समर्थनमुपक्रमते 'तथा हि' इति। अन्यत्–मृदादि,

---

1 तत्कारणजन्यकार्य—K. S. S.

नियमवद्भवेत् इत्याशङ्क्य प्रामाणिकतरम्मन्यैस्तादात्म्यतदुत्पत्ती नियमनिदानमुपगतें। न हि निःस्वभावं वस्तु भवति, नापि भिन्नस्वभावं स्वभावभेदेन भेदात्। पर्यायशस्तत्स्वभावद्वयाभावे च निःस्वभावताप्रसङ्गात्। एवं निर्हेतुके भिन्नहेतुके च कार्ये वाच्यम्।

---

अन्यत्र–घटादौ, कथं भवेत्, सर्वभावानां स्वात्ममात्रपर्यवसानान्न भवेदिति भावः। इत्याशङ्क्य–एवं शिष्यकृतं प्रश्नं शङ्कित्वा, प्रामाणिकतरमात्मानं मन्यन्ते इति तादृशैः, न तु परमार्थतः प्रामाणिकतरैरित्यर्थः। योगिनिराकरणे तात्पर्यवत्त्वेन बौद्धैरिति यावत्। नियमनिदानम् नियमकारणम्, उपगते, अङ्गीकृते इत्यर्थः। तत्र तादात्म्यस्य नियमनिदानम्[1] "वृक्षोऽयं शिंशपात्वात्" इत्यत्र। अत्र हि वृक्षप्रतियोगिकः शिंशपाधर्मिको भेदः स्फुटतर एव। तदुत्पत्तिनियमनिदानम् 'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यादौ। अत्रापि अग्निप्रकृतिका धूमधर्मिणी उत्पत्तिः स्फुटैव। कथमेतदित्यपेक्षायां समर्थनं करोति 'न हि' इति। तत्र शून्यवादिनं प्रत्याह 'निःस्वभावम्' इति। हि–यस्मात्, वस्तु निःस्वभावं न भवति, वस्तुत्वायोगात्। क्षणिकवादिनं प्रत्याह 'नापि' इति। भेदात्, तस्यैव तस्माद् भेदापातादित्यर्थः। स्वभावभेदेनैव वस्तुभेद इति भावः। द्वितीयमपि प्रसङ्गं कथयति 'पर्यायशः' इति। पर्यायशः–क्रमेण, तस्य–भिन्नस्य, स्वभावद्वयस्य अभावे, निःस्वभावता प्रसङ्गात्, क्षणे क्षणे भिन्नं वस्तु हि पूर्वस्वभावस्य त्यागे उत्तरस्वभावस्य तावदनागमे[2] च क्रमेण अभावग्रस्तमेव भवेत् अथवा पूर्वस्वभावकाले उत्तरस्वभावस्याभावः उत्तरस्वभावकाले च पूर्वस्वभावस्य, ततश्च तस्य निःस्वभावत्वमेवागच्छेत्, न हि

---

1 Perhaps the idea would be clearer if the text were तादात्म्यस्य नियमनिदानत्वम् and तदुत्पत्तेर्नियमनिदानत्वम्। Such indeed is the text a little later : इति तादात्म्यस्य नियमनिदानत्वं समर्थितम्। तदुत्पत्तेर्नियमनिदानत्वं समर्थयितुम् etc.

2 पूर्वस्वभावस्य त्यागे उत्तरस्वभावस्य तावदनागमेन च—C. च is generally used to relate two words, which are in the same case. We have, therefore, amemded the text as printed.

उभयत्रापि च हेतुकृतैव व्यवस्था। स्वहेतुत एव हि शिंशपा वृक्षस्वभावाव्यभिचारिणी जाता, स्वहेतुतश्च हुतभुग्धूमजननस्वभावः, तदिदानीं नियत्युल्लङ्घिनि कार्यकारणभावे सर्वमिदं विघटेत। योगीच्छया हि शिंशपापि अवृक्षस्वभावा भवेत्, धूमे तु द्विगुणं चोद्यम्; अग्न्यादिसामग्री योगीच्छोद्भूता धूमं न जनयेत्, योगीच्छा वा अनग्निकं धूमम्,—इति न स्यादनुमानम्, अस्ति च तल्लोके, इत्याशङ्क्याह

योगिनिर्माणताभावे प्रमाणान्तरनिश्चिते।
कार्यं हेतुः स्वभावो वात एवोत्पत्तिमूलजः॥ ११॥

योगीच्छापि सर्वथा तादृशमेव न तु वृश्चिकगोमयादिसंभूतवृश्चिकादिन्यायेन कथंचित् रसवीर्यादिना भिन्नं कार्यं जनयति,—इति यत्

---

आगन्तुकस्य स्वभावत्वं युक्तम् इति भावः। सत्ता हि स्वभावः। एवञ्च यो यस्य स्वभावः स ततो न व्यभिचरति इति तादात्म्यस्य नियमनिदानत्वं समर्थितम्। तदुत्पत्तेः नियमनिदानत्वं समर्थयितुं स्वभावे प्रोक्तं न्यायं हेतावतिदिशति 'एवम्' इति। तत्र निर्हेतुकत्वे उत्पत्त्ययोगः, भिन्नहेतुकत्वे तु भेदापात इति पर्यायशः योज्यम्। एवञ्च यो यस्य हेतुः स ततो न व्यभिचरति इति उत्पत्तेरपि नियमनिदानत्वं समर्थितम्। तार्किकाभिमतम् उत्पत्तिमात्रस्य नियमनिदानत्वं कथयितुमाह 'उभयत्रापि' इति। व्यवस्था—नियमरूपा मर्यादा। कथमित्यपेक्षायामाह 'स्वहेतुतः' इति। फलितमाह 'तत्' इति। इदम्—पूर्वोक्तं प्रक्रियाजालम्, नियत्युल्लङ्घिनि—पूर्वोक्तनियमव्यभिचारिणि, विघटेत्—नश्येत्। कुत इत्यपेक्षायामाह 'योगीच्छया' इति। न हीच्छायाः कुत्राप्यभिघातो युक्त इति भावः। द्विगुणमेव चोद्यं दर्शयति 'अग्न्यादि' इति। धूमं न जनयेत् इति पूर्वेण संबन्धः। ननु मास्तु अनुमानमित्यत आह 'अस्ति च' इति। तत्—अनुमानम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'योगि' इति।

अत्र टीकाः—

'अतएव' इति व्याचष्टे 'योगी' इति। तादृशमेव—बाह्यकारणजनितसदृशमेव, तद्वदेवार्थक्रियाकरमिति यावत्। वृश्चिकात् गोमयादेश्च संभूता ये वृश्चिकादयः तेषां यो न्यायः तेन। 'आदि' शब्देन मलमूत्रादिजनितकीटादिग्रहणम्।

कथितमत एवास्मादेव हेतोः कार्यं वा धूमादि अग्न्याद्यनुमाने,[1] शिंश-पात्वादिस्वभावो वा वृक्षत्वाद्यनुमाने एवं हेतुर्भवति। यदि प्रमाणान्त-रेण लोकप्रसिद्ध्या योगिनिर्माणत्वस्याभावो निश्चितो भवति नान्यथा। अत एवानुमाने जन्मान्तराभ्यासलोकप्रसिद्ध्यादिकमवश्योपजीव्यम्, सा च श्रुतानुमानप्रज्ञयोर्बीजम्,—इति च ऋतंभराविषयमुवाच पत-

तत्र रसभिन्नत्वं गोमयाज्जातस्य वृश्चिकस्य, वीर्यभिन्नत्वं तु वृश्चिकाज्जातस्य इति क्रमो ज्ञेयः। न हि वृश्चिकाद् गोमयाच्च जातौ वृश्चिकौ सदृशौ भवतः रसस्य दुर्ब-लत्वात् वीर्यस्य तु अतिबलत्वात् इति। अर्थक्रिया तयोर्न सदृशीति भावः। 'कथितम्' इति, पूर्वश्लोके, **'कार्यम्'** इति व्याचष्टे 'धूमादि' इति। तत्कार्य कुत्र हेतुरित्यपेक्षायां सूत्रेऽनुक्तमपि वस्तु अध्याहृत्य कथयति **अग्न्याद्यनुमाने** इति। कदेत्यपेक्षायाम् **एवम्** इत्यस्याकांक्षां पूरयन् प्रथमार्धं व्याचष्टे **यदि** इति। **नान्यथा** इति, तत्र हि तेन न तत् कार्यं जनितं किन्तु योगिप्रभावतः तदिच्छा-मात्रेण तत्सम्पन्नमिति कथं तस्य तत्र हेतुत्वमिति भावः। एतदवष्टम्भेन अन्य-त्किञ्चिदपि पतञ्जलिशास्त्रप्रसिद्ध कथयति **अतएव** इति। यतो लोकप्रसिद्धेः अत्रावश्योपयोगित्वमत एव हेतोः, पतञ्जलिः-भगवान् अनन्तः, **अनुमाने जन्मान्तराभ्यासलोकप्रसिद्ध्यादिकम्**—बालस्य स्तन्यानुमाने पूर्वजन्माभ्या-सम्, अग्न्यनुमाने प्रसिद्धिम्, 'आदि' शब्देन अदृष्टग्रहणम्, **अवश्योपजीव्यम्**,[2] अवश्यापेक्षणीयम्, **उवाच**—स्वशास्त्रे कथयतिस्म। जन्मान्तराभ्यासप्रसिद्ध्या-दिक कीदृशम्? **ऋतंभराविषयम्**, पतञ्जलिशास्त्रे ऋतंभरासाध्यत्वेनोक्तमित्यर्थः, न च तैलपायिकादिवत् व्यर्था इयं संज्ञा। ऋतम्—सत्यम् बिभर्तीति ऋतम्भरा इत्यन्वर्थत्वात्, तेनासत्याया लोकप्रसिद्धेर्न[3] लोकप्रसिद्धित्वम्। अस्या ऐश्वरी वागिति

1 अग्न्यनुमाने—K. S. S. 2 अवश्योगसन्धानम्—C.
3 तेनासत्या या लोकप्रसिद्धेर्न लोकप्रसिद्धिः—C.

As लोकप्रसिद्धि is produced by ऋतंभरा, which is expla-ined as ऋतं सत्यं बिभर्तीति ऋतंभरा, Bhāskara now wants to make it clear that if लोकप्रसिद्धि is not true, it cannot be called लोकप्रसिद्धि at all. The text, as given above, does not yield this meaning. Further, there is a gap in the M. S. after लोकप्रसिद्धिः. We have tentatively amended the text as printed.

ञ्जलिः । अन्ये च यौक्तिका योगिप्रत्यक्षकल्पप्रत्यक्षसद्भावं समस्तवस्तुग्रहणाय कल्पितवन्तः । सांव्यवहारिके च प्रमाणे नास्माकं भरः, प्रकृतं हि अस्माकमीश्वरस्वरूपम्, तच्च स्वप्रकाशमेव, प्रमेयोपरोधेऽपि[1] नोपरुध्यत इत्युक्तमसकृत्। ननु स्वभावहेतौ किमनया चिन्तया ?, आह—वृक्षत्वाव्यभिचारिण्याः शिंशपाया उत्पत्तेर्यन्मूलं कारणं तत

---

नामानुत्तरशास्त्रीयाः कथयन्ति । कुत्र सूत्रे उवाचेत्यत आह । सा च–इति[2] । सा च–पूर्वजन्माभ्यासप्रसिद्ध्यादिभावेन प्रोक्ता ऋतम्भरा च, श्रुतानुमानप्रज्ञयोः–प्रसिद्धिज्ञानानुमानज्ञानयोः बीजं भवति । कदाचिद्धि लोका अपि मनःशुद्धिवशेन भाविवस्तु प्रत्यक्षमेव पश्यन्ति, तच्च तार्किकाः प्रातिभं प्रत्यक्षमिति कथयन्ति 'यथा कन्या ब्रवीति श्वो मे भ्रातागन्ता' । अन्येषां स्वयंकल्पितयुक्तिमात्रशरणानां वादिनां मतमाह अन्ये इति । यौक्तिकाः—युक्तिमात्रप्रमाणाः, योगिप्रत्यक्षकल्पम्—योगिप्रत्यक्षसदृशम्, प्रत्यक्षं तस्य सद्भावम्, कल्पितवन्तः–युक्त्या साधयन्ति स्म । नन्वत्र प्रतिसमाधानं कर्तव्यमित्यत आह सांव्यवहारिके इति । सांव्यवहारिके–सम्यग्व्यवहारादागते, भरः–अर्थित्वोद्रेकः । कुत इत्याह 'प्रकृतं हि' इति । प्रकृतम्–प्रस्तुतम्, प्रमेयोपरोधेऽपि–प्रमेयाणां विषयीकरणेऽपि, न, उपरुद्ध्यते–प्रमाणेन विषयीकर्तुं शक्यते । सुगमत्वेन 'स्वभावो वा' इत्यस्य योजना न कृता । उत्पत्तिमूलजः इति व्याख्यातुमवतरणिकां करोति 'ननु' इति । स्वभावहेतौ–स्वभावाख्ये हेतौ, अनया–कार्येऽयोग्यया[3], नियत्यधीने स्वभावे योगिनिर्माणताऽयोगादिति भावः । अवतरणिकां कृत्वा व्याख्यानं करोति 'आह' इति । सूत्रकार इति शेषः । किमाहेत्यपेक्षायामस्यपदस्य विग्रहपूर्वं व्याख्यां करोति । 'वृक्षत्व' इति । उत्पत्तिक्रियाया अपेक्षां पूरयितुं कर्तारमध्याहृत्य कथयति 'वृक्षत्व' इति । मूल इत्यवयवं व्याचष्टे कारणम् इति । बीजरूपमित्यर्थः ।

---

1 तच्च स्वप्रकाशमेवान्यप्रमेयोपरोधेऽपि—K. S. S.

2 No such Sūtra is found in the text of the Yoga-sūtra, which is current to-day.

3 कार्ये योग्यया—C.

एव स तन्मात्रानुबन्धी स्वभावो जायते,-इति; ततश्च

'एकसामग्र्यधीनस्य रूपादे रसतो गतिः।
हेतुधर्मानुमानेन धूमेन्धनविकारवत् ॥'

इति स्वभावहेतुन्यीयः। ननु च वृश्चिकादीनां कीटगोमयाद्यनेककारणकत्वं तावत् दृष्टं, रसवीर्यादिभेदस्तु तत्र,-इत्यन्यदेतत्। तद्योगिजन्य-

---

तन्मात्रानुबन्धी-शिंशपामात्रानुवर्ती, न तु तद्वत्त्वानुबन्धी, जायते इति कर्तृविहितस्य[1] 'ड' प्रत्ययान्तस्य जनेर्व्याख्या, 'इति' शब्दो पदस्य व्याख्यासमाप्तौ, अतएव स्वभावस्यापि कार्यत्वाव्यभिचारात् अस्याश्चिन्ताया अत्राप्यवकाश इति भावः। अतः फलितमन्यत्किञ्चिदाह ततश्च इति। यतः स्वभावः तन्मात्रानुबन्धी जायते ततः कारणाच्च, रसतः-रसाख्यात् हेतोः, एकसामग्र्यधीनस्य-रसेन सहैकसामग्र्यधीनस्य, तन्मात्रानुबन्धिन इति यावत्। न तु कारणतया स्थितस्य, रूपादेः[2]-रूपस्य स्पर्शस्य च, गतिः-ज्ञानम्, हेतुधर्मानुमानेन-हेतुना यद्धर्मानुमानम्-तन्मात्रानुबन्धिनः अन्यधर्मस्यानुमानम्, तेन भवति। न तु कार्येण रसेन तत्ररूपादिकारणानुमानमिति भावः। अथवा षष्ठ्यर्थे तसिल्। रसस्येति भावः। अत्र दृष्टान्तमाह धूम इति। यथा अग्नौ धूमेन इन्धनविकारानुमानं[3] हेतुधर्मानुमानेन भवति तथेत्यर्थः। इति-एवम्, स्वभावहेतुन्यायः भवति।

उत्पत्तिमूलजः इत्यस्यापरां व्याख्यां कर्तुमवतरणिकां करोति 'ननु' इति। ननु तत्र रसवीर्यादिभेद उक्त एवेत्यत आह 'रस' इति। अन्यदेतत् इति। नहि रसवीर्यादिभेदेन वृश्चिकस्वभावभेदो वक्तुं शक्य इति भावः। फलितमाह 'तत्'

---

1 पञ्चम्यामजातौ। पा. ३-२-९८।

2 स्वरूपादेः—C.

As there will be excess of one syllable in the verse, स्व has been omitted.

3 If the idea here is that from smoke we infer that fire is the transformation of fuel, it would be better expressed by

अग्नौ धूमेनेन्धनविकारत्वानुमानम्।

त्वमवह्निकस्यापि धूमस्य सह्यं नाम, स्वभावस्य तु कथं विपर्यासंभावना। न हि नीलं सदेवानीलं योगीच्छया भवति,–इति कश्चित् प्रामाणिकः प्रतीयात्। उच्यते। इह द्विविधो हि स्वभावहेतुरन्तर्लीनकार्यकारणभावस्तद्विपरीतश्च; वह्निमानयं पर्वतो धूमवत्त्वात् इति, अनित्योऽयं कृतकत्वात् इति। तत्र आद्यस्य तावत् कार्यकारणभाव एव मूलम्–इति किं तत्रोच्यते। अपरस्तु विचार्यते, यदि तावत् कृतकत्वस्य कारणायत्तत्वं नाम स्वभावः कथम् अभवनपरिच्छिन्नभवनस्वभावता नामानित्यत्वं स्वभावः स्यात् आभासभेदात्। अभेदे तु आभासस्य हेतुसिद्धावेव साध्यस्य सिद्धत्वात्, यदि परं व्यवहारः साध्यते,

---

इति। सह्यं नाम इति। अनेकजत्वादिति भावः। कुतो न विपर्यासंभावना इत्यत आह 'नहि' इति। अत्रोत्तरं कथयितुं प्रतिजानीते उच्यते इति। प्रतिज्ञां सफलीकरोति इह इति। हेतुद्वयं क्रमेण दर्शयति वह्निमान् इति। तत्र–हेतुद्वयमध्ये, आद्यस्य–अन्तर्लीनकार्यकारणभावस्य, अपरस्तु–तद्विपरीतः। विचारमेव करोति यदि इति। कारणायत्तत्वम्–कारणाधीनस्वरूपलाभत्वम्। अभवनेन–असत्तया परिच्छिन्नभावत्वेन,[1] परिच्छिन्नम्–परिच्छेदविषयतां नीतं यद्भवनम्–सत्ता, तत्स्वभावता नाम–तद्रूपाख्यम्, अनित्यत्वं स्वभावः स्यात्, आभासभेदात् इति। न हि कारणायत्तत्वभवनस्वभावत्वरूपयोराभासयोरेकत्वं युक्तमिति भावः। ननु कथमाभासभेद इत्यत आह 'अभेदे तु' इति। साध्यस्य सिद्धत्वात् इति। साध्यसिद्धत्वाख्याश्रयासिद्धिभेदप्रसंगात्,[2] संशयित एव हि अनुमानस्याऽऽश्रयो युक्तः न तु सिद्धे। शिष्योक्तं पक्षान्तरं शंकते यदि परम् इति। परम्–केवलम्, साध्यते–अयमनित्य इति व्यवहर्तव्यः कृतकत्वादिति साधनविषयतां नीयते। कथमिति शंकायामाह

---

1. अभवनेन—असत्तया परिच्छिन्नभावित्वेन परिच्छेदविषयीकृतः—C

2. Here Bhāskara seems to use the word आश्रयासिद्धि in a sense different form that which the word आश्रयासिद्धि as a हेत्वाभास ordinarily has; because the well-known illustration of it is गगनारविन्दं सुरभ्यरविन्दत्वात् सरोजारविन्दवत्।

तरुरयं वृक्षत्वात्,—इति न्यायेन, व्यवहारश्च ज्ञानाभिधानात्मा कार्य एव, तत्र च नियतिशक्तिरङ्गीकृता[1] भवतापि। तस्मात् सर्वेषु स्वभावहेतुष्वाभासभेदं विना व्यवहारमात्रसाधनमेव, हेत्वाभासमयत्वादेवानधिको हि तत्र साध्याभासः, व्यावृत्तीनामेषैव वार्ता, सामान्यानामियमेव सरणिः। तस्मात् नियतः[2] शिंशपाभासवृक्षाभासयोः पूर्वनीत्या सामानाधिकरण्याभासो हेतुबलात्। ततः स्वभावोऽयं

---

'तरुः' इति। तरुरिति व्यवहर्तव्य इत्यर्थः। इति न्यायेन—अनेन न्यायेन इत्यर्थः। शंकिते पक्षेऽपि उत्तरमाह व्यवहारश्च इति। ज्ञानाभिधानात्मा—प्रख्योपाख्यारूपः, ज्ञानरूपः शब्दनरूपश्चेति यावत्। ननु स व्यवहारः कार्यो भवत्वित्यत आह तत्र च इति। तत्र—तस्मिन् कार्ये व्यवहारे च, भवताप्यङ्गीकृते इति योजना, अन्यथा व्यवहारस्यांकर्यापत्तेरिति भावः। फलितमाह तस्मात् इति। स्वभावहेतुषु—स्वभावरूपेषु हेतुषु, आभासभेदं विना—आभासभेदं विहाय, आभासभेदे व्यतिरिक्तो विषयी इति यावत्। कुत इत्यपेक्षायामाह हेत्वाभास इति। अन्यथा इति शेषः। हेत्वाभासमयत्वात्, साध्याभेदरूपाश्रयासिद्धरूपत्वादित्यर्थः। कुतो हेत्वाभासमयत्वमित्यत आह अनधिकः इति। अनधिकः—हेतोरनन्यूनानतिरिक्तः, तद्रूप इति यावत्। ननु 'अश्वोऽयमनश्वव्यावृत्तः'[3] इत्यादौ स्वभावहेतुविषये का वार्ता इत्यत आह व्यावृत्तीनाम् इति। अत्रापि व्यवहारमात्रसाधनमिति भावः। सरणिः—वर्तनी, 'अयं गौः गोत्वाश्रयत्वात्' इत्यत्र सामान्यस्य स्वभावहेतुत्वम्। फलितं कथयति तस्मात् इति। नियतः—नियमविषयतां प्राप्तः, पूर्वनीत्या—पूर्वोक्तनीत्या, सामानाधिकरण्याभासः—तादात्म्याभासः, एकस्वभावत्वाभासः इति यावत्। हेतुबलात् भवति। न हि बीजादङ्कुरवत् शिंशपा वृक्षस्वभावा। ततः—तस्मात् कारणात्, अयं स्वभावश्च

---

1. तत्रैव—K. S. S.

2. नियतिशक्त्यायत्तः—K. S. S.

3. The usual form of syllogism would be :
अश्वोऽयम् अनश्वव्यावृत्तत्वात् ।

हेतुहेतुमद्भावमूल एव, तत एव सामान्येनेदमुक्तं द्रष्टव्यं—सर्वः स्वभावहेतुरुत्पत्तिमूलजः,—इति। आभासा एव च वस्तु,—इति च समर्थितं प्राक्। ततश्च शिंशपायामेकस्यामेव सृज्यमानायां शाखादिमदर्थान्तराणामसृष्टेर्वृक्षाभासस्य[1] सामान्यात्मनः साध्यस्य नामापि नास्ति,—इति संभाव्यत एव। यत्तु तदेकरूपं विशिष्टं वृक्षत्वं तत् खलु शिंशपात्वमेव तच्च सिद्धम्,—इति न साध्यम्। कारणायत्तमिदम्,—इत्याभासेऽपि न स्यादनित्यताभासः। एवमर्थक्रियाकारित्वाभावेऽपि क्षणिकत्वाभासाभावः इति नियत्यपेक्षयैव सर्वे स्वभावहेतवो नान्यथा,—इत्येकान्त एषः॥ ११॥

---

हेतुहेतुमद्भावमूल एव—कार्यकारणभावमूल एव भवति। तत एव–तस्माद्धेतोरेव, इदम्–पूर्वोक्तं वस्तु, सामान्येन–न तु विशेषेण, उक्तं द्रष्टव्यम्–ज्ञातव्यम्। केनोक्तमित्यपेक्षायामवतरणिकाविषयीकृतं सूत्रपदमुपन्यस्यति 'उत्पत्तिमूलजः' इति। तथा च धूमादिवदत्रापि योगिजन्यत्वं युक्तमितिभावः। विशेष्यं बिना विशेषणायोग्यतां ज्ञात्वा सर्वः स्वभावहेतुः इत्युक्तम्। उत्पत्तेः–कार्यकारणभावाख्यात्, मूलात् जातः, उत्पत्तिमूलजः इति विग्रहः। आभासपक्षमाश्रित्य व्यवहारसाधनव्यतिरेकेऽपि साध्याभेददोषं निवारयितुमाह 'आभासाः' इति। यतः स्वभावस्योत्पत्तिमूलत्वमेव ततः कारणाच्च, एकस्यामेव शिंशपायां सृज्यमानायां सत्याम्, शाखादिमन्ति यानि अर्थान्तराणि-अन्ये वृक्षाः तेषाम्, असृष्टेः, सामान्यात्मनः–सामान्यरूपस्य, साध्यस्य–शिंशपाविषये साधनीयस्य, वृक्षाभासस्य स्थितत्वात्। तदेकरूपम्–सृज्यमानैकरूपम्, विशिष्टम्–विशेषरूपम्। तथा च नात्र साध्याभेददोषः, सिद्धेन विशेषणेन साध्यस्य सामान्यस्य साधनादितिभावः। अनित्यत्वकृतकत्वयोरपि एकत्वं निवारयति 'कारण' इति। तथा च नात्रापि साध्याभेद इति भावः। प्रसंगेनान्यत्रामुं दोषं निवारयति एवम् इति। नन्वेवं सति कथमत्रैकस्वभावत्वम्, सत्यम्, विप्रतिपन्नं प्रति नास्ति, अधुना तु साध्यते, साधनार्थमेव च सिद्धस्यापि साध्यत्वमारोप्यते विप्रतिपन्नबोधार्थम्, अन्यथा हेत्वाभासतापत्तेरित्यलं प्रपञ्चेन। सिद्धान्तं फलितरीत्या कथयति 'इति' इति। इति–अतः कारणात्, एषः एकान्तः–निश्चयो भवति। एष कः? सर्वे स्वभावहेतवो नियत्यपेक्षयैव भवन्ति न तु योगीच्छया, अन्यथा न भवन्ति

---

1 शाखादिपदार्थान्तर—K. S. S.

नन्वाभासवस्तुत्ववादेऽनाभातस्य अग्नेरवस्तुत्वम्,—इत्यनाभातेन कथं धूमो जन्यते, ततश्च धूमादग्नेः कारणस्य कथमनुमानम्? इत्याशङ्क्य समर्थयितुमाह

भूयस्तत्तत्प्रमात्रेकवह्न्याभासादितो भवेत् ।
परोक्षादप्यधिपतेर्धूमाभासादि नूतनम् ॥ १२ ॥

एकवारं तावत् महानसे प्रत्यक्षानुपलम्भबलेनाग्न्याभासधूमाभा-

---

उत्पत्तिमात्रे तदनुवर्तनादिति भावः ।

एतदुक्तं भवति । प्रायो वस्तु प्रसिद्धात् स्वकारणादेव जायते, कदाचित्तु[1] योगीच्छया विपर्यासो युक्तः, इति स्वभावहेतौ उत्पत्तिमात्रे योगीच्छाकारणत्वाऽभावो निर्णेयः, न स्वसाध्यसाधनकाले, इति न क्वापि अनुमानस्य क्षतिरिति । योगिविषये तु विचारः पूर्वम् 'चिदात्मैव हि देवोऽन्तः' इत्यत्र कृत एवेति न पुनरायस्यते । अत्र श्लोके एवं योजना । अतएव—यतो योगी अपि इच्छामात्रेण कार्यं जनयति अस्मात् कारणात्, योगिनिर्माणताभावे प्रमाणान्तरनिश्चिते सति कार्यं हेतुः भवति—स्वकारणं प्रति हेतुतां भजति नान्यथा । तथा स्वभावो वा हेतुर्भवति । कुत इत्यपेक्षायां विशेषणद्वारेण हेतुमाह 'उत्पत्ति' इति । एतेन उत्पत्तिमात्रे एव योगिनिर्माणत्वाऽभावो निर्णेयः न स्वसाध्यसाधने—इति द्योतितम् ॥ ११ ॥

अथ द्वादशश्लोकस्यावतरणिकां करोति 'ननु' इति ।

अत्र टीकाः—

अनाभातस्य—पर्वतस्थत्वेन आभासाविषयतां गतस्य । 'कथम्' इति, अजनकत्वान्न युक्तमित्यर्थः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'भूयः' इति ।

अत्र टीकाः—

श्लोकं व्याख्यातुं प्रक्रियां करोति एकवारम् इति । प्रत्यक्षानुपलम्भयोर्यद्बलं तेन । तत्र महानसे धूमाभासाग्न्याभासयोः प्रत्यक्षत्वम्, महाह्रदे तयोरनुपलम्भः ।

---

1 कदाचित्तु योगीच्छयापि न विपर्यासो युक्तः—C.

सयोः कार्यकारणभावो गृहीतः। तत्र विज्ञानवादिनो दर्शने प्रतिसन्तानमन्यश्चान्यश्चाभासः,--इति स्वाभासयोरेव कार्यकारणता गृहीता न तु सन्तानान्तरगतयोस्तदीयवृत्तान्तस्यासंवेदनात्। ततश्चेदानीमनुमानं न भवेत् स्वसन्तानगतात् धूमाभासात् क्रिमिसर्वज्ञादिप्रमातृसन्तानान्तरनिष्ठस्याग्न्याभासस्य इति निश्चयः। इह तु दर्शने व्याप्तिग्रहणावस्थायां यावन्तस्तद्देशसंभाव्यमानसद्भावाः प्रमातारस्तावतामेकोऽसौ धूमाभासश्च वह्न्याभासश्च बाह्यनये इव, तावति तेषां परमेश्वरेणैक्यं निर्मितम्,--इति हि उक्तम्। ततः स्वपरसन्तानविशेषत्यागेन

---

प्रतिसन्तानम्–सर्वेषु विज्ञानसन्तानेषु, इति–अतः कारणात्, विज्ञानवादिना स्वाभासयोः–स्वज्ञानसन्तानगतयोः[1] धूमाभासवह्न्याभासयोः, कार्यकारणता गृहीता। 'एव' कार व्यावर्त्यमाह 'न तु' इति, सन्तानान्तरगतयोः–गृहीतृव्यतिरिक्तसन्तानगतयोः। कुतो न गृहीतेत्यत आह 'तदीय' इति। तदीयवृत्तान्तस्य–सन्तानान्तरवृत्तान्तस्य, असंवेदनात्–अननुभूतेः। न ह्यन्यस्य विज्ञानमन्यस्य विषयीभवितुं युक्तम्। ततश्च–तस्मात्कारणाच्च, इदानीम्–अनुमानकाले, स्वसन्तानगतात्–अनुमातृविज्ञानसन्तानगतात्। पर्वते हि क्रिम्यादयो दावाग्निमध्यगतास्तदनुभवयुक्ताः स्युरेवेति क्रिमिग्रहणम्, सर्वज्ञानां च सर्वविषयं ज्ञानं भवत्येवेति तद्ग्रहणम्। आदिशब्देन पर्वतगानामन्येषां प्राणिनां ग्रहणम्। नन्वेतत् स्वदर्शनेऽपि समानमित्यत आह 'इह तु' इति। इहदर्शने–शैवनये, तद्देशे–महानसदेशे, संभाव्यमानः सद्भावः येषां ते। 'एकः' इति, बहिःस्थत्वाङ्गीकारात्, बाह्यं वस्तु हि सर्वान् प्रति साधारणमेव, विज्ञानमात्ररूपं तु विज्ञातारं प्रत्येव। बाह्यनये इव–तार्किकनयवत्, तावति–महानसगते धूमाभासे अग्न्याभासे च, तेषाम्–तद्देशस्थप्रमातृणाम्, ऐक्यम्—एकताम्, तद्ग्रहीतृरूपमेकत्वमिति यावत्। बहिःस्थं वस्तु हि सर्वो नियतिशक्त्या साधारण्येन गृह्णाति। फलितमाह 'ततः' इति। ततः–उक्तात्कारणात्, स्वपरसन्तानयोर्यो विशेषः तस्य त्यागेन, सामान्येनेति

---

1 स्वज्ञात (न) सन्तानगतयोः—C

धूमाभासमात्रं वह्न्याभासमात्रस्य कार्यम्,–इति व्याप्तौ गृहीतायां भूयोऽपि पर्वते यो धूमाभासः सोऽपि अग्न्याभासादेव[1] इति व्याप्तिं स्मृत्वानुमिमीते 'अत्र पर्वते अग्न्याभासः' इति। तावति धूमाभासविशेषे प्रमात्रन्तरैः सहैकीभूय वह्न्याभाससामान्यांशे परोक्षरूपांशसहिते विशेषाभासान्तरविविक्ते प्रमात्रन्तरैः साकमेकीभवति, इति यावत्। 'भूय' इति व्याप्तिं गृहीत्वा पुनरपि यो धूमाभासः, आदिग्रहणादङ्कुराभासा-

---

यावत्। धूमाभासमात्रं वह्न्याभासमात्रस्य, न तु स्वसन्तानगतः स्वसन्तानगतस्यैव, कार्यं भवति, इति–अतः व्याप्तौ–यत्र धूमाभासः तत्र वह्न्याभास इत्येवं रूपायाम्, गृहीतायाम्—महानसादौ ग्रहणविषयीकृतायां सत्याम्, भूयोऽपि–पुनरपि, धूमाभासः–स्वसन्तानगः धूमाभासः, अग्न्याभासादेव–परसन्तानगात् अग्न्याभासादेव, अनुमिमीते–पुरुषः अनुमातृत्वं भजति। एतेन किमुक्तं भवतीत्यत आह 'तावति' इति। सः अनुमाता तावति–तावन्मात्रे, न तु सर्वत्र, अन्यथा सर्वज्ञत्वापत्तेः, धूमाभासविशेषे–पर्वतस्थे धूमाभासे, प्रमात्रन्तरैः—तद्देशस्थैः तद्धूमग्राहकैः अन्यैः प्रमातृभिः, सहैकीभूय–धूमाभासग्रहणेनैकतामासाद्य, परोक्षरूपः—अतीन्द्रियत्वेन परोक्षभूतो योंऽशस्तेन सहिते। अथवा भावप्रधानो निर्देशः, परोक्षतारूपो यः अंशस्तेन सहिते, परोक्षे इति यावत्। तथा विशेषभूतानि यानि आभासान्तराणि–सामान्याश्रयभूताः सर्वे वह्निव्यक्त्याभासाः, तेभ्यो विविक्ते–भिन्ने, वह्न्याभासस्य यः सामान्यांशः तस्मिन्, प्रमात्रन्तरैः साकम्–तद्देशस्थैः अन्यैः प्रमातृभिः सह, एकीभवति—वह्न्याभासग्रहणद्वारेण एकतामासादयति, इति यावत्, अयमेवार्थो भवतीत्यर्थः, न तु विज्ञानवादिदर्शने इव तद्गृहीतेन धूमाभासेन तस्यैवाग्न्याभासग्रहणमिति भावः।

उक्तप्रक्रियावष्टम्भेन श्लोकस्य योजनां करोति। 'भूयः' इति पदं व्याचष्टे 'व्याप्तिम्' इति। पुनरपि इत्यनेन अपि शब्दस्य भिन्नक्रमत्वं द्योतितम्। 'धूमाभासादि' इति। आदिपदग्राह्यं कथयति आदिग्रहणात् इति। नूतनम्

---

1 वह्न्याभासादेव—K. S. S.

दिर्गृह्यते सोऽप्याभासो नूतनोऽपूर्वो न तु धूमजधूमवदप्रत्यग्रः। स च अधिपतेरसंचेत्यमानात् वह्न्याभासात् बीजाभासादेव वा भवेत् तत एव जनितुं शक्नोति नान्यतः। शकि लिङ्। स चाभासस्तेषु तेषु प्रमातृष्वेक एव, अनेकत्वे न तु युज्यते एवैतदित्याशयः। यतश्च स एकोऽधिपतिश्च वह्न्याभासो धूमकारणं, ततो धूमाभासोऽस्यैवाग्न्याभासस्याव्यभिचरितं कार्यं लिङ्गं योगिकृतत्वाभावे निश्चिते सति,-- इति तस्मात् कार्यात् सोऽनुमीयते यतः परोक्षोऽसावधिपतित्वादेव ॥१२॥

---

इति व्याचष्टे **अपूर्वः** इति। तत्कालमेवाग्नेरुत्थितत्वादिति भावः। **धूमध्वजवत्**–वह्निशान्त्यनन्तरमपि गोपालघटिकान्तरवर्तिधूमोत्थितधूमवत्, **अप्रत्यग्रः**-चिरकालीनः, **स च**–सः धूमाभासश्च, **अधिपतेः** इति कारणवाचकं सुगमत्वेन निगदव्याख्यातम्। **'परोक्षाद्'** इति व्याचष्टे **असंचेत्यमानात्** इति। **वह्न्याभासात्** इत्यपि निगदव्याख्यातम्। अत्रापि आदिशब्दग्राह्यं वस्त्वाह **बीजाभासादेव वा** इति। **'भवेत्'** इति व्याचष्टे **'तत एव'** इति। **तत एव**–वह्न्याभासादेव। **'तत्तत्प्रमात्रेक'** इति भिन्नीकृत्य व्याचष्टे **'स चाभासः'** इति नन्वनेकेष्वनेक एव कथं न भवेदित्यपेक्षायां भावं कथयति **अनेकत्वे** इति। **एतत्**–एषः वह्न्याभासः, **इत्याशयः**, अयंभाव इत्यर्थः। वह्निःस्थं वस्तु सर्वप्रमातृसाधारणमेवेति तात्पर्यम्। एतेनास्य श्लोकस्य व्याख्या सम्पन्ना।

तथा च योजना। भूयोऽपि न केवलं व्याप्तिग्रहणकाल एव अपि तु अनुमानकालेऽपि, **नूतनम्**–अग्न्यादेः सह उत्थितं धूमाभासादि, **अधिपतेः**–कारणभूतात्, **परोक्षात्**–अदृश्यत्वेन परोक्षतया स्थितात्, दिवा हि पर्वते धूमाभास एव प्रत्यक्षो न अग्न्याभासः। एवं विधात् तत्तत्प्रमात्रेकवह्न्याभासादितः **भवेत्**–भवितुं शक्नोति इति।

**कार्यमव्यभिचार्यस्य लिङ्गम्** इति उत्तरश्लोकखण्डम् युक्तत्वेन इहैव योजयति। **कार्यं लिङ्गम्**–कार्यरूपं लिङ्गम्, कारणत्वेन गमकत्वात्। पूर्वोक्तं वस्तु शेषत्वेन अत्रापि अध्याहाररीत्या योजयति **योगि** इति। **इति**–अतः कारणात्, **तस्मात्**–धूमाभासरूपात्, **सः** अग्न्याभासः, कुतोऽनुमीयते इत्यत आह **'यतः'** इति। यतः **असौ परोक्षो** भवति। परोक्षस्य हि अनुमेयत्वमेव युक्तम्। कुतः परोक्षत्वादनुमीयत इत्यत आह **अधिपतित्वादेव**, यतोऽसौ कारणं भवतीत्यर्थः। अन्यथा सर्वेषां परोक्षवस्तूनां तेन धूमाभासेन अनुमानमापतेदिति भावः ॥१२॥

नन्वेवं गोपालघटिकान्तरालचिरोषितनिर्गतादपि धूमाभासात् स्यात् वह्न्याभासानुमानम्,—इत्याशङ्क्याह

**कार्यम[1]व्यभिचार्यस्य लिङ्गमन्यप्रमातृगात्।**
**तदाभासस्तदाभासादेव त्वधिपतेः परः ॥ १३ ॥**

परो नूतनादन्यो यो धूमाभासः स धूमाभासादेव प्रमात्रन्तरवर्तिनोऽधिपतिरूपात् परोक्षात्,—इति तथाभूतात् धूमाभासात् कथ-

---

अथ त्रयोदशस्य श्लोकस्यावतरणिकां करोति 'ननु' इति।

अत्र टीका:—

गोपलघटिकायाम्—गोपालैः शीतकाले गवां स्थापनार्थं रचिते विपुलरन्ध्ररहिते कुटीरविशेषे, चिरम्—बहुकालम्, उषितः निर्गमोपयोगिविपुलरन्ध्ररहितत्वेन अग्निनिर्वाणानन्तरम[2]पि स्थित इति यावत्, ततः तत्सूक्ष्मरन्ध्रान्निर्गतश्च तस्मात्। एकत्र सञ्चीयमानधूमराशिमध्यादुत्थितात् धूमात् इति यावत्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे '**कार्यम्**' इति।

अत्र टीका:—

'**लिङ्गम्**' इत्यन्तं पूर्वश्लोकेन योजितम् इह तु '**अन्य**' इत्यादि व्याचष्टे। '**परः**' इति। तत्रापि **परः** इति पदं व्याचष्टे **नूतनात्** इति। नूतनादन्यः—साक्षादग्नेरुत्थितादन्यः, अप्रत्यग्र इति यावत्। **धूमाभासादेव**—अग्निनिर्वाणानन्तरमपि गोपालघटिकान्तरालस्थितधूमाभासराशेरेव, नत्वग्न्याभासात्। **प्रमात्रन्तरवर्तिनः**—गोपालघटिकान्तरालवर्तिप्रमातृसन्तानगात्, तेषामेतदनुभवात्, **अधिपतिरूपात्**—निर्गम्यमानस्य धूमस्य कारणभूतात् धूमचयात्, इति-

---

1. The beginning of kārikā 13 "कार्यमव्यभिचार्यस्य लिङ्गम्" is printed with kārikā 12 in the K. S. S.

2. अग्निनिर्वाणानन्तरमपीति यावत् स्थितः—C.

भकारणभूतो वह्न्याभासोऽनुमीयताम् इत्यभिप्रायशेषः। कुशलाश्च लक्षयन्त्येव विवेकम्, अस्यार्थस्यानुमानिकबहुतरव्यवहारोपयोगिनो यत्नेन व्युत्पत्तिः कार्या,—इत्याशयेन नूतनमिति यत्सूचितं[1] तदेव व्यवच्छेद्यद्वारेण स्फुटीकृतम् ॥ १३ ॥

ननु चैवं धूमाभासो वह्न्याभासात्,—इत्यङ्गीकृतं चेत् तर्हि चेतनस्यैव कर्तृत्वम्,—इति यदुक्तं तत् कथं? तथाहि 'बीजे सत्यङ्कुरो भवति' इति यदेतत् दृष्टं धूमाग्निवदेव तत् कथमनादरास्पदम्? इत्याशङ्क्याह

> अस्मिन् सतीदमस्तीति कार्यकारणतापि या।
> साप्यपेक्षाविहीनानां जडानां नोपपद्यते ॥ १४ ॥

---

अतः कारणात्, अभिप्रायः, नतु वाच्योऽर्थः। कुशलाश्च इति। इत्याशयेन—अनेनाभिप्रायेण, विवेकं लक्षयन्त्येव। इति किमिति? अस्यार्थस्य इत्यादि। अस्यार्थस्य, अनुमानस्येत्यर्थः। अस्य वाक्यस्य नूतनपदव्यावर्त्यप्रदर्शकत्वं कथयति नूतनम् इति—अनेन पदेन यत्सूचितं तदेव नत्वन्यत्किञ्चित् वस्तु। व्यवच्छेद्यस्य यद्दर्शनं तस्य द्वारेण, नतु साक्षात्, स्फुटीकृतम्—प्रकटीकृतम्।

एवमत्र योजना। परः—नूतनादन्यः, तदाभासः—गोपालघटिकान्तरालचिरोत्थितनिर्गतधूमाभासः, अन्यप्रमातृगात्—गोपालघटिकान्तर्वर्ति प्रमातृसन्तानवर्तिनः, तदनुभवगोचरात् इति यावत्, अधिपतेः—कारणभूतात्, तदाभासादेव—गोपालघटिकान्तर्वर्तिधूमराशिरूपादाभासादेव भवन् न तु वह्न्याभासात्, तस्य भ्रान्तेः, इति न ततः वह्न्याभासानुमानम् ॥ १३ ॥

अथ चतुर्दशस्य श्लोकस्यावतरणिकां करोति 'ननु' इति

अत्र टीकाः—

'कथम्' इति, न युक्तमित्यर्थः। कुत इत्यपेक्षायां समर्थनमुपक्रमते 'तथाहि' इति। अनादरास्पदम्—अनादरविषयः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "अस्मिन्" इति।

---

1 यदेव सूचितम्—K. S. S.

एक एव भावस्तावत् न कार्यकारणभावः, भावद्वयमपि च न युगपद्भावि कार्यकारणरूपं घटपटवत्, क्रमभाव्यपि नानियतक्रमकं नीलपीतादिज्ञानवत्, नियतक्रमिकत्वेऽपि न पूर्वभावि कार्यमुत्तरकालभावि च कारणम्,—इत्येवं नियतपूर्वभावं कारणं नियतपरभावं च कार्यम्,—इति परस्य तावन्मतम्। तत्र स्वरूपादनधिका चेत् पूर्वता परता च तत् भावद्वयमात्रं स च स च,—इति । चार्थोऽपि वा न कश्चित् तस्याप्यपेक्षारूपत्वात् स स इत्येव हि स्यात्। अथ पूर्वता नाम प्रयोजकसत्ताकत्वं परता च प्रयोज्यसत्ताकत्वं तर्हि बीजस्याङ्कुरप्रयोक्त्री सत्ता अङ्कुरविश्रान्ता अङ्कुरान्तर्भावमात्मन्यानयति,

---

अत्र टीका:—

श्लोकं व्याख्यातुं प्रक्रियां करोति 'एक एव' इति। तावत् इति, नात्र कस्यापि विप्रतिपत्तिरिति भावः। ननु तर्हि भावद्वयम् एव कार्यकारणभावो भवत्वित्यत आह 'भावद्वयमपि' इति। युगपद्भावि—युगपद्भवनशीलम्। ननु तर्हि, क्रमभाव्येव भवतु इत्यत आह क्रम इति। अनियतः क्रमः यस्य द्वयस्य तादृशम्। ननु नियतक्रमत्वमप्यत्रास्तु ततः किमित्यत आह 'नियत' इति। इत्येवं न भवतीति योजना। तर्हि किमस्तीत्यत आह नियत इति। नियत इत्यत्र अनन्यथासिद्धत्वमपि योजनीयम्, अन्यथा तन्तुरूपस्यापि पटं प्रतिकारणत्वं स्यात्। परस्य—बाह्यस्य तार्किकादेः। ननु भवत्वेतन्मतं तस्य ततः किमित्यत आह तत्र इति। स्वरूपात्—कार्यकारणयोः स्वभावात्, परता—पश्चाद्भाविता, भावद्वयमात्रम्—कार्यकारणरूपम्, नतु भावशब्दप्रवेशोऽत्रयुक्त इति भावः। भावद्वयमेव समुच्चयेन दर्शयति 'स च स च' इति। चाऽर्थोऽपि—समुच्चयोऽपि, कुतः इत्यपेक्षायामाह तस्य इति। तस्य-समुच्चयस्य, समुच्चयो हि कांचित् क्रियां गुणादिकं वा अपेक्ष्य भवति, न स्वतन्त्रः। पुनस्तस्य भावद्वयस्य कथं प्रयोगः स्यादित्यत आह 'स स' इति। शिष्यप्रश्नमाशंकते 'अथ' इति। प्रयोजिका-अन्यस्य संपादयित्री, सत्ता यस्य तादृशम्। प्रयोज्या-संपाद्या सत्ता यस्य तादृशम्। शंकिते प्रश्ने उत्तरं कथयति 'तर्हि' इति। अंकुरे अन्तर्भावः अंकुरान्तर्भावः, अंकुररूपत्वमिति यावत्। यो हि यत्र विश्रान्तो भवति स तद्रूप एव भवति घटे विश्रान्ता मृदिव घटरूपा इति भावः। ननु अङ्कुरस्य तत्राभाव एवास्तीत्यत

अङ्कुराभावे प्रयोक्तृत्वमात्रं स्यात् तदपि न किंचित् अन्यापेक्षत्वात् तस्य । एवं प्रयोज्यसत्ताकेऽपि वक्तव्यम्[1] । एवं न केवलं भावमात्रमेव कार्यकारणता इत्यादयः पक्षा नोपपन्ना, यावत् 'अस्मिन् सति' इति भूतविभक्त्या सप्तम्या प्रयोजकसत्ताकत्वम्, 'इदमस्ति' इति भाव्यमानविभक्त्या प्रयोज्यसत्ताकत्वम्,—इत्येवंरूपापि या कार्यकारणता सापि नोपपद्यते प्रमाणेन न संभवति जडानाम्, अन्योन्यापेक्षा हि अत्र जीवितं सा च जडानां न संभवति ॥ १४ ॥

---

आह 'अंकुराभावे' इति । प्रयोक्तृत्वमात्रम्–स्वरूपे लीनं प्रयोजकतामात्रम्, तदपि–प्रयोक्तृत्वमात्रमपि, न हि निर्विषयस्य सत्ता युक्तेति भावः। कुत इत्यपेक्षायां स्वयमपि हेतुं कथयति 'अन्य' इति । अन्यापेक्षत्वात्–प्रयोज्यापेक्षत्वात् । तस्य प्रयोक्तृत्वस्य । प्रयोक्तरि प्रोक्तं न्यायं प्रयोज्येऽप्यतिदिशति 'एवम्' इति । एवमतिदेशयोजनम्[2] । अंकुरस्य बीजप्रयोज्या सत्ता बीजविश्रान्ता बीजान्तर्भावमात्मन्यानयति, बीजाभावे प्रयोज्यतामात्रं स्यात्, तदपि च न किञ्चित्, अन्यापेक्षत्वात्तस्येति । उक्तप्रक्रियाऽवष्टम्भेन सूत्रे योजनां करोति 'एवम्' इति । एवं सति, इत्यादयः पक्षाः न केवलं[3] नोपपन्नाः भवन्ति । इत्यादयः के ? कार्यकारणता एकं भावमात्रम्–तद्वाच्यः केवलो भावो भवतीति । एतेन सापि इत्यत्र स्थितस्य अपिशब्दस्य अनुक्रमसमुच्चयद्योतकत्वं सूचितम् । पुनः किमन्यदप्यनुपपन्नं भवतीत्यत आह 'यावत्' इति। भूतविभक्त्या–सिद्धवाचकविभक्तिरूपया सप्तम्या 'ङि' प्रत्ययरूपया, भाव्यमानविभक्त्या–साध्यवाचिन्या 'तिप्' विभक्त्या । 'नोपपद्यते' इति व्याचष्टे 'प्रमाणेन न संभवति' इति । केषामित्यपेक्षायामाह 'जडानाम्' इति । कुतो न संभवतीत्यपेक्षायाम् 'अपेक्षाविहीनानाम्' इति विशेषणं हेतुत्वेन व्याचष्टे 'अन्योन्य' इति । अत्र–अस्यां कार्यकारणतायाम्, 'न संभवति' इति । न हि जडानामपेक्षा युक्तेति भावः ।

एवमत्र योजना । अत्र अस्मिन्कारणरूपे मृदाख्ये वस्तुनि सति, इदम्

---

1. वक्तव्यम्,—न केवलम्—K. S. S.
2. सति योजने—C.
3. इत्यादयः पक्षाः केवलं नोपपन्ना न भवन्ति—C.

कथम् ? इति चेत् उच्यते

न हि स्वात्मैकनिष्ठानामनुसन्धानवर्जिनाम् ।
सदसत्तापदेऽप्येष सम्बन्ध्यर्थः प्रकल्प्यते ॥ १५ ॥

जडाः किलान्योन्यरूपमनुसन्धातुमप्रभविष्णवः, अन्योन्यानुसंधानरूपत्वं जडविरुद्धेन चैतन्येन व्याप्तम्, अनुसंधानं चापेक्षा चैतन्यस्वरूपमेव, अन्यत्र तु सोपचरिता। अतोऽनुसन्धानविहीनत्वाज्जडो भावः स्वात्ममात्रविश्रान्तिसन्तोषसंकुचितशरीरः कथं परत्र

---

कार्यरू घटाख्यं वस्तु संभवति, इति-एवम्, या कार्यकारणता भवति सापि अपेक्षाविहीनानां जडानां नोपपद्यते इति। 'अपेक्षाविहीनानाम्' इति हेतुगर्भं विशेषणम्। 'अपि' शब्दादन्यैर्वादिभिर्यानि कार्यकारणलक्षणानि प्रोक्तानि तान्यपि नोपपद्यन्ते इति ज्ञेयम् ॥ १४ ॥

अथ पञ्चदशस्य श्लोकस्यावतरणिकां करोति 'कथम्' इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'न हि' इति।

अत्र टीकाः—

'अनुसन्धानवर्जिनाम्' इति व्याचष्टे, 'जडाः' इति। अन्योन्यरूपम्-परस्परस्य स्वरूपम्, अनुसन्धातुम्—अनुसन्धानविषयीकर्तुम्, अप्रभविष्णवः—असमर्थाः, न हि घटः पटस्वरूपमनुसन्धातुं शक्तः स वा तस्येति भावः। पुनः केषामनुसन्धाने प्रभविष्णुत्वमित्यत आह 'अन्योन्य' इति। अन्योन्यस्मिन्ननुसन्धानम्-अन्योन्यानुसन्धानम्, तद्रूपं यस्य तस्य भावः तत्त्वम्। 'व्याप्तम्' इति, यत्र यत्र हि अनुसन्धानं तत्र तत्र चैतन्यम्, अन्यथा घटस्यापि पटविषयानुसन्धानप्रसंगात्। कुतो व्याप्तमित्यत आह 'अनुसन्धानम्' इति। अपेक्षा-अपेक्षारूपम्, च शब्दो हि शब्दार्थे। ननु घटो मृदमपेक्षते इति व्यवहारः कथं दृश्यते इत्यत आह 'अन्यत्र' इति, अन्यत्र-जडे, सा-अपेक्षा, उपचरिता-उपचारेण सिद्धा, अग्निर्माणवक इतिवदिति भावः। एतदवष्टम्भेन 'स्वात्मैकनिष्ठानाम्' इति व्याचष्टे 'अतः' इति। भावः-नीलादि वस्तु, स्वात्ममात्रे-भावरूपे केवले स्वस्वरूपे, या विश्रान्तिः-अवस्थानम्, तया यः सन्तोषः-अन्यत्र प्रसारचाञ्चल्यराहित्यम्, तेन संकुचितं शरीरं यस्य तादृशः। परत्र-स्वव्यतिरिक्ते वस्तुनि, प्रसरेत्-अनुसन्धानरूपं प्रकृष्टं सञ्चारं भजेत्।

प्रसरेत् । ततश्च यदि बीजं सदङ्कुरोऽसन् अथापि विपर्यय उभयमपि वा सत् यदि वासत्, अथापि एकं सोपाख्यमन्यत् निरुपाख्यम्, द्वयमपि वा सोपाख्यं निरुपाख्यं वा, तथापि प्रातिपदिकार्थमात्रं धर्मान्तरेण समुच्चयादिनाप्यनालिङ्गितमवतिष्ठते, तस्य समस्तस्यापेक्षारूपत्वेन चैतन्यविश्रान्तत्वात् ॥ १५ ॥

---

नहिं सन्तुष्टस्य सञ्चारो युक्त इति भावः । फलितं कथयन्नुत्तरार्धं व्याचष्टे 'ततश्च' इति । तत्रापि **'सदसत्तापदे'** इति व्याचष्टे **'यदि'** इति । विपर्ययः—बीजमसत् अंकुरः सन्नित्येवंरूपव्यत्यासः । उभयम्—बीजमंकुरश्च; एकम्—बीजम् अंकुरो वा एकं वस्तु, अन्यत्—अंकुरो वा बीजं वा अन्यवस्तु । सोपाख्यम् इति **'सत्'** पदव्याख्या, सत एव हि उपाख्या संभवति । निरुपाख्यम् इति **'असत्ता'** पदव्याख्या । **'सप्तम्यर्थः'** इति व्याचष्टे **'तथापि'** इति । प्रातिपदिकार्थमात्रम्—भावस्वरूपमात्रम् । 'आदि' शब्देन अन्यधर्मग्रहणम् । **'न प्रकल्प्यते'** इत्यस्य सूचनया अर्थं करोति **'अनालिङ्गितमवतिष्ठते'** इति, अपेक्षामूलकत्वेन न स्पृश्यते इत्यर्थः । **'समुच्चयादिनापि'** इति, अपिशब्देन सप्तम्यर्थस्य प्रयोजकत्वाख्यस्य धर्मस्य अत्र कथापि नास्तीति सूचितम् । कुत इत्यपेक्षायामाह **'तस्य'** इति । तस्य—समुच्चयादिरूपस्य ।

एवमत्र संक्षिप्तार्थः । हि—यस्मात्, अनुसन्धानवर्जितानाम्—अन्योन्यविषयानुसन्धानरहितानाम्, अतएव स्वात्ममात्रे तिष्ठन्तीति तादृशानाम्, अर्थात् जडानां बीजांकुरादीनाम्, सत्तापदेऽपि, अपिशब्दोऽभ्यासौ, मतभेदेन सत्ताविषयत्वे असत्ताविषयत्वेऽपि अंगीकृते सति, एषः—पूर्वस्मिन् श्लोके 'अस्मिन्' इत्यनेनोक्तः, सप्तम्यर्थः—प्रयोजकत्वम्, न कल्प्यते—न युज्यते, अनुसन्धानरूपापेक्षामूलत्वात् तस्याश्च चेतनमात्रे युक्तत्वात् । 'सप्तम्यर्थः' उपलक्षणम् अस्तीति तिङर्थस्यापि, प्रयोज्यत्वमपि अचेतनेषु न युज्यत एवेति । अथवा उत्तरश्लोके तिङ्वाच्यायाः क्रियायाः अचेतनेषु अयोग्यतां साक्षादेव कथयति ॥ १५ ॥

यस्मादचेतनेषु नापेक्षोपपद्यते

**अत एव विभक्त्यर्थः प्रमात्रेकसमाश्रयः।**

**क्रियाकारकभावाख्यो युक्तो भावसमन्वयः॥ १६ ।**

सप्तमीरूपाया विभक्तेरन्यस्या अपि वा योऽर्थः क्रियाकारकभावलक्षणः स एव तावद्भावानां समन्वयो नान्यः शुष्कः कश्चित्। स च यदि स्वतन्त्रे चिद्रूपे भावद्वयं विश्राम्यति तदोपपद्यते, अन्यथा तु न कथंचित्। तथा हि विकल्पेनापि असौ व्यवह्रियमाणो न वस्तुनिष्ठतयोपपद्यते,

---

अथ षोडशस्य श्लोकस्यावतरणिकां करोति **यस्मात्**' इति। स्पष्टम्। श्लोकमुपन्यस्य[1] व्याचष्टे **अत एव** इति।

अत्र टीकाः—

'**विभक्त्यर्थः**' इति व्याचष्टे '**सप्तमी**' इति। **अन्यस्याः**—तिङ्रूपायाः द्वितीयादिरूपायाश्च। '**क्रिया**' इति पदं व्याचष्टे 'क्रिया' इति। **क्रियाकारकभावलक्षणः**—क्रियाकारकभावस्वरूपः। '**भावसमन्वयः**' इति विगृह्णाति 'भावानाम्' इति, शुष्कः—निःसारः, संयोगादिरूप इति यावत्। स च—प्रोक्तः समन्वयश्च, भावद्वयम्—समन्वयाश्रयं वस्तुद्वयम्, चिद्रूपे विश्राम्यति, चिद्रूपेण गृहीतं भवतीत्यर्थः। '**प्रमात्रेकसमाश्रयः**' इति व्याचष्टे '**स्वतन्त्रे**' इति। '**युक्तः**' इति व्याचष्टे '**उपपद्यते**' इति। **अन्यथा**—विश्रान्त्यभावे, एतेन 'सर्वं वाक्यं सावधारणम्' इति न्यायेन प्रमात्रेकसमाश्रय एव युक्तः इति योजनीयम् इति सूचितम्। पूर्वश्लोकस्य हेतुद्योतकम् '**अतएव**' इति सुगमत्वेन न व्याख्यातम्। अत्र समर्थनमुपक्रमते **तथाहि** इति। **विकल्पेन व्यवह्रियमाणोऽपि**—प्रमात्रभावेऽपि यथा तथा विकल्पविषयीभूतः, **असौ**—क्रियादिसमन्वयः, **वस्तुनिष्ठतया**—वस्तुविश्रान्ततया, **नोपपद्यते**, वस्तुविश्रान्तो न भवतीति यावत्। ननु विकल्पस्य स्वयं वस्तुनिष्ठत्वं नास्ति इति कथं तेन व्यवह्रियमाणस्य

---

1 This is the first time that Bhāskara has omitted his fovourite expression **एवमवतरणिकां कृत्वा** before **श्लोकमुपन्यस्य व्याचष्टे।**

वस्त्वनुसरणप्राणो हि विकल्पोऽनुभवानुसारितयैव भवति, सा चेह नास्ति वस्त्वप्रभवत्वेन[1], वस्त्वनुसारी हि अनुभवो, वस्तु च स्वात्मनिष्ठम्—इत्युक्तम्। तस्मात् बीजे सति अङ्कुरो, वह्नौ सति धूमः,—इति च स्वतन्त्रचिद्रूपप्रमातृविश्रान्तत्वे सर्वमेतद्युज्यते नान्यथा, इति ॥ १६ ॥

ननु प्रयोज्यप्रयोजकसत्ताकतालक्षणापेक्षा[2] यदि स्वात्मैकनिष्ठत्वे

---

समन्वयस्य तद्भवेदित्यत आह—'वस्त्वनुसरण' इति। हि–यस्मात्, वस्त्वनुसरणप्राणः–वस्त्वनुसरणेन लब्धसत्ताकः, वस्त्वनुसरीति यावत्। विकल्पः अनुभवानुसारितयैव-केवलमनुभवानुसारित्वेनैव। नन्वत्रापि अनुभवानुसारेण वस्तुनिष्ठा अस्तु इत्यत आह 'सा च' इति। सा च–अनुभवानुसारिता च, इह–क्रियासमन्वयविकल्पे। कुत इत्यपेक्षायामाह 'वस्त्वप्रभवत्वेन' इति। वस्तुजे एव विकल्पे अनुभवानुसारित्वं भवतीति भावः। ननु कुतो हेतोः वस्त्वप्रभवत्वेन अनुभवानुसारिता इह नास्ति इत्यत आह 'वस्त्वनुसारी हि' इति। हि–यस्मात्, अनुभवः वस्त्वनुसारी भवति। नन्वत्र वस्तु अस्त्येवेत्यत आह 'वस्तु च' इति। वस्तु च–समन्वयाश्रयं वस्तु च, स्वात्मनिष्ठम्–स्वात्ममात्रनिष्ठम्, प्रमातारं विना स्वविषयानुभवोत्पादेऽसमर्थमिति यावत्, भवति, अतः सतोऽपि तस्य असत्कल्पत्वमेवेति भावः। फलितमाह 'तस्मात्' इति।

एवमत्र श्लोके योजना। यतो जडभावानां स्वात्ममात्रनिष्ठानां सप्तम्यर्थः नोपपद्यते अतएव हेतोः क्रियाकारकभावाख्यः—क्रियाकारकभावनामकः[3], विभक्त्यर्थः–समस्तसुप्तिङादिवाच्यभूतः, भावसमन्वयः–जडभावाश्रयः संबन्धः, प्रमात्रेकाश्रय एव–चेतनैकविश्रान्तः सन्नेव युक्तो भवति नान्यथा। प्रमात्रगृहीतं हि जडवस्तु सर्वथाऽसत्कल्पमेवेति भावः। इति ॥ १६ ॥

अथ सप्तदशश्लोकस्यावतरणिकां करोति 'ननु' इति

अत्र टीकाः—

प्रयोज्या प्रयोजिका च सत्ता ययोः कार्यकारणयोः तौ प्रयोज्यप्रयोजकसत्ताकौ तयोर्भावस्तत्ता, तत् (सा ?) लक्षणम्–स्वरूपं यस्याः सा। स्वात्मैकनिष्ठत्वे-

---

1 वस्तुप्रभवत्वेन—K, S. S.

2 प्रयोज्यप्रयोजकसत्ताकत्वलक्षणा—K. S. S.

3 ——क्रियानामकः—C.

नोपपद्यते, तर्हि कार्यकारणयोस्तादात्म्यवादिनां सांख्यानां मते सा संभवत्येव, तत् किं चैतन्यविजृम्भात्मककर्तृवादसमर्थनेन ? इत्याशङ्कयाह

परस्परस्वभावत्वे कार्यकारणयोरपि ।
एकत्वमेव भेदे हि नैवान्योन्यस्वरूपता ॥ १७ ॥

यदि बीजस्याङ्कुरः स्वभावस्तर्हि अङ्कुर एव न बीजं स्यात् किंचित् विपर्ययो वा स्यात ,—इति किं कारणं किं वा कार्यम् ; अथ अन्यद्बीजमङ्कुरोऽन्यः, तर्हि न परस्परात्मकत्वम् , भेदाभेदौ हि एकदैकविषयौ विरुद्धावेव ॥ १७ ॥

नन्वेवमपि बीजमङ्कुरादि विचित्रमवभातं दीर्घदीर्घपरामर्शशालिभिः स्रोतोवदविच्छिन्नस्वरूपमेव निर्बाधं प्रत्यवमृश्यते । तथा च क गतं बीजम् ,—इति प्रश्ने वक्तारो भवन्ति, न कुत्रचित् गतमङ्कुरात्मना

---

प्रत्येकं स्वात्मैकमात्रविश्रान्तत्वे सा—अपेक्षा, संभवत्येव इति, तादात्म्यनिष्ठत्वेन स्वात्मैकनिष्ठत्वाभावादिति भावः । तत्—ततः कारणात्, चैतन्यविजृम्भात्मकः—चैतन्यविलासरूपः यः कर्तृवादः तस्य समर्थनेन, साधनेनेत्यर्थः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'परस्पर' इति ।

अत्र टीकाः—

विपर्ययः—बीजमेव नांकुरः किञ्चिदित्येवं रूपः । कुतो न परस्परात्मकत्वमित्यत आह भेदाऽभेदौ हि इति । एकदेशविषयौ—एकदेशगतौ ॥ १७ ॥

अथाष्टादशस्य श्लोकस्यावतरणिकां करोति नन्वेवमपि इति ।

अत्र टीकाः—

दीर्घदीर्घः यः परामर्शः तेन शालते इति तादृशैः, न तु बीजपरामर्शनिष्ठैः कर्तृभिरित्यर्थः । निर्बाधम्—औत्तरकालिकबाधारहितम् , प्रत्यवमृश्यते—परामर्शविषयतां नीयते । प्रत्यवमर्शमेव दर्शयति तथा च इति, वक्तारः—इति विशेष्यस्य[1] दीर्घदीर्घपरामर्शशालिनः इति विशेषणत्वेन[2] योजनीयम् । किं वक्तारो भवन्तीत्यपेक्षायामाह 'न कुत्र' इति । तत्—बीजम् ।

---

1 विशेषणस्य—C 2 विशेष्यत्वेन—C.

वर्तते, अङ्कुरीभूतमयमङ्कुरस्तत् इति । एवं प्रधानं महदादिधरान्तीभूतं यावद्वितत्तीभूतमनन्तसर्गप्रलयपरम्परात्मतां प्राप्तम्,—इति विततग्राहिणी प्रतीतिः । भागाभिनिवेशवशात् तु कारणकार्यतापरिकल्पनं तस्यैव भावस्य विशसनप्रायम्,—इत्याशङ्क्याह

**एकात्मनो विभेदश्च क्रिया कालक्रमानुगा ।**
**तथा स्यात्कर्तृतैवैवं तथापरिणमत्तया ॥ १८ ॥**

इह दीर्घदर्शिना प्रत्यक्षानुमानागमान्यतमप्रमाणमूलां प्रत्यभिज्ञामाश्रित्य तदेवेदं सुखदुःखमोहसाम्यमनन्तप्रकारवैषम्यावलम्बनेन

---

इति शब्दः प्रमेयपरिसमाप्तौ । दृष्टान्तमुक्त्वा दार्ष्टान्तिकं कथयति एवम् इति । एवम्–तद्वत्, प्रधानम्–प्रकृतितत्त्वम्, महदादि–महत्तत्त्वमारभ्य, धरान्तीभूतम्–धराभावं तावत् परिणतम् । तथा यावद्वितत्तीभूतम्–यथोचितविस्तारभावेन परिणतम् । तथा अनन्ता–अनन्तवस्तुनिष्ठत्वेन अपरिच्छिन्ना या सर्गप्रलयपरम्परा, तदात्मताम्–तद्भावम्, प्राप्तम् भवति । इति–एवम्, विततग्राहिणी–एकस्य प्रधानस्य विस्तीर्णतया ग्रहणकारिणी, प्रतीतिः भवति । ननु तर्हि कथं महदादीनां कारणादिभावेन भेदेन ग्रहणं दृश्यते इत्यत आह 'भाग' इति । भागेषु–महदादिरूपेषु यः अभिनिवेशः भेदेन ग्रहणरूपो हठः, तस्य वशात्–सामर्थ्यात्, कारणकार्यतापरिकल्पनम्–कार्यकारणभावपरिकल्पनं भवति, तत्र प्रधानादिषु कारणतामात्रपरिकल्पनम्, महदादिषु तु कार्यकारणता[2]मात्रपरिकल्पनमिति विभागः । कारणकार्यतापरिकल्पनं किम् ? तस्यैव भावस्य–प्रधानरूपस्य वस्तुनः एव, विशसनप्रायम्–मरणकल्पम्, रूपान्तरग्रहणरूपमिति यावत् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे '**एकात्मनः**' इति ।

अत्र टीकाः—

'**एकात्मनः**' इति व्याख्यातुं प्रक्रियां करोति 'इह' इति । इह–भासमाने जगति, दीर्घदर्शिना–नत्वापातदर्शिना कर्त्रा, प्रत्यक्षानुमानागमानां मध्ये यत् अन्यतमं प्रमाणं तदेव मूलं यस्याः तादृशीम्, 'प्रत्यभिज्ञामाश्रित्य' इति–एवम्,

---

1 कार्यकारणतापरिकल्पनम्—K. S. S.

2 The M. S. has कार्यता after कार्यकारणता

विश्वीभूतम्,—इति समर्थ्यते। तत्र प्रत्यभिज्ञानबलेन यदेकात्मकमेकस्वभावं तस्य यो भेदोऽन्यान्यरूपता इयमेव सा क्रियोच्यते, यतः काललक्षणेन क्रमेणानुगता, ते हि अन्यान्यस्वभावा युगपत् न भान्ति, पूर्वापरीभूतरूपतैव च क्रियोच्यते। यत एवं क्रिया 'तथा' इति तेन प्रकारेण प्रधानादेः क्रियाविशेषलक्षणेन कर्तृतैव स्यात्, नतु शुष्कं कारणतामात्रं, यतो हेतोः 'तथा' इति तेन तेन महदादिप्रकारेण सततमेव क्रमिकां तथाभासनरूपां परिणामलक्षणां क्रियामाविशतः परिण-

---

समर्थ्यते—समर्थनाविषयतां नीयते। इति किमिति ? इदम्—अग्रे भासमानं वस्तुजातम्, तदेव सुखदुःखमोहसाम्यम्—गुणत्रयसमानतारूपम् प्रधानमेव भवति नान्यत् किञ्चित् ? इदं कीदृशम् ? अनन्तप्रकारम्—बहुप्रकारम्, यद्वैषम्यम्—महदादिरूपा विषमता, तस्य अवलम्बनेन आश्रयणेन, विश्वीभूतम्—जगद्भावेन परिणतम्, इति। उक्तप्रक्रियावष्टम्भेन **'एकात्मनः'** इति व्याचष्टे 'तत्र' इति। तत्र—उक्ते वस्तुनि सति, प्रत्यभिज्ञाबलेन—प्रत्यक्षान्यतममूलप्रत्यभिज्ञानबलेन, एकस्वभावम्—प्रधानाख्यमेकस्वरूपम्। षष्ठीयोजनां करोति तस्य इति, **त्रिभेदः** इति पदं व्याचष्टे भेदः इति। अत्रापि पर्यायमाह अन्यान्य इति। सा—पूर्वसाधिता। **क्रिया** इति निगदव्याख्यातम्। उच्यते इति शेषत्वेन अध्याहृतम्। **'कालक्रमाऽनुगा'** इति हेतुगर्भविशेषणत्वेन व्याचष्टे **'यतः'** इति। **काललक्षणेन**—कालस्वरूपेण, एतेन कालक्रमः अनुगः यस्याः सेति विग्रहो दर्शितः। कथमित्यपेक्षायां समर्थनं करोति 'ते हि' इति। हि—यस्मात्, ते—महदादिरूपाः। अन्ये अन्ये—भिन्नभिन्नाः। मा भान्तु ततः किम् इत्यत आह 'पूर्व' इति। स्फुटं हि पाकक्रिया विक्लित्त्यादिभावेन पूर्वापरीभूतरूपेत भावः। पूर्वार्धं व्याख्याय उत्तरार्धं व्याख्यातुमवतरणिकां करोति 'यतः' इति। एवम्—कालक्रमाऽनुगा, **'तथा'** इति व्याचष्टे **'तेन'** इति। प्रधानादेः इति शेषत्वेन अध्याहृतम्। **'एवम्'** शब्दं व्याचष्टे **'क्रिया'** इति। शुष्कम्—कर्तृतारहितम्, क्रियाविष्टं हि कारकं कारकमिति भावः। **'तथापरिणमत्तया'** इति व्याख्यातुं योजनां करोति 'यत' इति। तत्र **'तथा'** इत्यवयवं व्याचष्टे 'तेन' इति, 'आदि' शब्देनाऽहंकारादीनां ग्रहणम्। **'सततमेव'** इति योग्यतया अध्याहृतम्। परिणामक्रियाकर्तारमध्याहरति **'क्रमिकाम्'** इति। **तथाभासनरूपाम्**—महदादिभावेन स्फुरणरूपाम्, **'आविशतः'** इत्यनेन

मत्ता किंचिद्रूपं परिवर्ज्य त्यक्त्वा व्यावर्त्यमनुवर्तनीयं[1] च व्यवस्थाप्य निर्वर्त्यमानतृतीयरूपप्रह्वता[2] प्रधानादेस्तया हेतुभूतया ॥ १८ ॥

ननु प्रधानं परिणामक्रियायां कर्तृरूपमियता समर्थितम्,—इति को दोषो, न हि पुरुषवदस्याकर्तृत्वमिष्यते ? इत्याशङ्क्याह

---

अग्रे स्थितस्य 'प्रधानादेः' इत्यस्य योजना । '**परिणमत्तया**' इत्यस्य '**परि**' इत्यवयवं व्याचष्टे 'परि' इति । अत्रापि पर्यायमाह 'त्यक्त्वा' इति । व्यावर्त्यम्—त्याज्यम्, किञ्चिद्रूपं त्यक्त्वा इति योजना । '**परि**' इत्यस्य द्वितीयमर्थमाह अनुवर्तनीयम् इति । अनुवर्तनीयम्—सिद्धतया ग्राह्यम्, व्यवस्थाप्य-विशेषेण स्थापयित्वा । '**णमत्ता**' इत्यवयवं व्याचष्टे 'निवर्त्यमान' इति । निर्वर्त्यमानम्—इतः परं संपाद्यमानम्, तृतीयं रूपम्—व्यावर्त्यानुवर्त्यापेक्षया तृतीयभूतम्, रूपम्, तत्र प्रह्वता—प्रह्वीभावः, न्यग्भवनम्[3], तद्भावेन स्फुरणमिति यावत् । तृतीयायोजनं करोति '**तया**' इति । तृतीयार्थमाह हेतु इति । हेतावियं तृतीया ।

एवमत्र श्लोके योजना । 'च' शब्दः एवार्थे, एकात्मनः-एकप्रत्यभिज्ञानबलेनैकस्वभावस्य प्रधानादेः, विभेदश्च—विभेद एव, क्रिया भवति । कुतः ? यतः सा कालक्रमाऽनुगा-पूर्वापरीभूतरूपा, एकस्य विभेदश्च कालक्रमाऽनुगत्वमेवेति भावः । एवं सति तथा-तेन तेन प्रधानादेः क्रियावेश-लक्षणेन प्रकारेण, प्रधानादेः कर्तृतैव स्यात् । कया हेतुभूतया ? तथापरिणमत्तया, महदादिभावेन परिणमत्वेन हेतुभूतेनेत्यर्थः । इति ॥ १८ ॥

अथैकोनविंशतिश्लोकस्यावतरणिकां करोति 'ननु' इति ।

अत्र टीकाः—

इयता-एतेन प्रपञ्चेन, अस्य—प्रधानस्य । ''इष्यते' इति, साङ्ख्यैरिति

---

1 अनुवर्तयितव्यम्—K. S. S.

2 निवर्त्यमान—K. S. S.

3 न्यग्भावनम्—C.

न च युक्तं जडस्यैवं भेदाभेदविरोधतः ।
आभासभेदादेकत्र चिदात्मनि तु युज्यते ॥ १६ ॥

एवमित्यभिन्नरूपस्य धर्मिणः सततप्रवहद्[1]धर्मभेदसंभेदस्वातन्त्र्यलक्षणं परिणमनक्रियाकर्तृकत्वं यदुक्तं तत् प्रधानादेर्न युक्तं जडत्वात्, जडो हि नाम परिनिष्ठितस्वभावः प्रमेयपदपतितः स च रूपभेदाद्भिन्नो व्यवस्थापनीयो नीलपीतादिवत्, एकस्वभाववत्त्वाच्चाभिन्नो नीलवत्, न तु स एव स्वभावो भिन्नश्चाभिन्नश्च भवितुमर्हति विधिनिषेधयोः कर्तृ[2]त्वेन योजनीयम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'न च' इति ।

अत्र टीकाः—

'एवम्' इत्यस्य कर्तृवाचकत्वेन व्याख्यां करोति । अभिन्नरूपस्य—एकरूपस्य, धर्मिणः—बीजरूपस्य, सततम्—अविच्छिन्नं यथा भवति तथा प्रवहन्तः—सञ्चरन्तः ये धर्मभेदाः—अंकुरादिधर्मविशेषाः, तेषां यः संभेदः—समवायः तेन, तद्भावेनेति यावत्, स्वातन्त्र्यलक्षणम्—स्वातन्त्र्यरूपम्, यत् परिणमनक्रियाकर्तृत्वम्, 'यत्' शब्दाकाँक्षां पूरयति तत् इति । तत्—यच्छब्दकथितं वस्तु, 'प्रधानादेः' इति । आदिशब्देन महदादेर्ग्रहणम् । 'जडस्य' इति विशेषणं हेतुत्वेन व्याचष्टे 'जडत्वात्' इति । 'न युक्तम्' इति निगदव्याख्यातम् । 'च' शब्दस्य पादपूरणार्थत्वात् व्याख्या न कृता । कथम् इत्यपेक्षायामत्र समर्थनं करोति 'जडो हि' इति । परिनिष्ठितस्वभावः— परिच्छिन्नस्वरूपः, स च—जडश्च, भिन्नो व्यवस्थापनीयः—भेदेनव्यवस्थापयितुं योग्यः । 'अभिन्नः' इत्यपि 'व्यवस्थापनीयः' इत्यनेन युज्यते, स एव, एक एवेत्यर्थः ।

1 सततप्रवहद्बहुतरभेदसंभेद—K. S. S.

2 कर्तृत्वेनेतियोजनीयम्—C.

रेकत्रैकदा विरोधात्। कश्चित् स्वभावो भिन्नः कश्चित् त्वभिन्नः;— इति चेत्, द्वौ तर्हि इमौ स्वभावावेकस्य स्वभावस्य भवेताम, न चैवं युक्तं

'भेदाभेदव्यवस्थैवमुच्छिन्ना सर्ववस्तुषु।'

इति न्यायात्। एवं जडस्य 'इदम्' इति परिनिष्ठिताभासतया सर्वतः परिच्छिन्नरूपत्वेन प्रमेयपदपतितस्य नायं स्वभावभेद एकत्वे सत्युपपद्यते। यत्तु प्रमेयदशापतितं न भवति किं तु चिद्रूपतया प्रकाशपरमार्थरूपं चिदेकस्वभावं स्वच्छम्, तत्र भेदाभेदरूपतापलभ्यते; अनुभवादेव हि स्वच्छस्यादर्शादेरखण्डितस्वस्वभावस्यैव पर्वतमतङ्गजादिरूपसहस्रसंभिन्नं वपुरुपपद्यते। न च रजतद्विचन्द्रादि यथा शुक्तिकैकचन्द्ररूपतिरोधानेन[1] वर्तते, तथा दर्पणे पर्वतादि। दर्पणस्य हि तथावभासे दर्पणतैव सुतरामुन्मीलति—'निर्मलोऽयमुत्कृष्टोऽयं दर्पणः' इत्यभिमानात्। न हि पर्वतो बाह्यस्तत्र संक्रामति स्वदेशत्यागप्रसङ्गादस्य, न

---

एकत्र–एकस्मिन् देशे, एकदा–एकस्मिन् काले। ननु भवेतां को दोषः इत्यत आह 'न च' इति। कुतो न युक्तमित्यत आह 'भेद' इति। एवम्–एकस्य स्वभावद्वयाङ्गीकारे। उपसंहारं करोति 'एवम्' इति। 'इदमिति' परिनिष्ठिताभासतया–'इदम्' इति परिच्छिन्नाभासविषयतया, सर्वतः–स्वव्यतिरिक्तेभ्यः सर्ववस्तुभ्यः। पूर्वार्धं व्याख्याय उत्तरार्धं व्याचष्टे 'यत्तु' इति। तत्र–तस्मिन् चिदेकस्वभावे स्वच्छे. 'युज्यते' इति व्याचष्टे 'उपपद्यते' इति। कथं युज्यते इत्यपेक्षायां दृष्टान्तद्वारेण समर्थनं करोति 'अनुभवादेव' इति। हि–यस्मादर्थे, संभिन्नम्–मिश्रीभूतम्, वपुः–स्वरूपम्, रूपतिरोधानेन–सहजस्वरूपानभिव्यक्त्या, तथा दर्पणे पर्वतादि कर्तृ रूपतिरोधानेन, न च वर्तते इति योजनीयम्। कुतो न वर्तत इत्यत आह 'दर्पणस्य हि' इति। तथावभासे–पर्वताद्यवभासे, उन्मीलति–स्फुटीभवति, न तु तिरोधानं भजतीत्यर्थः। कुतः उन्मीलतीत्यतआह निर्मलोऽयम् इति। ननु बाह्यः पर्वत एव तत्रागत्य तिष्ठतीत्यत आह 'नहि' इति। अस्य–पर्वतस्य, नहि परिमितस्यैकदा स्थानद्वये

---

1. स्वरूपतिरोधानेन—K. S. S.

चास्य पृष्ठेऽसौ भाति दर्पणानवभासप्रसङ्गात्, न च मध्ये निबिडकठिनसप्रतिघस्वभावस्य तत्रानुप्रवेशसंभावनाभावात्, न पश्चात् तत्रादर्शनात् दूरतयैव च भासनात्, न च तन्निपतनोत्फलितप्रत्यावृत्ताश्चाक्षुषा मयूखाः पर्वतमेव गृह्णन्ति, बिम्बप्रतिबिम्बयोरुभयोरपि पर्वतपार्श्वगतदर्पणाभासे[1]ऽवलोकनात्। तस्मात् निर्मलतामाहात्म्यमेतत् यदनन्तावभाससंभेदश्चैकता च। गिरिशिखरोपरिवर्तिनश्चैकत्रैव बोधे नगरगतपदार्थसहस्राभासः,—इति चिद्रूपस्यैव कर्तृत्वमुपपन्नम्, अभिन्नस्य भेदावेशसहिष्णुत्वेन क्रियाशक्त्यावेशसंभवात्॥ १९॥

---

अवस्थानं युक्तमिति भावः। अस्य–दर्पणस्य, असौ–पर्वतः, पृष्ठे–पृष्ठदेशे, कुतः इत्यत आह 'दर्पण' इति। नहि दर्पणपृष्ठे स्थितं वस्तु भासते इति भावः। मध्ये–दर्पणमध्यदेशे, न च भातीति पूर्वेण संबन्धः। पश्चात्–दर्पणपश्चाद्भागे, तत्र–पश्चाद्भागे, पुरत एव–दर्पण पुरोभागे एव, तत्र–तस्मिन् दर्पणे यन्निपतनम् तेन उत्फलिताः उत्थिताः–अतएव प्रत्यावृत्ताश्च–प्रतीपमागताश्च। चाक्षुषाः–नेत्रसंबन्धिनः, मयूखाः–रश्मयः, पर्वतमेव–सहजपर्वतमेव, न तु दर्पणे प्रतिबिंबतया स्थितम्। कुतो न गृह्णन्तीत्यत आह 'बिम्ब' इति। बिंब प्रतिबिंबयोः–सहजस्य पर्वतस्य प्रतिबिम्बितस्य[2] पर्वतस्य च, तत्र 'पार्श्वगतदर्पणाभासे' इति प्रतिबिम्बे एव योजनीयम्। नहि बिम्बं पर्वतनिकटस्थदर्पणे दृश्यते, स्वप्राधान्येन तस्य दर्शनात्। फलितमाह तस्मात् इति। एतत्किमित्यत आह अनन्तावभाससंभेदः–अनन्तावभासयोगित्वम्। एकता च–एकत्वञ्च। एतद्द्वयमित्यर्थः। ननु दर्पणस्य निर्मलत्वेऽपि चेतनत्वं नास्ति, तथा प्रतिबिम्बाद् भेदेन स्फुरणञ्च दृश्यते इति कथमस्य दृष्टान्तत्वं युक्तमित्यत आह 'गिरि' इति। गिरिशिखरोपरिवर्तिनः–गिरिशिखरस्थपुरुषसबन्धिनः, नगरगतपदार्थसहस्राभासः–नगरगतपदार्थसहस्रज्ञानम्, तद्भावावभासनमिति यावत्।

एवमत्र योजना। एवम्–पूर्वोक्तं परिणामक्रियाकर्तृत्वम्[3], जडस्य–प्रधानस्य, न युक्तम्, कुतः? भेदाभेदविरोधतः–जडस्य भेदाभेदौ अयुक्तावेव, तु–

---

1 पार्श्वगतदर्पणावभासे—K. S. S. 2 प्रतिबिम्बतया—C.

3 परिणमनक्रियाकर्तृत्वं तत् यच्छब्दाकाँक्षाम्—C.

नन्वेतावता विज्ञानमेव ब्रह्मरूपमिमां विश्वरूपतावैचित्रीं परि-
गृह्णातु किमीश्वरताकल्पनेन[1] इत्याशङ्क्याह

वास्तवेऽपि चिदेकत्वे न स्यादाभासभिन्नयोः ।
चिकीर्षालक्षणैकत्वपरामर्शं विना क्रिया ॥ २० ॥

चिद्रूपस्यैकत्वं यदि वास्तवं भेदः पुनरयमविद्योपप्लवात्,—
इत्युच्यते[2] तदा कस्यायमविद्योपप्लवः,—इति न[3] संगच्छते

---

व्यतिरेके, तत् एकत्र चिदात्मनि युज्यते, कुतः ? आभासभेदात्, अतिनिर्मलत्वेन आभासभेदसहिष्णुत्वादिति भावः । इति ॥ १६ ॥

अथ विंशस्य श्लोकस्यावतरणिकां 'नन्वेतावता' इति ।

अत्र टीकाः—

एतावता—उक्तेन प्रपञ्चेन, विज्ञानम्—निर्विमर्शः प्रकाशः, ब्रह्मरूपम्,

'विज्ञानं ब्रह्म'

इति श्रुतेरिति भावः । इमाम्—पुरोभासमानाम्, ईश्वरताकल्पनेन—विमर्शरूपैश्वर्यविकल्पनेन, इत्याशंक्य—वेदान्त्युक्तमेतदाशंकाविषयतां नीत्वा । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'वास्तवेऽपि' इति ।

अत्र टीकाः—

श्लोकं व्याख्यातुं प्रक्रियां करोति 'चिद्रूपस्य' इति । वास्तवम्—सहजम्, पुनः शब्दः पक्षान्तरे, अयम्—भासमानभावरूपः, अविद्या—उपप्लवात्मया कृतादुपप्लवाद्धेतोः, उच्यते, वेदान्तिभिरिति भावः । तथा च श्रुतिः ।

'एकमेवाद्वितीयं ब्रह्म' इति । तथा—

'इन्द्रो मायाभिः पुरुरूप ईयते'

इति च । यदीत्यस्याकांक्षां पूरयति 'तदा' इति । न संगच्छते—न युज्यते ।

---

1 किमीश्वरतापरिकल्पनया—K. S. S.

2 इत्युच्यते कस्यायम्—K. S. S.

3 कस्यायमविद्योपप्लव इति न संगच्छते—K. S. S.

इति न संगच्छते, which Bhāskara explains as इति न युज्यते, sounds rather awkward with the question कस्यायमविद्योपप्लवः. Was the text तदायमविद्योपप्लवः न संगच्छते ?

ब्रह्मणो हि विद्यैकरूपस्य कथमविद्यारूपता, न चान्यः कश्चिदस्ति वस्तुतो जीवादिर्यस्याविद्या भवेत्। अनिर्वाच्येयमविद्या,—इति चेत्, कस्य अनिर्वाच्या,—इति न विद्मः; स्वरूपेण च भाति, न चानिर्वाच्या,[1]—इति किमेतत्?; युक्त्या नोपपद्यते,—इति चेत् संवेदतिरस्कारिणी[2] का खलु युक्तिर्नाम, अनुपपत्तिश्च भासमानस्य कान्या भविष्यति। सद्रूपमेव ब्रह्माभिन्नं चकास्त्यविकल्पके,[3] विकल्पबलात्तु भेदोऽयम्,—इति चेत्, कस्यायं विकल्पनव्यापारो नाम ? ब्रह्मणश्चेत्, अविद्यायोगो न च अन्योऽस्ति; अविकल्पकं च सत्यं विकल्पकमसत्यम्,—इति कुतो विभागो भासमानत्वस्याविशेषात्। भासमानोऽपि भेदो

---

ब्रह्मणः–व्यापकस्य चित्तत्वस्य, विद्यैकरूपस्य–ज्ञानैकरूपस्य, तथा च श्रुतिः।

'सत्यं ज्ञानमनन्तं ब्रह्म'

इति। नहि प्रकाशस्य तमोरूपत्वं युक्तमिति भावः। यस्य–यस्य जीवादेः, अनिर्वाच्या–एतदाश्रितेति वक्तुमशक्या, किमेतत्, न किञ्चिदेतदिति भावः। यो हि भाति स वक्तुमपि शक्यते इति भावः। संवेदतिरस्कारिणी–अनुभवापह्नवकारिणी। नन्वत्रानुपपत्तिरस्ति इत्यत आह 'अनुपपत्तिश्च' इति। अन्या–भासमानस्वरूपविरुद्धा, सद्रूपम्–सन्मात्रस्वरूपम्, अभिन्नम् सजातीय-विजातीयस्वगतभेदरहितम्, अविकल्पके–निर्विकल्पावस्थायाम्, विकल्पन-व्यापारः-विकल्पाख्यो व्यापारः,अविद्यायोग इति यावत्,तदा प्राप्त इति शेषः। तदा अविद्यायोगः प्राप्तः, विकल्पस्य अविद्यारूपत्वात्। नन्वन्यस्य भवतु इत्यत आह 'न च' इति। अन्यः–ब्रह्मव्यतिरिक्तः कोपि, कुतः–कस्माद्धेतो-रागतः। नन्वविकल्पके अन्यथा भासमानत्वं विकल्पेत्वन्यथा इति तत्कृतोऽयं सत्यासत्यविभागः इत्यत आह 'भासमानत्वस्य' इति। यदेव भासमानत्वं

---

1 न चानिर्वाच्या as found in K. S. S. does not fit in with the context. अनिर्वाच्या च would be a better reading.

2 संवेदनतिरस्कारिणी—K. S. S.

3 चकास्त्यविकल्पेन—K. S. S.

बाधितः,—इति चेत्, अभेदोऽपि एवम्, भेदभासनेन तस्य बाधात्। विपरीतसंवेदनोदय एव हि बाधो नान्यः कश्चित्। बाधोऽपि च भासमानत्वादेव सन् नान्यतः,—इति भेदोऽपि भासमानः कथमविद्या। भासनमवधीर्य आगमप्रमाणकोऽयमभेदः[1]—इति चेत् आगमोऽपि भेदात्मक एव वस्तुभूतः[2] प्रमातृप्रमाणप्रमेयविभागश्च,—इति न किंचिदेतत्। तस्मात् वास्तवं चिदेकत्वमभ्युपगम्यापि तस्य कर्तृत्वलक्षणा भिन्नरूपसमावेशात्मिका क्रिया नोपपद्यते; परामर्शस्वरूपं[3] तु

सत्यरजतस्य तदेव शुक्तिकारजतस्येति भावः। एवम्, बाधित इत्यर्थः। कुतः इत्यपेक्षायामाह 'भेद' इति। ननु कथमभेदबाधो युक्त इत्यत आह 'विपरीत' इति। विपरीतसंवेदनोदयः—विपरीतवस्तुज्ञानप्रादुर्भाव एव, अन्यः-तद्व्यतिरिक्तः। कथमविद्या, न अविद्यारूप इत्यर्थः। भासमानम्-व्यावहारिकैः प्रत्यक्षादिभिः स्फुरणम्, अवधीर्य-उपेक्ष्य, आगमप्रमाणकः—

'नेह नानास्ति किञ्चन'

इत्यादिश्रुतिप्रमाणकः। भेदात्मक एव वस्तुभूतः-भेदप्रधान एव सन् परमार्थभूतो भवति, सत्तां लभते इति यावत्। तदुक्तम् :—

यदभिन्नं स्वसंवित्तौ तत्परस्य यदोच्यते।
तदा भिन्नमिवाभाति शाब्दीं भूमिमुपाश्रितम्॥

इति। प्रमातृप्रमाणप्रमेयविभागश्च भेदात्मक एव वस्तुभूत इति योजना,। न किञ्चिदेतत्, एतद् वेदाद्युक्तं वस्तु न किञ्चिद् भवतीत्यर्थः। उक्तप्रक्रियावष्टम्भेन श्लोकं व्याचष्टे 'तस्मात्' इति। आभासभिन्नयोः इत्यतो निष्कृष्य चित्तत्वं 'तस्य' इत्यनेनोक्तम्। तस्य, वास्तवैकत्वाधारस्य चित्तत्त्वस्येत्यर्थः। पूर्वोक्तं क्रियास्वरूपमनुवदति 'कर्तृत्व' इति। कर्तृत्वलक्षणम्—कर्तृत्वस्वरूपम्, यत् अभिन्नम्-कर्तुर्भेदरहितम्, रूपम्-स्वरूपम्, तत्र यः समावेशः, अर्थात्तस्य कर्तुरेव सम्यगावेशनम्, स आत्मा यस्यास्तादृशी।

1 आगमैकप्रमाणकः—K. S. S.
2 भेदात्मकएवावस्तुभूतः—K. S. S
3 परामर्शलक्षणम्—K. S. S.

स्वातन्त्र्यं यदि भवति तदोपपद्यते सर्वम्। परामर्शो हि चिकीर्षारूपेच्छा, तस्यां च सर्वमन्तर्भूतं निर्मातव्यमभेदकल्पेनास्ते,—इत्युक्तं

'स्वामिनश्चात्मसंस्थस्य···।' (१।५।१०)

इत्यत्र। तेन स्वात्मरूपमेव विश्वं सत्यरूपं प्रकाशात्मतापरमार्थमत्रुटितप्रकाशाभेदमेव सत् प्रकाशपरमार्थेनैव भेदेन भासयति[1] महेश्वरः,—इति तदेवास्यातिदुर्घटकारित्वलक्षणं स्वातन्त्र्यमैश्वर्यमुच्यते। आभासभिन्नयोरिति क्रियापेक्षा संबन्धसामान्ये षष्ठी, पश्चाद्यथोचितं विभज्यते। आभासेन भिन्नौ जडाजडाभासौ, जडो घटादिः कर्मरूप-

---

'न स्यात्' इति व्याचष्टे 'नोपपद्यते' इति। 'चिकीर्षा' इत्यादि 'विना' इत्यन्तं व्याचष्टे 'परामर्श' इति। परामर्शस्वरूपम्–विमर्शस्वरूपम्, सर्वम्–समस्तं क्रियादि। चिकीर्षा इति व्याचष्टे परामर्शो हि इति। तस्याम्–चिकीर्षारूपायामिच्छायाम्, निर्मातव्यम्–निर्मेयवस्तु, अभेदकल्पेन–अभेदरचनया, इच्छा हि इष्यमाणमयी एवोदेति इति भावः। तदुक्तम्:—

अयमेवोदयस्तस्य ध्येयस्य ध्यायिचेतसि।
तदात्मतासमापत्तिरिच्छतः साधकस्य या॥

इति। कुत्रोक्तमित्यत आह 'स्वामिनश्च' इति। इत्यत्र, अस्मिन् श्लोके इत्यर्थः। अत्र हीच्छाद्वारेण सर्वं कर्तृगतं साधितम्। फलितमाह 'तेन' इति। तेन–ततः कारणात्, महेश्वरः–परः शिवः, स्वात्मरूपमेव–इच्छाविषयतान्यथानुपपत्त्या स्वात्मरूपमेव सत्, अत एव सत्यरूपम्, तथा प्रकाशात्मतैव परमार्थः–सहजं रूपं यस्य तादृशम्। तथा अत्रुटितः प्रकाशात्–महाप्रकाशात् अभेदः यस्य तादृशम्। न हि मृदो घटत्वासादनेऽपि मृत्त्वं त्रुट्यतीति भावः। एवंविधं विश्वम्–जगत्, प्रकाशपरमार्थेनैव–प्रकाशप्राप्तसत्ताकेनैव, भेदेन भासयति–स्वतो भिन्नतया भासयति तत्र शक्तत्वात्, न चात्र पर्यनुयोगो युक्तः अग्नेरपि दाह्यदाहे तथापातात्। तदेव–विश्वप्रकाशनमेव, अस्य–महेश्वरस्य। 'आभासभिन्नयोः' इति। षष्ठ्यर्थमाह क्रिया इति। विभागमेव दर्शयति 'आभास' इति। जडाजडौ एव विभज्य कथयति 'घटादिः' इति। षष्ठी-

---

1 भेदेन प्रकाशयति—K. S. S.

श्चिदाभासः कर्तृरूपः,—इति तयोः क्रिया, एकस्य क्रियमाणत्वमपरस्य कर्तृत्वं न भवेत् । चिकीर्षारूपेण निर्मातव्याभेद[1]परामर्शात्मना विना एका चासौ क्रिया कथं भिन्नयोः स्वभावभूता भवेत् । कार्यकारणताप्रस्तावात् कर्तृकर्मणी उक्ते, कारकान्तराण्यपि तु एककर्तृत्वानुप्रवेशीनि परमार्थतोऽन्यथा करणादौ भिन्ने कारकव्राते कथमभिन्ना सा । यदि वा आभासेन यौ भिन्नौ जडचेतनौ तयोर्या चिकीर्षा एकस्येष्यमाणता, परस्यैषितृता तत्स्वभावमेकत्वपरामर्शं विना,—इति । यद्वा आभासभिन्नयोः 'अहमिदम्' इति यः परामर्श एकविश्रान्ति-

---

योजनां करोति 'तयोः' इति । क्रियया सह योजनां करोति 'क्रिया' इति । 'न स्यात्' इत्यनेन योजनं करोति 'एकस्य' इति । एकस्य—जडस्य, क्रियमाणत्वम्—करणरूपा क्रिया, अपरस्य—अजडस्य, कर्तृत्वम्—कर्तृत्वरूपा क्रिया । '**चिकीर्षालक्षणैकत्वपरामर्शं विना**' इति योजयति 'चिकीर्षा' इति । निर्मातव्यस्य यः अभेदेन—स्वाभेदेन परामर्शः तदात्मना, विना—ऋते, एका च—एकरूपा च, भिन्नयोः—जडाजडयोः, तत्सान्निध्ये तु भवेदेव, परामर्शस्य सर्वसहत्वादिति भावः । नन्वत्र कर्तृकर्मणोरेव चर्चा कृतेति कारकान्तराणां का वार्तेत्यत आह 'कार्य' इति । कारकान्तराणि—करणादीनि, एकम्—कर्तृनिष्ठं यत् कर्तृत्वं[2] तत्र अनुप्रवेशः—उपकारकत्वेन पश्चात्प्रवेशः एषामस्तीति तादृशानि । अन्यथा—अनुप्रवेशाभावे, करणादौ—करणादिरूपे, भिन्ने—कर्तृकर्मव्यतिरिक्ते, अभिन्ना—एका । एकत्राऽनुप्रवेशे तु बहूनामेकक्रियत्वं संभवत्येवेति भावः । अन्यथा योजनां कर्तुं पक्षान्तरमाह 'यदि वा' इति । 'चिकीर्षा' पदं द्वैविध्येन व्याचष्टे 'एकस्य' इति । एकस्य—जडस्य, इष्यमाणता—इषिकर्मत्वम्, परस्य चेतनस्य, एषितृता—इषि कर्तृत्वम्, तत्स्वभावम्—तल्लक्षणम्, इति—एवं योजना । पुनरन्यथा योजनां करोति 'यद्वा' इति । एकत्र—चित्स्वे या विश्रान्तिः सा रूपं यस्य तादृशः । एतेन '**आभासभिन्नयोः**' इत्यस्य '**परामर्श**' शब्देन सह संबन्धः कृतः । पुनरप्यन्यथा योजनां करोति 'आभास' इति । एतेन '**आभासभिन्नयोः**' इत्यस्य '**एकत्व**' इत्यनेन

---

1 निर्मातव्यभाववर्गाभेदपरामर्श—K. S. S.

2 एकं कर्तृनिष्ठं यत् कर्तृकत्वम्—C.

रूपश्चिकीर्षात्मा तं विना,—इति। आभासभिन्नयोरेकपरामर्शं विना चिकीर्षालक्षणा कथं क्रिया,—इति वा। एवं क्रियां वा चिकीर्षां वा परामर्शं वा अपेक्ष्य षष्ठी, नित्यसापेक्षत्वाच्च समासः ॥ २० ॥

एतत् उपसंहरति

**इत्थं तथा घटपटाद्याभासजगदात्मना।**
**तिष्ठासोरेवमिच्छैव हेतुता कर्तृता क्रिया ॥ २१ ॥**

[1]यथा न जडस्य कारणता न कर्तृता, तथानीश्वरस्य चेतनस्यापि,

---

संबन्धः कृतः। एताः योजनाः संकलय्य दर्शयति 'एवम्' इति। षष्ठी, षष्ठीद्विवचनमित्यर्थः। नन्वेवं सति सापेक्षस्य चिकीर्षाशब्दस्य परामर्शशब्दस्य च समासो न प्राप्नोति 'सापेक्षमसमर्थं भवति' इति हि उक्तम्, पदविधिस्तु समर्थ एव भवति इत्यत आह 'नित्य' इति। केचिद्धि अनित्यसापेक्षाः यथा 'ऋद्धस्य राज्ञः पुरुषः' इति। अत्र सापेक्षस्य 'राजन्' शब्दस्य पुरुषशब्देन समासो न युक्त एव। केचित्तु नित्यसापेक्षाः यथा 'देवदत्तस्य गुरुकुलम्' इत्यत्र सापेक्षस्यापि गुरुशब्दस्य कुलशब्देन सह समासः युज्यत एव इति। एकत्वेन संबन्धोऽपि फलतः परामर्शेनैवेति तस्य पृथक् कथनं न कृतम्।

एवमत्रश्लोके योजना। चिदेकत्वे वास्तवेऽपि सति, आभासभिन्नयोः क्रिया न स्यात्। कं विना? चिकीर्षालक्षणैकत्वपरामर्शं विना। तत्सत्त्वे तु स्यादेवेति भावः। अथवा आभासभिन्नयोः चिकीर्षालक्षणैकत्वपरामर्शं विना क्रिया न स्यादिति योजना। अथवा कयोः परामर्शं विना? आभासभिन्नयोः परामर्शं विना इति योजना। अथवा आभासभिन्नयोः एकत्वपरामर्शं विनेति संबन्धः। 'चिकीर्षालक्षणा' इति क्रिया विशेषणम् ॥ २० ॥

अथैकविंशस्य श्लोकस्यावतरणिकां करोति 'एतत्' इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'इत्थम्' इति।

अत्र टीका:—

'इत्थम्' इति पदं व्याचष्टे 'यथा' इति। कारणता इति सामान्याभि-

---

1 यतो—K. S. S.

इत्यनेनैव हेतुताप्रकारेणेदं[1] जातं[2] यत् य एव तथा चिकीर्षुस्तस्यैव सा चिकीर्षा बहिष्पर्यन्ततां प्राप्ता 'क्रिया' इत्यभिधीयते, सैव च कर्तृता तदेव च हेतुत्वं नान्यत् किंचित्। तेन 'घटस्तिष्ठति' इत्ययमर्थः— घटात्मना तिष्ठासुः स्वातन्त्र्यात् स्थानमभ्युपगच्छन् न तु तद्रूपमसहमानो यो महेश्वरः प्रकाशः स तिष्ठति—इति। घटपटाद्याभासरूपं यत्किल जगत् तदात्मना यः 'तथा' इति तेन तेन तज्जगद्गतजन्मस्थि-

---

प्रायेणोक्तम्। कर्तृता इति तु प्राधान्यात् विशेषाभिप्रायेण। हेतुताप्रकारेण, हेतुताव्यवस्थापनप्रकारेणेत्यर्थः। जातम्—सिद्धम्। इदं किमित्यपेक्षायामाह—'यत्' इति। योजनां कुर्वन् 'यत्' इत्यस्य वाक्येनाकांक्षां पूरयति 'य एव' इति। तथाचिकीर्षुः—तथा कर्तुमिच्छुः, तस्यैव—तथाचिकीर्षोरेव, सा चिकीर्षा—तथेच्छा, एतेन 'तथा' शब्दः 'इच्छा' शब्देन योजनीयः इति सूचितम्। बहिष्पर्यन्तताम्—बाह्यावयवचेष्टारूपताम्, सैव च—प्रोक्तरूपा क्रियैव च, तदेव च, सा क्रियैव चेत्यर्थः। हेतुत्वापेक्षं नपुंसकत्वम्। अन्यत्—इच्छारूपचिकीर्षाव्यतिरिक्तम्। अत्र 'चिकीर्षा' पदेन 'इच्छा' शब्दस्य व्याख्या तथैव च चिकीर्षोराक्षेप इति न कोपि विरोधः। अथवा 'तिष्ठासोः' इति विशेषणवशेन विशेष्यरूपस्य चिकीर्षोराक्षेपः। चिकीर्षुरेव हि परमेश्वरः कार्यभावेन तिष्ठति इति 'हेतुता' 'कर्तृता' पदयोः क्रियाविशेषणत्वेन 'सैव च' इत्यादिना योजनं स्फुटमेव। 'घटपटाद्यात्मना तिष्ठासोः' इति व्याख्यातुमवतरणिकां करोति 'तेन' इति। तिष्ठासुः—स्थातुमिच्छुः, स्थानम्—स्थितिम्, स्वरूपसत्तामिति यावत्, अभ्युपगच्छन्—अंगीकुर्वन्, अत्र हेतुः 'स्वातन्त्र्यात्' इति। नहि स्वतन्त्रस्य कुतोऽपि प्रतिघातः, स्वातन्त्र्यहानेरिति भावः। तद्रूपम्—भावप्रधानो निर्देशः, घटरूपताम्, न असहमानः, अपि तु किञ्चित्वेन सहनशीलः इत्यर्थः। 'इति' शब्दः अर्थकथनसमाप्तौ। अवतरणिकाविषयीकृतस्य विग्रहपूर्वं व्याख्यां करोति 'घट' इति। तदात्मना—तत्स्वरूपेण। 'तथा' शब्दमत्रापि मध्ये तन्त्रेण योजयितुमुपन्यस्यति। 'तथा इति' इति। अस्यैव व्याख्यां करोति 'तेन तेन' इति। ते ते च ते जगद्गता जन्मस्थि-

---

1 हेतुप्रकारेण—K. S. S.

2 इदं जातं, य एव K. S. S.

त्यादिभावविकारतद्भेदक्रियासहस्ररूपेण यः स्थातुमिच्छुः स्वतन्त्रः, तस्य या एवमिति विचित्ररूपेच्छा सैव क्रिया,–इति संबन्धः। तेन महेश्वर एव भगवान् विश्वकर्ता,–इति शिवम्॥ २१॥

इति श्रीमदाचार्योत्पलदेवविरचितायामीश्वरप्रत्यभिज्ञायां
श्रीमदाचार्याभिनवगुप्तकृतविमर्शिन्याख्यटीकोपेतायां
क्रियाधिकारे कार्यकारणतत्त्वनिरूपणं नाम
चतुर्थमाह्निकम्॥ ४॥

सम्पूर्णश्चायं क्रियाधिकारो नाम द्वितीयो विमर्शः॥ २॥

---

त्यादयो भावविकाराः तद्भेदरूपं यत्क्रियासहस्रम्–'जायते' इत्यादिरूपम्, तद्रूपेण, यः स्थातुमिच्छु। विशेष्यं कथयति 'स्वतन्त्रः' इति। षष्ठीयोजनां करोति 'तस्य' इति। 'एवम्' इति व्याचष्टे 'विचित्ररूपा' इति। 'या' इत्यस्याकांक्षां पूरयति 'सैव' इति। फलितं कथयन् "कर्तरि ज्ञातरि" इति प्रथमश्लोकस्य निर्वाहं करोति 'तेन' इति। एतेन ज्ञातृत्वमप्ययत्नसिद्धमेव, ज्ञातृत्वव्यतिरेकेण कर्तृत्वायोगात्। 'इति' शब्दः आह्निकसमाप्तौ 'शिव' पदं मङ्गलवाचकं परतत्त्वसूचकं च।

एवमत्र श्लोके योजना। इत्थम्–उक्तेनप्रकारेण, घटपटाद्यात्मना तिष्ठासोः स्वतन्त्रस्य चिकीर्षोः परमेश्वरस्य, एवम्–विचित्ररूपा तथेच्छैव क्रिया भवति। क्रिया का? हेतुता तथा कर्तृता, एतद्द्वयरूपेत्यर्थः। तथा शब्दस्य तन्त्रेण द्वियोजना। इति शिवम्॥ २१॥

इति श्रीमत्काश्मीरमण्डलान्तर्वर्त्याराध्यपादस्वतःसिद्धमहामाहेश्वरश्रीवैडूर्यकण्ठपुत्रश्रीमदवतारककण्ठात्मजश्रीभास्करकण्ठविरचितायां भास्कर्याख्यायां श्रीप्रत्यभिज्ञासूत्रविमर्शिनीटीकायां क्रियाधिकारे चतुर्थमाह्निकम्। क्रियाधिकाराख्यो द्वितीयो विमर्शः समाप्तिं गतः। इति शिवम्।

तृड्वाच्यस्य महेश्वरस्य कुरुते कृड्वाच्यतासादनात् ।
स्वातन्त्र्यं परिपूरितं सह तल्लो वाच्येन भावेन या ॥
पुष्टीभूतविदेः स्वरूपमुदिता शक्तिः स्फुटं यत्र सा ।
व्याख्यातोऽद्य मयाऽधिकार इह सोऽयं भास्करेणार्थतः ॥
नाभिमानो मनः कार्यः शिवः कर्ताऽत्र यत्स्थितः ।
तदैक्येनाभिमानस्ते यद्यस्ति स तु शोभनः ॥
शिवः कर्ता शिवो द्रष्टा शिवः पाठक एव च ।
व्याख्याता च शिवः प्रोक्तः शिवार्पणमिति स्फुटम् ॥

---

## आगमाधिकारे

# प्रथममाह्निकम् ।

### विमर्शिनी

यं प्राप्य सर्वागमसिन्धुसङ्घः पूर्णत्वमभ्येति कृतार्थतां च ।
तं नौम्यहं शांभवतत्त्वचिन्तारत्नौघसारं परमागमाब्धिम् ॥

---

# भास्करी

अत्र टीकाः—

शिवाच्चिन्मात्राख्यादतिमिततनोरागत-
मथो शिवायास्तन्मूर्तेर्ननु वदनमामर्शवपुषः ।
गतं सद्भिः सर्वैर्मतमथ च गाङ्गेयजलवद्
बहुस्रोतोयुक्तं सततमिह शास्त्रं हृदि भजे ॥ १ ॥

अथ तृतीयविमर्शरूपस्यागमाधिकारस्य निर्विघ्नपरिसमाप्तये, प्रचयगमनाय च मनसानुष्ठितमपि बहिः शिष्यशिक्षार्थं परतत्त्ववाचकागमशास्त्रनमस्कार-लक्षणं मंगलं सकलाधिकारतात्पर्यसूचकेन श्लोकेनोपनिबध्नाति "यं प्राप्य" इति । अहम्—अभिनवगुप्ताचार्याख्यः, शांभवम्—सकलकल्याणप्रादुर्भाव-स्थानशिवशक्त्यैक्यरूपपरशिवसंबन्धि यत् तत्त्वम्-स्वान्तःकृतसदाशिवादि-धरण्यन्ततत्त्वचतुस्त्रिंशकं महाप्रकाशमयमनारोपितं स्वरूपम् तस्य याः चिन्ताः-विचारणानि ता एव रत्नानि—अत्युपादेयत्वेन मणयः तेषां यः ओघः—समूहः, स एव सारः यस्य, अन्यचिन्तानां जलस्थानीयत्वात्-तम् । अत एव परम्—वेदादिमहाशास्त्रेभ्यः उत्तीर्णम्, तेषां सादाख्यतत्त्वे एव तावद्विश्रान्तेः तदुपरि स्पर्शासंभवात्, ईदृशं तम्—सर्वत्र प्रसिद्धम्, आगमाब्धिम्—श्रीशिवादागतं गिरिजामुखे गतं श्रीवासुदेवस्य मतमिति निरुक्त्या प्रसिद्धं शास्त्ररूपं समुद्रम्, नौमि—सर्वोत्कृष्टवस्तुपरत्वेन सर्वोत्कृष्टत्वयुक्तत्वात् प्रह्वीभावविषयीकरोमि, अष्टांगप्रणतिविषयतां नयामि इति यावत् । तं कम् ? सर्वे ये आगमाः—वेदा-

श्रीमत्सदाशिवोदारप्रारम्भं वसुधान्तकम् ।
यदन्तर्भाति तत्त्वानां चक्रं तं संस्तुमः शिवम् ॥

---

दिरूपाणि शास्त्राणि, ते एव सिन्धवः—स्वल्पविषयत्त्वेन नद्यः, तासां संघः—समूहः । यम्—प्रोक्तस्वरूपमागमाब्धिम्, प्राप्य—मध्ये यत्किंचिद्भेदोद्दीपकमभिधायापि पर्यन्ते उपदिष्टमद्वैतं महासंरम्भेण लेशेन अभिधाय, पूर्णत्वम्—तेन सहैकार्थतानिष्ठताकृतं तदैक्यरूपम्, पूर्णभावेन स्फुरतीति यावत्, तथा कृतार्थतां च—साधितसाधनीयतां च, अभ्येति—अतः परं साधनीयाभावात् साधनीयावशेषेऽपि आगमाब्धिकृतसाधनेनैव साधना, सिन्धवश्च रत्नसारमब्धिमागत्य पूर्णत्वं यान्ति कृतार्थतां च, ततः परं पूर्णाब्धिभावेनैव स्फुरणात् तत्कार्येणैव च कार्यवत्त्वात् इति ध्वनिः । एतेनात्रागमाधिकारे आगमशास्त्रोक्तं वस्तु पूर्वोक्तस्य साधकत्वेन कथयिष्यति इति सूचितम् । आगमशास्त्रप्रामाण्ये च पूर्वं कृत एव भर इति न पुनरायस्तम् ।

श्रीशिवादिधरण्यन्तं तत्त्वचक्रं स्फुरद्वपुः ।
यदन्तर्भाति यत्सारं हृद्देशे तं स्तुमः शिवम् ॥

अथात्राधिकारे प्रथमाह्निकस्य निर्विघ्नसमाप्तये स्वेष्टदेवतारूपपरतत्त्वपरामर्शलक्षणं मंगलं स्वान्तरनुष्ठितमपि बहिः शिष्यशिक्षार्थं सकलाह्निकतात्पर्यसूचकेन श्लोकेनोपनिबध्नाति "श्रीमत्" इति ।

वयं तं शिवम् स्तुमः—सम्यक् परामर्शविषयतां नयामः । तं कम् ? श्रीमान् ईश्वराद्यपेक्षया ऐश्वर्ययुक्तः यः सदाशिवः स एव उदारं यथा भवति तथा प्रारंभः यस्य तादृशम्, तथा वसुधा अन्ते यस्य तादृशम्, तत्त्वानाम्—वक्ष्यमाणस्वरूपाणाम्, चक्रम्—चतुस्त्रिंशत्संख्याकतत्त्वरूपः समूहः, यदन्तः—यत्स्वरूपभित्तिलग्नं सत्, भाति—स्वस्वरूपेण पृथक् पृथक् स्फुरति, अन्यथा निःसारत्वेन भानायोगात्, एतेन तत्त्वनिर्णयोऽत्र भवितेति सूचितम् । नन्वन्यत्रागमशास्त्रेषु ।

"यत्परतत्त्वं तस्मिन् विभाति षट्त्रिंशदात्म जगत्"

इति न्यायेन सप्तत्रिंशपरशिवान्तः शिवादिधरण्यन्ततत्त्वषट्त्रिंशकस्य भानमुक्तम् । इह कथं सदाशिवादिधरण्यन्तस्य तत्त्वचतुस्त्रिंशकस्य शिवतत्त्वान्तर्भानम् । सत्यम्, मालिनीशास्त्रादिरूपेषु परमाद्वैतपरेषु शास्त्रेषु तथैवोक्तमस्ति, तत्र

एवमधिकारद्वयेन ज्ञानक्रियास्वरूपं वितत्य निर्णीतम्। अथेदं वक्तव्यं क्रिया नाम विश्वपदार्थावभासनलक्षणा इत्युक्तं समनन्तरमेव, के च ते विश्वे पदार्थाः, इति। तत्राभासरूपा एव जडचेतनलक्षणाः

---

अयमभिप्रायः, सदाशिवतत्त्वान्तः शुद्धविमर्शरूपशक्तिस्पर्शः पुष्टो नास्ति, वेदान्ताभिमतनिर्विमर्शप्रकाशरूपशान्तब्रह्मतत्त्वरूपत्वात् तस्य, इति विमर्शरूपा शक्तिरपि पंचत्रिंशत्वेन कथनीयैव, तद्युक्तः शिवोपि सदाशिवादन्य एवेति तस्य षट्त्रिंशत्त्वम्, एतयोश्च स्वरूपं स्वयमेव वक्ष्यति, तत्र च यद्यपि तत्त्वतः शिवपरमशिवयोरैक्यमेव तथापि स्वरूपनिर्देशाभिप्रायेण अनाश्रितशिवत्वेन कथनम्, व्यापकत्वाभिप्रायेण परशिवत्त्वकथनम्, न हि व्याप्यमध्ये व्यापकस्य समकक्षतया ग्रहणं युक्तम्, यथा कृतोर्मिकासप्तकस्य मध्ये समस्तस्य सुवर्णस्य अष्टमत्त्वकथनम्, यस्तु शिष्टः तत्र सुवर्णलेशस्तस्याष्टमत्त्वकथनेऽपि न दोषः इति न कोपि विरोधः। यत्वष्टात्रिंशत्वमप्यत्र कथयन्ति तच्छिष्योपदेशकाले तस्य मेयत्वमापतेदित्यभिप्रायेण, परमार्थेन तु सप्तत्रिंशत्त्वकथनमप्यत्रायुक्तमेव, नहि स्वव्याप्येन व्यापकस्य परिच्छेदो युक्तः, न हि कोशान्तर्गतः कोशकारः कोशं मातुं शक्तः इति। प्रत्यभिज्ञादिरूपेषु प्रक्रियाशास्त्रेषु तु तत्त्वस्वरूपकथनमात्रमेवेष्टं न महाद्वैतकथनमिति शिवतत्त्वपर्यन्तमेव निर्णयः कृतः अतस्तेषां भेददर्शनत्वमेव। परन्तु महाद्वैतं प्रति परोपायत्वं तेषां वर्तते, भिन्ना हि शास्त्राणां प्रवृत्तिरधिकार्युपयोगार्थमिति प्राङ्निर्णीतमेवेत्यलं विस्तरेण, अथवा तस्य तत्त्वस्य प्रमेयतापातो मास्त्वित्यभिप्रायेण अकथनम्।

एवं मंगलं संपाद्य समस्तमाह्निकाभिप्रायं कथयति अस्याधिकारस्य चाभिप्रायकथनपूर्वकं पूर्वाधिकारद्वयेन सह संगतिं च दर्शयति "एवम्" इति।

अत्र टीकाः—

अधिकारद्वयेन, ज्ञानक्रियारूपेणेत्यर्थः। पुनस्तर्हि मौनमेव कुरु इत्यत आह, "अथ" इति। "वक्तव्यम्" इति, शेषत्वेनेति भावः। किमित्यपेक्षायामाह "क्रिया" इति। विश्वेषाम्—सर्वेषाम्, पदार्थानां यदवभासनम्—सारत्वेन प्रकाशकत्वेन च बहिः प्रकाशनम्, तल्लक्षणं स्वरूपं यस्याः सा। अनन्तरम्—पूर्वाधिकारे, ते-अवभासविषयीभूताः। इति शब्दः वक्तव्यसमाप्तौ, आभासरूपाः—आभाससिद्धत्वेन तन्मात्ररूपाः। ननु प्रत्यक्षसिद्धानां पदार्थानां किं

पदार्थास्ते च कियता रूपेण संगृह्यन्ते, नहि प्रत्यक्षं मायाप्रमातुः सर्वत्र क्रमते। अनुमानमप्येवम्, न हि यद्यदस्ति तत्र तत्र लिङ्गव्याप्त्यादि‑ग्रहणसंभवः। आगमस्त्वपरिच्छिन्नप्रकाशात्मकमाहेश्वरविमर्शपरमार्थः किं न पश्येत्, इति तदनुसारेण पदार्थनिर्णयं विश्वप्रमेयीकरणप्रति‑लब्धतद्विश्वोत्तीर्णप्रमातृपदहृदयङ्गमीकारा[1]भिप्रायेण निरूपयितुमाचार्यं आगमाधिकारं तृतीयमारभते।

तत्र श्लोकैकादशकेन 'एवमन्तर्बहिर्वृत्तिः' इत्यादिना 'स्थूलसूक्ष्म‑त्वभेदतः' इत्यन्तेनागमसिद्धं शिवादिधरणीप्रान्तमेकैकाभासरूपता‑

---

रूपसंग्रहकरणेनेत्यत आह, "न हि" इति। क्रमते—प्रगल्भते, शक्तं भवतीति यावत्, ननु तर्ह्यनुमानस्यात्राभिषेकं दास्यामः इत्यत आह "अनुमानम्" इति। एवं न क्रमते इत्यर्थः। अत्र समर्थनं करोति "न हि" इति। ननु तर्हि शब्द‑प्रमाणरूपस्य शास्त्रस्याप्यत्र का शक्तिरित्यत आह "आगमस्तु" इति। आगमः—श्रीशिवादिप्रणीतं शास्त्रम्, अपरिच्छिन्नप्रकाशात्मकः–अपरिच्छिन्न‑प्रकाशरूपः, महाप्रकाशस्वरूप इति यावत्, यः महेश्वरविमर्शः स एव परमार्थः–महेश्वरसंबन्धी स्वाश्रयः स्वविषयश्च अहंपरामर्शः मूलं यस्य तादृशः।

तदुक्तम्:—

"आगतं शिववक्त्रात्तु गतं तु गिरिजामुखे"।

इति। अत्र हि शिवः प्रकाशः गिरिजा परामर्शः। किं न पश्येत्–सर्वं विमृष्टुं शक्त इति यावत्। इति–अतः कारणात्, तदनुसारेण—आगमानुसारेण, पदार्थनिर्णयम्–शिवादिधरण्यन्ततत्त्वषट्त्रिंशकनिर्णयम्, विश्वस्य–तत्त्वषट्‑त्रिंशकरूपस्य जगतः यत् प्रमेयीकरणम्–कथनद्वारेण सिद्धं परमार्थतोऽप्रमेयत्वेपि प्रमेयतासंपादनम्, तेन लब्धम्–अतद्व्यावृत्तिकारीत्यादिसिद्धम्। तस्माद् विश्वस्मात्–जगतः उत्तीर्णम् प्रमातृपदं तस्य यो हृदयंगमीकारः–उपादेयत्वेन ग्रहणम्, तस्याभिप्रायेण, प्रमेयदर्शनेन हि स्वयमेवाप्रमेयवस्तुस्पर्शो भवितेत्या‑शयेनेति यावत्।

एवमधिकाराभिप्रायमुक्त्वा आह्निकाभिप्रायं सामस्त्येन तावत् कथयति "तत्र" इति। तत्र, अधिकारमध्ये इत्यर्थः। आगमसिद्धम्–पतिशास्त्रसिद्धम्,

---

1 °हृदयंगमीकरणाभिप्रायेण—K. S. S.

त्मकं दर्शनान्तरे 'सामान्यम्' इति यद्व्यवहृतं, यस्य सामानाधिकरण्ययोगादनन्तस्वलक्षणावभासनव्यूहविशेषपूर्वकः समस्तोऽयं शरीरभुवनादिविभवः, तं परमेश्वरागमसिद्धं युक्त्याप्यवगतं[1] प्रत्येकतस्तत्त्वग्रामं[2] दर्शयति इत्याह्निकतात्पर्यम् ।

तत्राधिकारसंगतिं योजयन् पूर्वपक्षप्रतिक्षेपं चोपसंहरन् शिवतत्त्वस्वरूपमेव दर्शयितुमाह

> एवमन्तर्बहिर्वृत्तिः क्रिया कालक्रमानुगा ।
> मातुरेव तदन्योन्यावियुक्ते ज्ञानकर्मणी ॥ १ ॥

---

एकैकम्—प्रतितत्त्वं या आभासरूपता तदात्मकम्—तत्स्वरूपम्, तथा च महाऽद्वैतरूपमिति भावः । महाद्वैते हि भेदोऽपि भासनयोग्य एव, अन्यथा अपूर्णत्वापातात् । तथा दर्शनान्तरे—इतो व्यतिरिक्ते, सामान्यम् इति व्यवहृतम्, आभाससामान्यतया व्यवहारविषयीकृतम् इत्यर्थः । अत्र भेदस्पर्शायोगोऽपूर्णतापादकः असंभवोपहतश्चेति भावः । यत्—यः तत्त्वग्रामः, तथा यस्य—तत्त्वग्रामस्य, सामानाधिकरण्ययोगात्—एकाधारत्ववशेन, अनन्तस्वलक्षणानाम् यत् अवभासनं तदेव व्यूहविशेषः—रचनाविशेषः, सः पूर्वं यस्य तादृशः विभवः—ऐश्वर्यम्, भवतीति शेषः । तत्त्वाना सामानाधिकरण्ये एव हि शरीरादिव्यवहारो भवतीति भावः । तत्र समानमधिकरणञ्च प्राधान्यापेक्षया आधेयभूततत्त्वानां मध्ये किमप्येकं तत्त्वं भवति न तेभ्यः पृथक् । "युक्त्यापि" इत्यत्र अपिशब्दः समुच्चये । अवगतम्—अस्तित्वेन ज्ञातम्, प्रत्येकतः—प्रातिस्विकस्वरूपयुक्तम्, तत्त्वग्रामम्—तत्त्वसमूहम् ।

अथ प्रथमश्लोकस्यावतरणिकां करोति "तत्र" इति ।

अत्र टीकाः—

अधिकारसंगतिम्—अस्याधिकारस्य पूर्वाधिकारेण सह संबन्धम्, पूर्वपक्षस्य कार्यकारणभावविषयस्य यः प्रतिक्षेपः—प्रतिसमाधानम्, तम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे, "एवम्" इति ।

---

1 अनुगतम्—K. S. S.

2 प्रतीकतः—K. S. S.

एवमिति, यतः परदर्शनोक्तः कार्यकारणभावो जडरूपप्रतिष्ठो न कथंचिदुपपन्नः, किन्तु चिद्रूप एवान्तर्बहिरात्मना प्रकाशपरमार्थेनापि वपुषा तथाभासनरूपेण[1] वर्तमानः कालक्रममाक्षिपन् क्रियाभिधीयते, तस्य प्रमातुरेव ज्ञानशक्तिवपुषो धर्मस्तत्[2] इति । तस्मादवियुक्तं ज्ञानं क्रिया च । ज्ञानं विमर्शानुप्राणितम् , विमर्श एव च क्रियेति । न च

अत्र टीका:—

"एवम्" शब्दं व्याचष्टे "यतः" इति । परदर्शनोक्तः–शैवनयव्यतिरिक्तदर्शनप्रोक्तः, अन्तर्बहिरात्मना–परमार्थतः चिद्रूपेणाभासता, इदन्तयाभासनशीलेन इत्यर्थः, तथाभासनरूपेण—कार्यकारणभावेनाभासरूपेण, वपुषा–स्वरूपेण, तत्–सा क्रिया । "इति" शब्दः समाप्तौ, "मातुरेव" इत्यन्तं व्याख्या समाप्तौ ।

एवमत्र योजना । एवम्–अचेतनविषये कार्यकारणभावे अनुपपन्ने सति । कालक्रमानुगा–कालरूपक्रमानुसारिणी, तथा अन्तर्बहिर्वृत्तिः—परमार्थतश्चिद्रूपत्वेऽपि आभासतः तद्व्यतिरिक्ततया भासमाना, क्रिया मातुरेव भवति, चेतनस्यैव भवतीत्यर्थः ।

"तत्" इत्यादि अवशिष्टं श्लोकखंडं व्याचष्टे "तस्मात्" इति । अवियुक्तम्—अभिन्नम्, "कर्म" इति पदं व्याचष्टे "क्रिया च" इति । ज्ञानकर्मणोरवियोगमेव दर्शयति "ज्ञानम्" इति । विमर्शानुप्राणितम्—विमर्शदत्तसत्ताकम् । यदुक्तम् प्राक्

"स्वभावमवभासस्य" ।

इति । नन्वेतेन कर्मणः किमायातमित्यत आह "विमर्श एव च" इति,

1. तदाभासरूपेण—K. S. S.

2. °ज्ञानशक्तिवपुषो धर्मः; तत् इति तस्मादवियुक्तं—K. S. S.

The editors of the K. S. S. seem to have taken 'तत्' as the 'तत्' of the kārikā and तस्मात् as its meaning. That is also a possible construction, and a simpler one. We have, however, followed Bhāskara as usual.

ज्ञानशक्तिविहीनस्य क्रियायोगः इति । तदेतदवियुक्तज्ञानक्रियारूपं क्रियाद्वारेण सकलतत्त्वराशिगतसृष्टिसंहारशतप्रतिबिम्बसहिष्णु[1] यत् तदुपदेशभावनादिषु तथाभासमानमनाभासमपि[2] वस्तुतः शिवतत्त्वमित्युक्तं भवति ॥ १ ॥

नन्वेवंभूतं शिवतत्त्वं चेत् तर्हि ततोऽनतिरिच्यमानमिदं विश्व-

---

वाह्यक्रियाया अपि विमर्शस्थूलतारूपत्वादिति भावः । ननु तथापि क्रियायाः ज्ञानैकरूपत्वं नायातमित्यत आह "न च" इति । "इति" शब्दः ज्ञानकर्माधियोगसमाप्तौ । फलितं कथयति, "तदेतत्" इति । तत्—तस्मात्कारणात् । एतत्—कर्तृ, शिवतत्त्वमित्युक्तं भवति । अर्थादेव च विमर्शाख्यं वस्तु शक्तितत्त्वमित्युक्तं भवति इत्यपि मन्तव्यम्, शक्तितत्त्वस्य शुद्धाहंविमर्शरूपत्वात् । तत्किम् ? "एतत्" इत्यादि "यत्" इत्यन्तम् । तत्र "यत्" इत्यस्य विशेषणद्वयमाह "अवियुक्त" इति । "तत्" इत्यस्य अपि विशेषणद्वयमाह "उपदेश" इति । वस्तुत अनाभासम् अपि उपदेशभावनादिषु तथाभासमानम्—उपदेश्यभाव्यत्वादिना भासनशीलम्, तत्र शक्तत्त्वादिति भावः । "प्रतिबिंबसहिष्णु" इत्यनेन प्रतिबिंबयोग्यस्यापूर्णस्य चित्तत्त्वस्य शिवत्वम, प्रतिबिंबाधारस्य पूर्णस्य चित्तत्त्वस्य परमशिवत्वमिति द्योतितम् । तथा च एतेन परमशिवाख्यं सप्तत्रिंशं तत्त्वं, शिवाख्यं षट्त्रिंशं शक्त्याख्यं पंचत्रिंशं तत्त्वं चोक्तम् इति ज्ञेयम ॥ १ ॥

अथ द्वितीयस्य श्लोकस्यावतरणिकां करोति "नन्वेम्" इति ।

अत्र टीकाः—

एवंभूतम्—सर्वप्रतिबिंबसहिष्णु, सर्वभावेन स्फुरणशीलमिति यावत् ततः—तस्मात् शिवतत्त्वात्, अनतिरिच्यमानम्—अन्यूनातिरिक्तम्, तदेकरूपमिति

---

1. °प्रतिबिंबनसहिष्णु—K. S. S.

2. अनाभासरूपमपि—K. S. S.

मिति किमन्यत् तत्त्वं स्यात्। एकचित्तत्त्वविश्रान्तौ च तत्त्वानां कथं क्रमो भवेत्, देशकालाभेदात्? एवमेतत्[1]

**किंत्वान्तरदशोद्रेकात्सादाख्यं तत्त्वमादितः।**
**बहिर्भावपरत्वे तु, परतः पारमेश्वरम् ॥ २ ॥**

यद्यप्येकमेव शिवतत्त्वं तथापि तदीयमेव स्वातंत्र्यं स्वात्मनि स्वरूपभेदं तावत्प्रतिबिम्बकल्पतया दर्शयति। स्वरूपवैचित्र्यमेव देशकालक्रमः। मूर्तिक्रियावैचित्र्यमयो हि असौ। ततश्चान्तरी ज्ञानरूपा या दशा तस्या उद्रेकाभासने 'सादाख्यम्' सदाख्यायां भवम्।

---

यावत्। अन्यत्—शिवतत्त्वव्यतिरिक्तम्, किं स्यात्, न भवेत् इत्यर्थः। अत्राङ्गीकारं करोति "एवम्" इति। एतत् एवमेव भवतीत्यर्थः। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "**किन्त्वान्तर**" इति।

अत्र टीका:—

अवतरणिकायाम् "एवमेतत्" इत्यनेनोपसंहृतं पक्षमपेक्ष्य अन्यपक्षद्योतकं "**किन्तु**" इति पदं व्याचष्टे "**यद्यप्येकम्**" इति। तदीयम्—शिवतत्त्वसंबन्धि, **स्वात्मनि**—शिवरूपे स्वस्मिन्, **स्वरूपभेदम्**—सदाशिवादिभावेन स्थितम् स्वरूपभेदम्, **प्रतिबिंबतया** प्रतिबिंबरूपत्वेन, **दर्शयति**—स्वरूपभूतान् प्रमातॄन् प्रति स्फुटीकरोति। कुतः इत्यपेक्षायामाह "**मूर्ति**" इति। **असौ**—देशकालक्रमः, तत्र मूर्तिवैचित्र्यमयो देशक्रमः क्रियावैचित्र्यमयः कालक्रमः इति विभागः, उभयत्रापि चात्र स्वरूपवैचित्र्यमेव, न हि क्रिया स्वरूपाद् भिन्नेति भावः। सामान्येनोक्तं वस्तु विशेषेण वक्तुं फलितरीत्या श्लोके योजनां करोति "**ततश्च**" इति। "**आन्तर**" इत्यादि पदं व्याचष्टे "**ज्ञान**" इति। **ज्ञानरूपा**—अस्फुटपरामर्शबोधरूपा, अन्यथा शिवत्वापातात्। **तस्याः**—दशायाः, **उद्रेकाभासने**—क्रियां न्यक्कृत्य प्रधानतया स्फुरणे सति, "**सादाख्यम्**" इति पदं व्याचष्टे "**सदाख्यायाम्**" इति। नन्वेतेन किमुक्तं

---

1. एवमेवैतत्—K. S. S.

यतः प्रभृति सदिति प्रख्या। सदाख्यायाश्च सदाशिवशब्दरूपाया इदं वाच्यं तत्त्वम्। सृष्टिक्रमोपदेशादौ प्रथममुचितम्। तत्सादाख्यं तत्त्वम्। 'बहिर्भावस्य' क्रियाशक्तिमयस्य 'परत्वे' उद्रेकाभासे सति 'पारमेश्वरं' परमेश्वरशब्दवाच्यमीश्वरतत्त्वं नाम। तच्च सादाख्यस्य पश्चादुचि-

---

भवति इत्यत आह "यतः" इति। सदिति प्रख्या—सदिति प्रसिद्धिः, अतः पूर्वं हि शक्त्यादौ असदित्यनेन प्रतियोगिना परिमितीकृता सत्तापि न युक्तेति भावः। सादाख्यमिति प्रकारान्तरेण व्याचष्टे "सदाख्यायाः" इति। पूर्वं तु

"तत्र भवः"।

इति अण् प्रत्ययो विहितः, इह तु "तस्य वाच्यम्" इति, तेन सदाख्याया वाच्यं तत्त्वं सादाख्यम् इति विग्रहः। "आदितः" इति व्याचष्टे "सृष्टि" इति। सृष्टिक्रमेण—अवरोहक्रमेण यः उपदेशादिः तस्मिन्, आदिशब्देन परामर्शादेर्ग्रहणम्, आरोहक्रमेण तु सदाशिवतत्त्वस्यान्त्यत्वमेवेति भावः। "उचितम्" इति, ज्ञानस्यैव सृष्टिक्रमेण प्रथमत्वादिति भावः।

प्रथमार्धं व्याख्याय द्वितीयार्धं व्याचष्टे "तत्" इति। तदित्यस्य कर्तृत्वेनाध्याहारः, अध्याहृतस्यास्य व्याख्यां करोति "सादाख्यम्" इति। "बहिर्भाव" इत्यादि व्याचष्टे "बहिर्भावस्य" इति। यद्यपि परमेश्वरपदं शिवतत्त्वे एव युक्तं तथापि लक्षणया प्रयुक्तमिहापि, परमेश्वरपदस्य वाच्यं पारमेश्वरमिति विग्रहः। इह तु सा विमर्शशक्तिः स्वयमपि स्फुटीभवति स्वप्रतियोगिनीमिदन्तामपि स्तोकमुन्मीलयति येन "अहमिदम्" इति अहमः प्राधान्येन इदमस्त्वप्राधान्येन परामर्शः। अयमेव च बहिर्भावाख्यायाः क्रियाशक्तेरुद्रेकः। अहंविमर्श एव इदंविमर्शभावेनापि स्फुरति। अत्रैव च शुद्धाहंपरामर्शस्य विकल्परूपतासूत्रणं च ज्ञेयम्। "परतः" इति व्याचष्टे "तच्च" इति। तच्च—ईश्वरतत्त्वं च, पश्चात्—ज्ञानानन्तरम् क्रियोद्रेके[2] युक्तम् इति भावः। अत्रापि सृष्टिक्रमोपदेशादाविति योज्यम्। पूर्वार्धेऽवशिष्टं "तत्त्वम्" इति पदं व्याख्यातुमेतस्य

---

1. ततश्च—K. S. S.

2. क्रियोद्देशे—C. The manifestation of ईश्वरतत्त्व, according to अभिनव's previous statement, is due to क्रियोद्रेक. क्रियोद्देशे seems to be, therefore, a scribal mistake.

तावभासनम् । एतदुक्तं भवति । इह तस्य भावस्तत्त्वम्,—इति भिन्नानां वर्गाणां वर्गीकरणनिमित्तं यदेकमविभक्तं भाति तत्तत्त्वम् । यथा गिरिवृक्षपुरप्रभृतीनां नदीसरःसागरादीनां च पृथिवीरूपत्वमब्रूपत्वं चेति । ततश्च शुद्धचैतन्यवर्गो यो मन्त्रमहेश्वराख्यः, तस्य प्रथमसृष्टावस्माकमन्तःकरणैकवेद्यमिव ध्यामलप्रायमुन्मीलितमात्रचित्रकल्पं यद्भावचक्रम्, तथा[1] संहारे च ध्वंसोन्मुखतया तथाभूतमेव

श्लोकस्य संग्रहेणाभिप्रायं वक्तुश्चावतरणिकां करोति "एतदुक्तं भवति" इति । किमुक्तं भवतीत्यत आह "इह" इति । भिन्नानां वर्गाणाम्—भेदेन स्थितानां बहूनां वर्गाणाम्, वर्गीकरणनिमित्तम्-एकवर्गीकरणम्, येन धर्मेण भिन्ना-अपि समतया भान्तीति यावत् । समानानां समूहो हि वर्ग इति भावः, एकम्-बहुष्वङ्गेषु एकत्वेन स्थितम्, अत एव अविभक्तम्-विभागरहितम् । अत्र बाह्यसिद्ध वस्तु उदाहरणत्त्वेन कथयति "यथा" इति । "इति" शब्दः तत्त्वशब्दव्याख्यासमाप्तौ । फलितं कथयति "ततश्च" इति । ततश्च यतो वर्गाणां वर्गीकरणं तत्त्वम् ततः कारणाच्च, मंत्रमहेशाख्यः—मंत्रमहेशेति रूढः यः शुद्धचैतन्यवर्गः-अभेदग्राही चैतन्यसमूहः तस्य प्रथमसृष्टौ-सविमर्शचैतन्यरूपशिवपदात्प्रच्यावरूपायामवरोहरूपायां नवीनायाम् सृष्टौ, ध्यामलप्रायम्-तावदनुद्भूतत्वेन अस्फुटम्, तथा उन्मीलितमात्रचित्रकल्पम्-मष्यादिना लिखितमात्रं नतु गैरिकादिभिः पुष्टीकृतम्, यत् चित्रम्-आलेख्यम्, तेन सदृशम् । यद्भावचक्रम्-इदन्ताग्राह्यं वस्तुजातम्, प्रतिबिम्बप्रायतया-प्रतिबिम्बकल्पतया, चकास्ति-भाति । तथा पुनः संहारे च-आरोहक्रमरूपे संहारे च, ध्वंसोन्मुखतया-नाशोन्मुखतया यद् भावचक्रं तथाभूतमेव[2]—ध्यामलप्रायं उन्मीलितमात्रचित्रकल्पं प्रतिबिम्बकल्पतया चकास्ति । केषां किमिव चकास्ति ? अस्माकम्-मायाप्रमातॄणाम्, अन्तःकरणैकवेद्यमिव-केवलान्तः

1. भावचक्रं, संहारे च—K. S. S.

2. तथाभूतमिव—C. The K. S. S. has 'तथाभूतमेव' which is a better reading, because the condition of भावचक्र at the time of dissolution is not similar to but identical with its condition at the time of creation. Hence we have adopted it.

चकास्ति प्रतिबिम्बप्रायतया, तस्य चैतन्यवर्गस्य तादृशि भावराशौ तथाप्रथनं नाम यच्चिद्विशेषत्वं तत्सदाशिवतत्त्वम्। मन्त्रेश्वरादिरूपस्य तु चैतन्यराशेः स्फुटीभूतमस्मद्बहिष्करणसरणिसंप्राप्तभाववर्गप्रतिमं विश्वं प्रतिबिम्बकल्पतया[1] भाति, तस्य तु तत् तथाप्रथनमीश्वरतत्त्वम्। यस्तु सदाशिवभट्टारक ईश्वरभट्टारकश्च ध्येयोपास्यादिरूपतया स ब्रह्मविष्णुतुल्यः पृथगेव मन्तव्यो न तु नामसारूप्यात् भ्रमितव्यम्। यथाहुरेके[2] 'ब्रह्मविष्णुरुद्रा अपि तत्त्वमध्ये किं न गणिताः' इति ॥ २ ॥

---

करणग्राह्यं वस्तु इव, अन्तःकरणेन हि वस्तु अस्फुटतयैव गृह्यते, तस्य-प्रोक्तस्य चैतन्यवर्गस्य तादृशि-ध्यामलप्रायादिरूपे, भावराशौ—भावराशिविषये इति यावत्, तथा प्रथनं नाम-प्रोक्तध्यामलप्रायादिभावेन स्फुरणाख्यम्, यत् चिद्विशेषत्वम्-चिद्विशेषभावो नाम धर्मो भवति, तत् सदाशिवतत्त्वं-भवति। सर्वत्र भावराशौ अस्फुटप्रतिबिंबत्वम्, नष्टप्रायत्वदर्शनमेव सदाशिवावस्थेति भावः। तथा च अहन्तया ग्रहणस्य शिवशक्तितत्त्वरूपत्वम् स्वयमेव ज्ञेयम्। प्रमाता चात्र स्वयं शिव एव, तत्र पराहन्ताया एव प्राधान्यात्। परशिवावस्था तु सर्वदा सर्वमयी एव इति न तत्र कापि विशेषकल्पना। अत्र तु सर्वेषामेव सर्वथा प्रमातृत्वमिति श्रीगुरुभ्य एव श्रुतम्। ननु सदाशिवत्वमेवं भवतु, ईश्वरत्वं तु कीदृशमस्तीत्यत आह "मंत्रेश्वर" इति। मंत्रेश्वरादिरूपस्य, ईश्वरतत्त्वविद्यातत्त्वरूपे पदद्वये स्थितयोः मंत्रेश्वरमंत्ररूपयोः प्रमात्रोरित्यर्थः, "प्रतिबिंबकल्पतया" इत्यनेन मायाप्रमातृनिरासः, तेषां हि विश्वं सत्यतयैव भाति न प्रतिबिम्बतया, प्रतिबिम्बतया दर्शनमेव ईश्वरतत्त्वासादनं शुद्धविद्यातत्त्वासादनं च भवतीत्यभिप्रायः। ननु यथा सदाशिवादेस्तत्त्वरूपता अस्ति तथा विष्ण्वादेरपि कथं नास्तीत्यपेक्षायामाह "यस्तु" इति। "उपास्यादिरूपतया" इति। आदिशब्देन पूज्यादिग्रहणम्, कल्प्यते इति शेषः। पृथक्—तत्त्वरूपाभ्यां भिन्न एव। ननु केषामयं भ्रमो जात इत्यत आह "यथाहुः" इति ॥ २ ॥

---

1. प्रतिबिंबतया—K. S. S.
2. यदाहुरेके—K. S. S.

नामधेयान्तरमप्यत्र तत्त्वद्वये दर्शयति

**ईश्वरो बहिरुन्मेषो, निमेषोऽन्तः सदाशिवः ।**
**सामानाधिकरण्यश्च, सद्विद्याहमिदंधियोः ॥ ३ ॥**

यस्योन्मेषादुदयो जगतः, इत्यत्र ईश्वरतत्त्वमेवोन्मेषशब्देनोक्तम्, विश्वस्य हि स्फुटत्वबाह्यत्वमुन्मेषणम्[1], निमेषणं त्वस्फुटत्वापादनमहन्तारूपतोद्रेचनम्[2], इति निमेषः सदाशिवतत्त्वम् । यतो जगतः प्रलय इति । शुद्धोऽयं स्पन्दः परमेश्वरस्याचलस्याप्यप्ररूढरूपान्तरापत्तिल-

---

अत्र टीकाः—

तृतीयस्य श्लोकस्यावतरणिकां करोति "नामधेयान्तरम्" इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । "ईश्वरः" इति ।

अत्र टीकाः—

कुत उक्तम् इत्यत आह, "विश्वस्य हि" इति । स्फुटत्वं च बाह्यत्वं च तत् "स्फुटत्वबाह्यत्वम्" समाहारे द्वन्द्वः । अहन्तारूपतायाः–आन्तरत्वस्य, उद्रेचनम्—अधिकीकरणम्, अहन्तारूपतोद्रेचनम् कुतः सदाशिवतत्त्वमित्यत आह "यतः" इति । सदाशिव एव जगतः प्रलयः ततः परं जगत्स्पर्शासंभवात्, इतिशब्दः पूर्वार्धव्याख्यासमाप्तौ । सदाशिवेश्वरतत्त्वयोः शुद्धस्पन्दत्वं कथयति "शुद्धोयम्" इति । अचलस्यापि—परमार्थतः स्वरूपे स्थितत्वात् चलत्तारहितस्यापि, परमेश्वरस्य—शिवशक्तिसमुदायरूपस्य, अयम्—सदाशिवेश्वररूपः स्पन्दः शुद्धः भवति, कीदृशः ? अप्ररूढा—प्ररोहमगता अस्फुटा, अस्फुटप्रतिबिम्बभावेन जगत्स्फुरणात् दार्ढ्यमगता इति यावत्, या रूपान्तरापत्तिः[3]—भेदापत्तिः सा लक्षणम्—स्वरूपं यस्य सः । कुतः स्पन्द इत्यपेक्षायां

---

1. स्फुटत्वं—K. S. S.
2. अन्तारूपतोद्रेचनम्—K. S. S.
3. या भेदापत्तिः सा—C.

क्षणः किंचिच्चलनात्मतया स्फुरद्रूपत्वात् । परमेश्वरस्य हि परमार्थत एताः शक्तयो यस्तत्त्वग्रामः, काचित्तु शक्तिरन्यबहुतरशक्तिकोडीकारं कुर्वती निकटत्वादुपास्या घटस्येव घटत्वात्मिका, काचिदन्यापेक्षिणी स्वरूपमात्रनिष्ठा दूरा घटस्येव सत्तात्मिका । एवं निमेषोन्मेषशक्ती एव सदाशिवेश्वरौ तयोस्त्वधिष्ठातृदेवते अपि तथानामे ॥

अथ तदधिष्ठातृद्वयगतं[1] करणं विद्यातत्त्वमाह[2] । प्रकाशस्य यदात्म-

---

हेतुमाह "किंचित्" इति । अन्यथा सदाशिवेत्याद्याभागान्तरायोगात् इति भावः ।

"स्पदि किञ्चिच्चलने" ।

इति धात्वनुसारेण अयमर्थः कृतः । यद्यपि सारशास्त्रेषु शक्तेरेव स्पन्दत्वमुक्तं तथापीह प्रक्रियाशास्त्रे प्रोक्तनीत्या सदाशिवादेरुक्तम्, शक्तिशिवयोरेव हि[3] इह शास्त्रे परमार्थस्वरूपत्वं न परशिवस्येत्यलम् । शुद्धत्वस्य नैकट्यकृतत्वं साधयति, अथवा तयोस्तत्त्वयोरुपास्यत्वं कथयति "परमेश्वरस्य" इति । हि—यस्मात्, परमेश्वरस्य एताः शक्तयो—भवन्ति, एताः काः ? यः तत्त्वग्रामः—सदाशिवादिरूपः तत्त्वसमूहः भवति । "उपास्या" इति, तावन्मलानासादनात् सत्वरं शक्तिमत्प्रापकत्वात् वा उपासितुं योग्या । सद्वस्त्वन्वेषणे हि घटः चिरेण प्राप्यते घटत्वयुक्तवस्त्वन्वेषणे तु सद्य एवेति भावः । उपसंहारं करोति "एवम्" इति । शिवस्य शक्तिमतः इति शेषः, अधिष्ठातृदेवते—प्रेरकतया स्थितं देवताद्वयम्, तथानामे—सदाशिवेश्वराख्ये इत्यर्थः । तत्र शिवशक्तितत्त्वयोरधिष्ठातृभावः तत्त्वद्वयस्यैव स्वयं तद्रूपत्वात् । सदाशिवतत्त्वे सदाशिवोऽधिष्ठाता, ईश्वरतत्त्वे ईश्वरः, विद्यातत्त्वे सदाशिवेश्वरौ, ततो मायापदे रुद्रः विष्णुब्रह्माणौ च । तदुक्तम्—

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।"

इति । एतत् च संहारक्रमेणोक्तं न सृष्टिक्रमेणेति नान्यथा शंकनीयम् ।

अथोत्तरार्धं व्याख्यातुमवतरणिकां करोति "अथ" इति । तदधिष्ठा-

---

1. तदधिष्ठातृदेवताद्वयगतम्—K. S. S.

2. The K. S. S. edition of the विमर्शिनी gives the latter half of this verse after the introduction : अथ तदधिष्ठातृदेवताद्वयगतं करणं विद्यातत्त्वमाह । Bhāskara seems to have had the whole kārikā together as printed.

3. शक्तिशिवयोरेव बहिः इह शास्त्रे—C.

मात्रविश्रमणमनन्योन्मुखस्वात्मप्रकाशताविश्रान्तिलक्षणो विमर्शः सोऽहम् इति उच्यते। यस्त्वन्योन्मुखः स 'इदम्' इति। स च स्वप्रकाशमात्रे पुनरनन्योन्मुखरूपे विश्राम्यति परमार्थतः। तत्राद्ये विमर्शे शिवतत्त्वम्, द्वितीये विद्येशता मध्यमे तु रूपे 'अहमिदम्' इति समधृततुलापुटन्यायेन यो विमर्शः स सदाशिवनाथ ईश्वरभट्टारके च, इदंभावस्य तु ध्यामलाध्यामलताकृतो विशेषः। ये एते

---

तृद्वयगतम्—सदाशिवेश्वरतत्त्वगततदाख्याधिष्ठातृद्वयगतम्, करणम्—प्रेरणोपायः, विद्यातत्त्वम्—शुद्धविद्यातत्त्वम्। एवमवतरणिकां कृत्वा उत्तरार्धं व्याचष्टे "प्रकाशस्य" इति। "अहमिदंधियोः" इति व्याचष्टे "प्रकाशस्य" इति। "आत्ममात्रविश्रमणम्" स्वयं व्याचष्टे "अनन्य" इति। अनन्योन्मुखः-अबाह्योन्मुखः अत एव स्वात्मप्रकाशतायां या विश्रान्तिः। सा लक्षणम् स्वरूपं यस्य तादृशः। "यत्" इत्यस्याकांक्षां पूरयति "सः" इति। सः, तद्विश्रमणमित्यर्थः, अध्याहार्यविमर्शशब्दापेक्षं पुंस्त्वम्। अहमित्ववयवं व्याख्याय "इदम्" इत्यवयवं व्याचष्टे "यस्तु" इति। "अन्योन्मुखः" बाह्योन्मुखः। ननु तर्हि भेदापत्तिरित्यत आह "स च" इति। "पुनः" इति, आरोहसमये इत्यर्थः। मध्ये मृषैव भातीत्यर्थः। ननु तर्हि प्रोक्ततत्त्वद्वयारकोऽस्याः भेदः इत्यपेक्षायां विभागं करोति "तत्र" इति। तत्र, "अहम्" "इदम्" "अहमिदम्" "इदमहम्" इति विमर्शचतुष्टयमध्ये इत्यर्थः। आद्ये विमर्शे "अहम्" इत्यत्र इत्यर्थः। एतच्च शक्तिशिवयोरैक्यमारोप्योक्तम्, "द्वितीये" "इदम्" इत्यत्र विद्येशता-लक्षणया शुद्धविद्यात्वम्, विद्येशा हि विद्यारूपा एव भवन्ति, उपासनामात्रार्थं कल्पितत्वात्, "द्वितीये" इति सूत्रापेक्षया उक्तम्, अन्यथा मध्यासंभवात्। मध्यमे-अर्थाज्ज्ञाते "अहमिदम्" "इदमहम्" इति परामर्शद्वये। ननु तर्हि सदाशिवेश्वरयोरेकत्वमेवायातमित्यत आह—"इदंभावस्य" इति। ध्यामलता—अस्फुटत्वम्, तत्र सदाशिवतत्त्वे इदंभावस्य ध्यामलता, ईश्वरतत्त्वे त्वध्यामलतेति विभागः। ननु तर्हि सदाशिवतत्त्वे समधृततुलापुटन्यायो न युक्तः, सत्यम्, विस्तरभिया अत्रैवमुक्तमन्यथा तु सदाशिवतत्त्वे अहंभावस्य प्राधान्यमेव वर्तते इत्यलम्। ननु यदि शुद्धविद्या-

---

1. आद्ये विमर्शेऽपि—K. S. S.

'अहम्' इति 'इदम्' इति धियौ तयोर्मायाप्रमातरि पृथगधिकरणत्वम् 'अहम्' इति ग्राहके 'इदम्' इति च ग्राह्ये, तन्निरासेनैकस्मिन्नेवाधिकरणे यत्संगमनं संबन्धरूपं प्रथनं[1] तत् सती शुद्धा विद्या, अशुद्धविद्यातो[2] मायाप्रमातृगताया अन्यैव। तत्र यदा 'अहम्' इत्यस्य यदधिकरणं चिन्मात्ररूपं तत्रैवेदमंशमुल्लासयति तदा तस्यास्फुटत्वात् सदाशिवता 'अहमिदम्' इति। 'इदमहम्' इति तु इदमित्यंशे स्फुटीभूतेऽधिकरणे यदाहमंशविमर्शं निषिञ्चति तदेश्वरता,—इति विभागः॥ ३॥

---

तामपीदन्तायाः उद्धुरीभावस्तर्हि मायाया अस्याः को भेदः इत्यपेक्षायाम् "सामानाधिकरण्यश्च" इति व्याचष्टे "ये एते" इति। पृथगधिकरणत्वमेव स्फुटयति, "अहम्" इति। ग्राहके—प्रमातृतयाभिमते शून्यादौ, ग्राह्ये—प्रमेये, नन्वत्र शुद्धविद्यातत्त्वे किमस्तीत्यत आह "तन्निरासेन" इति। तस्य—पृथगधिकरणस्य निरासेन—आरोहदशायां दूरीकरणेन अवरोहदशायां तु स्वभावेनैव, एकस्मिन्नेवाधिकरणे—चिन्मात्रे एकाधारे एव, यत्संगमनम्—भेदाभेदग्रस्तत्वेन संगमनम्। 'संगमनम्' इति स्वयं व्याचष्टे "संबन्धरूपं प्रथनम्" इति, चिद्भागापेक्षयाऽहमिति योजनम्, चेत्यतापेक्षया तु "इदम्" इति योजनम्। तत्—प्रोक्तस्वरूपं वस्तु। "सती" इत्यवयवं व्याचष्टे 'शुद्धा' इति। "विद्या" इति निगदव्याख्यातम्। कुतः शुद्धेत्यपेक्षायामाह "अशुद्ध" इति, अस्य शुद्धविद्यातत्त्वस्य सदाशिवेश्वररूपतां विषयभेदेन दर्शयति "तत्र" इति। अधिकरणम्—विषयाश्रयभूतम्, उल्लासयति-अत एवोत्थितमेतदिति जानाति, "उल्लापयति' इति वा पाठः। निषिञ्चति-अन्तर्भावयति, विभागः—शुद्धविद्याविषये इति भावः। तत्रावरोहे अस्याः सदाशिवपदानन्तरम् ईश्वरपदाश्रयणम्, आरोहे तु, ईश्वरपदानन्तरं सदाशिवपदग्रहणम् इति, अधिष्ठातृरूपयोः सदाशिवेश्वरयोरियं करणम् क्रमेण भेदाभेदरूपाध्वद्वयप्रापकत्वात् इति ज्ञेयम्॥ ३॥

---

1. संबन्धस्वरूपप्रथनम्—K. S. S.

2. शुद्धा विद्या; अतोऽशुद्धविद्यातः K. S. S.

ननु कस्मादियं शुद्धा विद्या इत्याह

इदंभावोपपन्नानां वेद्यभूमिमुपेयुषाम्।
भावानां बोधसारत्वाद्यथावस्त्ववलोकनात् ॥ ४ ॥

अवलोकनं प्रथनं वेदनं विद्या, यथावस्तुत्वं वस्त्वनुसारित्वं च; तस्याः शुद्धिरविपरीतता। वेद्यदशां चोपगतवतामङ्गीकृतवताम्, अत एवेदमित्येवंभूतेनोचितेन परामर्शेनोपपन्नानां परामृश्यमानानां भावानां 'बोध' एव प्रकाशात्मा साररूपं वस्तु, प्रकाशश्चानन्योन्मुख-

---

अत्र टीकाः—

अथ चतुर्थस्य श्लोकस्यावतरणिकां करोति "ननु" इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "इदंभाव" इति।

अत्र टीकाः—

प्रथमं "यथावस्त्ववलोकनात्" इत्यस्य "अवलोकनात्" इत्यवयवं बहुभिः पर्यायैर्व्याचष्टे "प्रथनम्" इति। "यथावस्तु" इत्यास्यात्र योजनां करोति व्याचष्टे च "वस्त्वनुसारित्वञ्च" इति। तस्याः—विद्यायाः, एतेन भावप्रधानोऽयं निर्देश इति सूचितम्।; तथाचैवमत्र योजना। यथावस्तु—वस्तु यथा भवति तथा, यत् अवलोकनम्—विद्या, तत्त्वात् इयं शुद्धिया इति पूर्वेण संबन्धः। "सती" पदवाच्यस्य "शुद्धि" पदस्य पर्यायान्तरमाह "अविपरीतता" इति। "वेद्यभूमिमुपेयुषाम्" इति व्याचष्टे "उपगत" इति। अत्रापि पर्यायमाह "अंगीकृत" इति। एतदवष्टंभेन "इदंभावोपपन्नानाम्" इति व्याचष्टे "अत एव" इति। इदंभावस्य स्वरूपमाह "परामर्शेन" इति। "उपपन्नानाम्" इति व्याचष्टे "परामृश्यमानानाम्" इति। 'भावानाम्' इति निगदव्याख्यातम्। "बोधसारत्वात्" इति व्याचष्टे "बोधएव" इति। एतेन बोधस्यात्र भंग्या विमर्श एव वाच्यतयोक्तः, तेन बोधसारत्वात्, अहं-

विमर्शात्माहमिति। तदेषां यदेव पारमार्थिकं रूपं तत्रैव प्ररूढत्वात् अहमिदमित्यस्य[1] शुद्धवेदनरूपत्वम् ॥ ४ ॥

अधिष्ठातृरूपाद्देवताद्वयात् तत्त्वद्वयं विभक्तम्,—इत्येतद्भङ्ग्या प्रतिपादयत्यागमव्यवहारेण।

---

विमर्शसारत्वादित्यर्थः। फलितं कथयति 'तत्' इति। प्ररूढत्वात् 'अहमिदम्' इत्यस्य–सदाशिवादिगतस्य परामर्शस्य, शुद्धवेदनस्वरूपत्वम्—शुद्धविद्यारूपत्वम्, आपाततः भेदेपि परमार्थतः अभेदे विश्रान्तत्वात् इति भावः।

एवं चात्र संग्रहः। नित्याव्यभिचरद्रूपयोः प्रकाशशुद्धाहंविमर्शयोः शिवशक्तितत्त्वव्यवहारः[2], वेद्यत्वाभावात्प्रमातृत्वमप्यत्र शिवस्यैव भावानाञ्चाहन्तयैव ग्रहणम्। अपरिमिताहन्तेदन्ताविषये सदाशिवतत्त्वव्यवहारः। अत्र तु वेद्यतां भवन् मंत्रमहेश्वररूपः चेतनवर्गः प्रमाता, भावानान्तु स्तोकमिदन्तास्पर्शरूषितया अहन्तया ग्रहणम्, यत्सर्वमिदं तदहमेव नत्विदमाख्यं किमपि वस्तु भवति, एकस्य चिन्मात्रस्यैव सत्त्वात् इति। तयोरेवाहन्तेदन्तयोः समत्वे ईश्वरतत्त्वव्यवहारः। अत्र मंत्रेश्वरः प्रमाता, भावानां तु समधृततुलान्यायेन इदन्ताऽहन्ताभ्यां ग्रहणम्। चिच्चेत्यभागयोः इदमिति विषये तु शुद्धविद्यातत्त्वव्यवहारः, भावानान्तु स्तोकम् अहन्तास्पृष्टया इदन्तया ग्रहणम् परं तु[3] शुद्धाहंस्फूर्तिरप्यस्फुटा वर्त्तते एव, अन्यथा मायातत्त्वापातात्, तत्र हि प्रलयाकलाख्यः शून्यरूपः प्रमाता, न चात्राहन्तेदन्तयोः परस्परं प्रति स्फुटं प्रातयोगित्वं शक्यम् येन विकल्परूपतापातः स्यादपि तूभयमप्यत्र पर्यायेण अपरिमितमेव, मायापदे तु तयोः परस्परं प्रति स्फुटं प्रतियोगित्वमेव। यस्तु परशिवः सवत्र सर्वदा सर्वमय एवेति न तस्येह प्रस्तावः इति ॥ ४ ॥

अथ पंचमस्य श्लोकस्यावतरणिकां करोति "अधिष्ठातृ" इति।

अत्र टीकाः—

तद्द्वयम्–देवताद्वयम्, सदाशिवेश्वररूपम्, आगमव्यवहारेण–सारशास्त्रव्यवहारेण। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "अत्र" इति।

---

1. अहमित्यस्य—K. S. S.

2, शिवतत्त्वव्यवहारः—C.

3. परंत्वशुद्धा°—C.

**अत्रापरत्वं भावानामनात्मत्वेन भासनात्।**
**परताहन्तयाच्छादात्परापरदशा हि सा ॥५॥**

परता[1] पूर्णत्वमनन्यापेक्षाहमिति, 'अपरत्वम्' अपूर्णत्वमन्यापेक्षिते-दमिति[2]। अत्र च तत्त्वद्वये भावानां ध्यामलाध्यामलरूपाणामुभयांश-स्पर्शात् परापरत्वमिति। वेद्यभावनिष्ठा दशा तत्त्वस्वरूपा तदवभास-

---

अत्र टीका:—

प्रथमम् "परता" इति व्याचष्टे "पूर्णत्वम्" इति। पूर्णत्वस्यापि पर्याय-माह "अनन्य" इति। "अहन्तयाच्छादात्" इति व्याचष्टे "अहम्" इति। "अपरत्वम्" अपि व्याचष्टे "अपूर्णत्वम्" इति। अत्रापि पर्यायमाह "अन्यापेक्षिता"[3] इति। "अनात्मत्वेन भासनात्" इति व्याचष्टे "इदम्" इति। "अत्र" इति पदं व्याचष्टे "तत्त्वद्वये" इति। सदाशिवरूपे ईश्वररूपे चेत्यर्थः, "भावानाम्" इति व्याचष्टे "ध्यामलाध्यामलरूपाणाम्" इति। तत्र सदाशिवदशायां ध्यामलत्वम्, ईश्वरदशायामध्यामलत्वमिति विभागः। "परापरदशाहि सा" इति व्याचष्टे "उभयांश" इति। विद्यायाः इति शेषः। "इति" शब्दः व्याख्यासमाप्तौ।

एवमत्र पर्यवसितोऽर्थः। अत्र-सदाशिवेश्वराख्ये तत्त्वद्वये, भावानाम्-बाह्यान्तरपदार्थानाम्, अनात्मत्वेन भासनात्-इदन्तया भासनात्, अपरत्वं भवति। तथा अहन्तयाऽऽच्छादनात्-अहन्त्वेन वलनात्, अहन्तया ग्रहणादिति यावत्, परत्वं भवति। "हि" इति अतः शब्दार्थे, अतः कारणात् सा-सद्विद्या परापरमयी भवति, उभयतत्त्वसमुदायरूपत्वादिति भावः।

"भासनात्" "छादात्" इति एताभ्यां शब्दाभ्याम् सूचितं तत्त्वानां वेद्यभावमवलंब्य तत्त्वाधिष्ठातृप्रमातृतद्गतविद्याविभागं करोति "वेद्य" इति। वेद्यभावनिष्ठा दशा तत्त्वस्वरूपा भवति, वेद्यभाव एव तत्त्वभावो भवतीति

---

1. परत्वं पूर्णत्वम्—K. S. S.
2. अपूर्णतान्यापेक्षेदमिति।—K. S. S.
3. अन्यापेक्षता—C.

यितृमन्त्रेश्वरादिशुद्धप्रमातृसंवेद्यवस्तुसारा। या तु तन्निष्ठसंवेदनदशा सा शुद्धा विद्या, तत्प्रमात्रधिष्ठातृत्वं श्रीसदाशिवेश्वरभट्टारकरूपता इति सङ्क्षेपः ॥ ५ ॥

एवमेकेषां मते 'अहम्' इत्याच्छादको यो भागः तत्प्रथाप्रधाना शुद्धविद्या। अन्ये तु मन्यन्ते,—योऽसाविदंभाग आच्छादनीयस्तस्य यदवभासनं तत्प्रधाना शुद्धविद्या। अन्यथा हि स इदमंशः केन भास्यतां मायायास्तत्राभावात् भावे वा प्ररोहप्रसङ्गात्; अत एवेयं प्ररोहासहिष्णुं यत इदन्तां भासयति ततः शुद्धा। भासनाच्च विद्येति। तत एवाप्ररूढमायाकल्पत्वात् महामायेयं श्रीरौरवादिगुरुभिरुपदिष्टा, तदेवदाह।

---

यावत्। कीदृशी? तदवभासयितारो ये मंत्रेश्वरादयः शुद्धप्रमातारः तेषां संवेद्यं यद्वस्तु सः सारः यस्याः सा, तद्रूपेति यावत्। अत्यासन्नत्वेन मंत्रेशानां साक्षाद् ग्रहणम्, आदिशब्देन मंत्रमहेश्वराणां ग्रहणम्। तन्निष्ठसंवेदनदशा-शुद्धप्रमातृगता ज्ञानदशा, तत्प्रमात्रधिष्ठातृत्वम्-मंत्रेश्वरादिप्रेरकत्वम्, इति संक्षेपः, इति संक्षिप्तार्थो भवतीत्यर्थः ॥५॥

अथ षष्ठस्य श्लोकस्यावतरणिकां करोति "एवम्" इति।

अत्र टीका:—

"शुद्धविद्या" इति, चिद्भागस्य शुद्धविद्यारूपत्वादिति भावः। तत्प्रधाना—अवभासप्रधाना, अन्यथा—अवभासनस्य प्राधान्याभावे। ननु मायापदे तस्य भासनमस्त्येवेत्यत आह "मायायाः" इति। तत्र-शुद्धविद्यातत्त्वे, प्ररोह-प्रसंगात्—मायाविश्रान्तिप्रसंगात्, तथा च भेदापत्तिः स्यादिति भावः। फलितमाह "अत एव" इति। प्ररोहासहिष्णुम्—अहन्ताच्छाद्यत्वेन विश्रान्त्यसहम्, अप्ररूढमायाकल्पत्वात्—शिथिलमायासदृशत्वात्। इयम्—शुद्धविद्या, तत् एतत्—समनन्तरोक्तं वस्तु। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "भेदधीः" इति।

---

1. तत्प्रमातृवर्गाधिष्ठातृत्वम्—K. S. S.

भेदधीरेव भावेषु कर्तुर्बोधात्मनोऽपि या ।
मायाशक्त्येव सा विद्येत्यन्ये विद्येश्वरा यथा ॥६॥

मायाप्रमातरि शून्यादिरूपेऽप्यनुल्लसिते, चिन्मात्र एव प्रमातरि कर्तरि च सति चिदेकरूपेष्वपि भावेषु यदचिद्रूपतया भेदप्रकाशन-लक्षणं[1] स्वातन्त्र्यं सा शुद्धविद्या मायाशक्त्या तुल्या, वेद्यभागे भेदप्रकाशनात् । न च मायैव, ग्राहकस्य चिन्मात्रभागे तावदविपर्यासनात्, येन प्रकारेण विद्येश्वरा भगवन्तोऽनन्ताद्या वर्तन्ते । ते हि शुद्धचिन्मात्र-गृहीताहं भावाः स्वतस्तु भिन्नं वेद्यं पश्यन्ति, यथा द्वैतवादिनामीश्वरः । एवं ग्राहकेंऽशतश्चैतन्यरूपात परमार्थरूपे ग्राह्यविपर्यासनशक्तिः शुद्धविद्या विद्येश्वराणाम ॥ ६ ॥

---

अत्र टीका:—

"अनुल्लसितेऽपि" इति योजना । अपिशब्दस्तदुल्लासने भेदप्रकाशनस्य योग्यतां सूचयति । भावेषु—शून्यादिरूपेषु मातृमेयरूपेषु समस्तेषु पदार्थेषु, भेदप्रकाशनलक्षणम्—चिद्रूपत्वेन ज्ञातात् स्वस्मात् भेदेन भासनस्वरूपम् । कुतः मायाशक्त्या तुल्या इत्यत आह "वेद्य" इति । तर्हि मायारूपैवेयमस्तीत्यत आह "नच" इति । अविपर्यासनात्—अचिद्रूपताख्यविपर्यास-करणाभावात् । "विद्येश्वरा यथा" इति व्याचष्टे "येन" इति । "अन-न्ताद्याः" इति । आदिशब्देन शिवोत्तमादीनां ग्रहणम् । ते–विद्येश्वराः, द्वैत-वादिनाम्—तार्किकादीनाम् । उपसंहारं करोति "एवम्" इति । "चैतन्य-रूपात् अंशतः" इति योजना । ग्राह्यस्य यत् विपर्यासनम्–अचिद्रूपता-करणम्, तत्र या शक्तिः सा, विद्येश्वराणाम्—अनन्तादीनाम्, उपलक्षणं चैतत् शुद्धविद्यातत्त्वस्थप्रमातॄणाम् ।

एवमत्र श्लोके योजना । बोधात्मनोऽपि कर्तुः सकाशात् मायाशक्त्या इव-मायाशक्तिकृतभेदधीवत् या भावानां भेदधीः भवति सा विद्या भवति, इति एवम्, अन्ये रौरवादिगुरवः आहुरिति शेषः ॥ ६ ॥

---

1 तदप्रकाशनलक्षणम्—K. S. S.

परे प्राहुः—भगवतः परमशिवस्याप्ररूढभेदावभासनं सदाशिवेश्वरता। तत्रास्फुटे[1] भेदे इच्छाशक्तिरीश्वरस्य व्याप्रियते, स्फुटत्वे ज्ञानशक्तिः, प्ररूढे तु भेदे ग्राह्यविपर्यासेऽपि ग्राहकचिन्मात्रतायां विद्येश्वरेषु क्रियाशक्तिः. ग्राह्यग्राहक[2]विपर्यासद्वयप्ररूढौ तु मायाशक्तिः, सा च पशुप्रमातृषु, ग्राहकग्राह्योभयविपर्याससंस्कारे तु अविनिवृत्तेऽपि यदेतत् वस्तुपरमार्थप्रथनं तत्र विद्याशक्तिव्यापारो योगिज्ञानिप्रभृतिष्वपशुप्रमातृषु। तदेतद्दर्शयति।

**तस्यैश्वर्यस्वभावस्य पशुभावे प्रकाशिका।**
**विद्याशक्तिः……**

'पशुभावे' विपर्यासैकरसत्वलक्षणे पाशनीयत्वेऽस्वतंत्रत्वे[3] दृश्यद्रष्ट्-

---

अथ सप्तमस्य श्लोकस्यावतरणिकां करोति "परे" इति।

अत्र टीका :—

अन्ये त्रिकशास्त्रपारदृश्वानः अप्ररूढः–शिथिलत्वेन विश्रान्त्यसहः, यो भेदस्तस्यावभासनम्–स्वातन्त्र्येण प्रकाशनम्, सदाशिवेश्वरयोर्भावः सदाशिवेश्वरता, अस्फुटे भेदे—ध्यामलत्वे, ईश्वरस्य—श्रीशिवभट्टारकस्य, प्ररूढे—भेदविश्रान्तौ, विद्येश्वरेषु—शुद्धविद्याप्रमातृषु। अर्थात् मंत्रमहेश्वरेषु, इच्छाशक्तिः मंत्रेशेषु ज्ञानशक्तिरिति ज्ञेयम्। ग्राह्यग्राहकयोः यद्विपर्यासद्वयम् अचिद्रूपतया इव भासनरूपम्, तस्य प्ररूढौ विश्रान्तौ, सा च—मायाशक्तिश्च, वस्तूनाम्–भावानाम् यत् परमार्थप्रथनम् चिन्मात्राख्यसहजस्वरूपस्फुरणम्, तत्र—तस्मिन् प्रथने सति, तदेतत्—समनन्तरोक्तं वस्तु।

एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "तस्यैश्वर्य" इति।

अत्र टीका :—

"पशुभावे" इति व्याचष्टे "विपर्यासैक" इति, विपर्यासे—चिन्मयेष्वप्यचिन्मयताज्ञानरूपे, एकः रसः यस्य तस्य भावस्तत्त्वम् लक्षणम्—स्वरूपं

---

1. अस्फुटत्वे—K. S. S.
2. ग्राहकग्राह्य—K. S. S.
3. अस्वतन्त्रे—K. S. S.

दर्शनभेदे सत्यपि जाते पूर्वोक्तयुक्तिबलेन यदेतदैश्वर्यमुक्तं तस्य या प्रकाशिका परमेश्वरशक्तिः—यद्वशात् केचिदेव ता युक्तीराहृत्य तदाश्वस्तहृदयाः कृतिनो भवन्ति—सा विद्याशक्तिः। अयमेव षडर्धसाराविदृष्टोऽप्यस्याचार्यस्य हृदयमावर्जयति पक्षः, 'अन्ये' इत्यनुक्तः।

एतदानन्तर्यौचित्येन च मायातत्त्वनिरूपणात् तदाह

······तिरोधानकरी मायाभिधा पुनः ॥ ७ ॥

---

यस्य तादृशे। द्वितीयां व्याख्यां करोति "पाशनीयत्वे" इति। बन्ध्यत्वे[1] इत्यर्थः, व्याख्यान्तरमप्याह "अस्वतन्त्रत्वे" इति। अस्यैव पुनर्व्याख्यान्तरमाह "दृश्य" इति। लक्षणया ग्राह्यग्राहकरूपभेदज्ञाने, जाते सत्यपि, 'जाते' इत्यस्य युक्त्वेन अध्याहारः। तस्य—ऐश्वर्यस्य, केचिदेव—शक्तिपातगृहीताः केचित्पुरुषा एव। कुतः आवर्जयतीत्यत आह "अन्ये इत्यनुक्तः" इति। येषां मतं न रोचते तेषाम् "अन्ये" इत्यनेन निर्देशः क्रियते, अत्र तु न कृतः इति ज्ञायते अयमेव पक्षः आचार्यस्याभिप्रेत इति भावः। एतेन "विद्याशक्तिः" इत्यन्तं व्याख्या संपन्ना।

एवमत्र योजना। प्रमातुः जाते इति शेषः। प्रमातुः पशुभावे पशुत्वे जातेऽपि सति, तस्य—पूर्वोक्तस्य, ऐश्वर्यस्वभावस्य—ऐश्वर्यस्वरूपस्य, विद्याशक्तिः प्रकाशिका भवति इति, न तु इदन्ताप्रकाशिनी भवतीति भावः।

"तिरोधानकरी" इत्यादि व्याख्यातुमवतरणिकां करोति "एतद्" इति। एतस्याः-शुद्धविद्यायाः यद् आनन्तर्यम् अनन्तरता, तत्र यदौचित्यं तेन, मायातत्त्वनिरूपणात् हेतोः तत्—मायातत्त्वम् आह—कथयति।[2] "औचित्य" इत्यनेन शुद्धविद्यातत्त्वनिष्ठानामपि कदाचित् देहस्थितिपर्यन्तं निकटवर्तिनि मातृमेयतया स्थिते मायापदेऽपि अवस्थानं भवत्येवेति द्योतितम्।

---

1. बध्यत्वे—C.

2. 'तिरोधान' being the first word of the portion of the kārikā, which is going to be explained, must come before व्याख्यातुम, according to Bhāskara's usual practice. In the manuscript, it comes after कथयति, Hence the text has been altered as printed.

मायाशक्तिः पुनरचिद्रूपे शून्यादौ प्रमातृताभिमानं प्ररूढं दधती भावानपि चिन्मयान् भेदेनाभिमानयन्ती सर्वथैव स्वरूपं तिरोधत्ते आवृणुते विमोहिनी सा। तिरोधानमत्र न विलयनरूपं[1] मन्तव्यं, यत् कृत्यपञ्चकमध्य आगमेषु गण्यते, दीक्षितस्यापि गुरुमन्त्रादिनिन्दनप्रायमपि त्वावरणमेव ॥ ७ ॥

तिरोधानमावरणरूपं स्फुटयति

---

एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "तिरोधान" इति। "माया" इति निगदव्याख्यातम्। पुनः शब्दः शुद्धविद्यायाः व्यतिरेकद्योतकः। प्ररूढम्–विश्रान्तम्, एतेन शुद्धविद्यायाः निरासः, तत्र हि शून्यादौ प्रमातृताभिमानः अप्ररूढत्वेन स्फुरत्येव येन तत्रस्थानां मायास्पर्शो गण्यते, "चिन्मयानपि भावान्" इति योजना, भेदेन–चितःभिन्नतया, स्वरूपम्–आत्मनः भावानाञ्च पारमार्थिकं चिदाख्यं स्वरूपम्, "तिरोधानकरी" इति व्याचष्टे "आवृणुते" इति। आङ् पूर्वेण वृञा तिरोधानपदव्याख्या, तिङा कर्तृप्रत्ययान्तस्य कृञः। कुतः इत्यपेक्षायामाह "विमोहिनी" इति। विमोहकारी हि ऐन्द्रजालिकः स्वमपि विस्मारयति स्वकीयं वस्त्वपीति भावः। ननु तिरोधानं सृष्ट्यादि भगवत्कृत्यपंचकवत्र्येवास्ति उत अन्यत् इत्यत आह "तिरोधानम्" इति। विलयनरूपम्–संस्कारनाशस्वरूपम्। पुनः किमस्तीत्यत आह "दीक्षितस्यापि" इति। गुरुमंत्रादेर्यन्निन्दनं तत् प्रायः बाहुल्येन यत्र–आवरणे तादृशम्। मायाग्रस्तो हि दीक्षितोऽपि गुरुमंत्रादिनिन्दनपरो भवति इत्यन्येषां का कथा इति "अपि" शब्दाभिप्रायः। "अपितु" इति पदं "दीक्षितस्य" इत्यतः पूर्वं योजनीयम् ॥७॥

अथाष्टमस्य श्लोकस्यावतरणिकां करोति "तिरोधानम्" इति।

अत्र टीकाः—

स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे। "भेदे" इति।

---

1. विलयरूपम्—K. S. S.

भेदे त्वेकरसे भातेऽहंतयानात्मनीक्षिते ।
शून्ये बुद्धौ शरीरे वा मायाशक्तिर्विजृम्भते ॥ ८ ॥

सुषुप्ते प्रलये 'न' इत्यभावसमाधौ च तावच्छून्यमाकाशकल्पमनात्मरूपं वेद्यभावोचितम् 'अहम्' इत्यात्मत्वेन वीक्ष्यते; उच्छ्वसननिःश्वसनादौ वा अहमुच्छ्वसिमि,—इति प्राणो वायुकल्पः, स्थावरजङ्गमजिघत्सामन्युप्रज्वलनादौ वा प्राण एव तेजःसमुपबृंहितः, स्वच्छोदकाशयकल्पा वेद्यप्रतिबिम्बनवती वा बुद्धिरभिनिविश्यते अन्तरहं वेद्मि दुःख्यहमिति चिन्ताद्यवस्थासु, शरीरमेव[1] तु पृथिवीप्रायं कृशोऽहमित्या-

अत्र टीका:—

"भेदेस्त्वेकरसे भाते" इत्येतत्सुगमत्वेन विहाय "अहन्तया" इत्यादि व्याचष्टे "सुषुप्ते" इति । भेदस्यैकरसेन भानमत्र भावजातस्य अचिद्रूपतया ज्ञानमेव ज्ञेयम् , प्रलये-मूर्छावस्थायाम् "न" इत्यभावसमाधौ- "अहं नास्मि" इत्येवंरूपे भावनासाधिते समाधाने "शून्ये" इति व्याचष्टे, "आकाशकल्पम्" इति । "अनात्मनि" इति व्याचष्टे "वेद्यभाव" इति । अनात्मा हि वेद्यभावमेवार्हति । "अहन्तया ईक्षिते" इति व्याचष्टे "अहम् इति" इति । वीक्ष्यते इति, प्रमात्रा इति शेषः, प्रमात्राऽनुभूयते इत्यर्थः, अन्यथा "न किञ्चिदवेदिषम्" इति स्मृत्यनुपपत्तेः इति भावः । योग्यतयाऽऽक्षिप्तं "प्राणे" इति योजयति, "उच्छ्वसन" इति । वायुकल्पः-वायुरूपः, आत्मत्वेन वीक्ष्यते इति पूर्वेण संबन्धः । स्थावरजंगमाना या जिघत्सा तत्र यः मन्युप्रज्वलनादिः तस्मिन् , तेजःसमुपबृंहितः-तेजसा पुष्टिं नीतः, अत्रापि पूर्वेणैव संबन्धः । "बुद्धौ" इति योजयति "स्वच्छ" इति । स्वच्छोदकाशयकल्पा-स्वच्छजलाशयसदृशी, अभिनिविश्यते-प्रमात्रा आत्मस्थाने स्थाप्यते, कदा स्थाप्यते इत्यत आह "चिन्ताद्यवस्थासु" इति । इति किमिति ? "अन्तः" इति अन्तः प्रदेशो हि बुद्धिरेवेति भावः । "शरीरे" इति योजयति "शरीरमेव तु" इति । एव शब्देन तदवच्छिन्नचैतन्यव्य-

1. शरीरमेव—K. S. S.

दिदशासु अहमित्यात्मतया भाति । सर्वमेव[1] चेदं शून्यादि वस्तुतश्चिन्मात्रसारमेव माययैव तावदचिद्रूपतया भासितम् । तथाविधमेव तु सत् अहमिति संविद्रूपताभिनिवेशस्थानं संपादितमप्रशान्तजडभावमेव इति अतिदुष्कर[2]वस्तुसंपादनाप्रतीघातरूपा परमेश्वरस्य मायाशक्तिः,-

वच्छेदः। "मायाशक्तिर्विजृम्भते" इति व्याचष्टे "सर्वमेव च" इति। तथाविधमेव तु सत्-अचिद्रूपतया भासितमेव तु सत्, एतेन चिद्रूपताज्ञाने तु तस्याप्यात्मत्वं युक्तमेवेति द्योतितम्। संविद्रूपतायाः यः अभिनिवेशः तस्य स्थानम्, अहन्ताविषयमिति यावत्। "अप्रशान्तजडभावमेव" इति, जडभावस्य प्रशान्तौ तु अहन्ताविषयत्वं तस्य युक्तमेवेति भावः। इति—अतः कारणात्, अतिदुष्करं यद्वस्तु-चिद्रूपाणां भावानां भेदनरूपम्, अप्रशान्तजडभावे[3] तदेकभेदे "नरूपे" शून्यादौ अहन्ताविषयीकरणरूपम्; तस्य यत् संपादनं तत्र यः अप्रतीघातः सः रूपं यस्याः तादृशी। तदुक्तम्—

"अघटितघटनापटीयसी"[4]

1. सर्वं चैवेदम्—K.S. S.

2. दुष्करतमवस्तुसंपादना°—K. S. S.

3. अप्रशान्तजडभावे तदेकभेदे नरूपे शून्यादौ च अहन्ताविषयीकरणरूपम् च —C.

As अप्रशान्तजडभावे, तदेकभेदे and नरूपे must all refer to शून्यादौ which is the only substantive, mentioned, the force of the two चs in the sentence is not clear, We have, therefore, omitted them.

As 'नरूपे' can apply only to शून्य and not to what 'आदि' stands for, could the text have been तदेकभेदनरूपे शून्यादौ ?

4. अघटितघटनाघटीय—C.

इत्येतत् 'विजृम्भते' इत्यनेन दर्शितम् । वाग्रहणेन वेद्यरूपाणां सुतधनदारादीनामप्यहंताभिनिवेशविषयत्वमसंख्यातं सूचयति ॥ ८ ॥

नन्वचिद्रूपत्वादनात्मा यदि शून्यादिस्तदात्मतयासौ अभिनिविश्यमानश्चिद्रूप एव,—इति सर्वज्ञत्वसर्वकर्तृत्वादिविशुद्धैश्वर्यधर्मैव स्यात्,—इत्याशङ्क्याह

यश्च प्रमाता शून्यादिः प्रमेये व्यतिरेकिणि ।
माता स मेयः सन्कालादिकपञ्चकवेष्टितः ॥९॥

स्यादैश्वर्यधर्मयोगः शून्यादेः यद्यहमित्यभिनिविश्यमानोऽपि मेयतां

---

इति । "वा" शब्दाभिप्रायमाह "वाग्रहणेन" इति । असंख्यातम्—सूत्रे साक्षादनुक्तम्, अतिजडत्वेन पुरुषो हि बाह्यवस्त्वपि स्वात्मत्वेनाभिमन्यते, अन्यथा तदर्थं क्लेशसहनायोगादिति भावः ॥ ८ ॥

अथ नवमश्लोकस्यावतरणिकां करोति "नन्वचिद्रूपत्वात्" इति ।

अत्र टीका:—

तदा—मायादशायाम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे । "यश्च" इति ।

अत्र टीका:—

श्लोकं व्याख्यातुमवतरणिकायां शंकितस्य वस्तुनः व्यापकारोपप्रसंजनार्थं तर्करीत्या अंगीकारं करोति "स्यात्" इति । ऐश्वर्यधर्मयोगः, अवतरणिकायां शंकितः इत्यर्थः । ननु तर्हि सोऽस्य भवत्वित्यत आह 'यद्यहम्' इति । सः शून्यादिः प्रमाता "अहमित्यभिनिविश्यमानोऽपि" अहमिति स्वस्य ग्रहणं कुर्वन्नपि, मेयताम्—तावत्स्वभावेन स्थितं मेयभावम्, "अहम्" इत्यभिनिविश्यमानो न च जहातीति सूचनया व्यापकप्रसंजनम्, यत्र यत्र हि ऐश्वर्ययोगः तत्र तत्र मेयताहानम् "अपि" शब्दः "अहम्" इत्यभिनिवेशस्य मेयताहानौ हेतुत्वं

---

1. स्वस्याग्रहणकुर्वन्नपि—C.

जह्यात्। तथाहि सति प्रमेयमप्यस्य नीलादिव्यतिरिक्ततया नैव भासेत। यावता यः शून्यादिः प्रमाता कथितः, स यावदेव स्वरूपाद्व्यतिरेकाभिमते नीलादौ प्रमेये प्रमाता[1] तावदेव स्वयमपि मेयभूतः एव सन् माता। मेयं हि मीयमानत्वादेव परिमितम्,—इति तादृशादेव मेयान्तरादुपपन्नव्यतिरेकम्, न त्वेवं चिद्रूपमपरिमितत्वात्।

---

द्योतयति। ननु मेयतां जहातु[2] इत्यत आह "तथा" इति। हि—यस्मात्, तथा सति—मेयताहाने सति, अस्य—शून्यादेः प्रमातुः नीलादि प्रमेयं व्यतिरिक्ततया न भासेत। कुतो न भासेत इत्यपेक्षायामाह "यावता" इति। यावता—यस्माद्धेतोः, यः शून्यादिः प्रमाता कथितः-शास्त्रेषूक्तः, सः यावदेव—यस्मिन् क्षणे एव, स्वरूपाद्व्यतिरेकाभिमते-इदन्ताऽहन्ताग्रहणान्यथानुपपत्या स्वतो भेदेनाभिमते, नीलादौ प्रमेये प्रमाता भवति, तावदेव—तस्मिन्नेव क्षणे नतु तदनन्तरम्, मेयभूत एव-आन्तरं चिद्रूपं प्रति मेयतया स्थितः, सन् माता भवति, ग्राहकरूपतादत्तहस्तावलम्बेन मातृत्वयुक्तो भवति, माण्डलिक इव सम्राजोऽवष्टम्भेन स्वमण्डले राजा, अन्यथा स्वमेयाद् व्यतिरेकेण न भायादिति भावः। ननु कथमसौ मेयः सन् माता भवतीत्यत आह "मेयं हि" इति। हि यस्मात्, मेयम्, मीयमानत्वात् परिमितं सत् तादृशात्—स्वसमानयोगक्षेमात्, मेयान्तरात् उपपन्नव्यतिरेकं भवति, नतु चिद्रूपम् अपरिमितत्वात् एवं भवति, तद्धि शून्यादिप्रमातृग्रहणकाले शून्यादि स्वात्मसात्करोति, अन्यथा शून्यादिः नीलादेरिव तदपि शून्यादेः व्यतिरेकेण भायात्, न च भाति, नहि तत्र नीलमिव शून्यादिप्रमातुः शून्यादिरपि चिद्रूपाद्व्यतिरेकेण भाति, द्वयस्यैव स्फुरणात्। ननु तर्हि असत्यस्वरूपं शून्यमेव किमिति भाति, न सत्यरूपं चिद्रूपम्। सत्यम् तस्मिन्काले अतिनिर्मलत्वेन शून्याद्युपरक्तोऽसौ जडान् प्रति तद्रूप एव भाति, ये तु मध्यधामाभ्यासिनः ते तत्र शून्यादि न किंचित् पश्यन्ति इत्यलम्। एवं स्थितमत्र शून्यादि अहन्तया ग्रहणेऽपि आन्तरं चिद्रूपं प्रति मेयतां न जहात्येव, अन्यथा तस्मिन्नेव काले चिद्रूप इव शून्यादि-

---

1. नीलादौ प्रमेये माता—K. S. S.
2. ननु मेयतां जहात्वेव—C.

परिमितत्वं च शून्यादेरहंभावस्य यत् तदेव कालादिपञ्चकम्। तथा हि कालः क्रममासूत्रयन् प्रमातरि विजृम्भमाणस्तदनुसारेण प्रमेयेऽपि प्रसरति, योऽहं कृशोऽभवं स स्थूलो वर्ते भविष्यामि स्थूलतरः इत्येवमात्मानं देहरूपं क्रमवन्तमिव परामृशंस्तत्सहचारिणि प्रमेयेऽपि भूतादिरूपं क्रमं प्रकाशयति। अस्य शून्यादेर्जडस्य विद्या किंचिज्ज्ञत्वोन्मीलनरूपा बुद्धिदर्पणसंक्रान्तं भावराशिं नीलसुखादिं विविनक्ति। कला किंचित्कर्तृत्वोपोद्वलनमयी कार्यमुद्भावयति, किंचिज्जानामि। किंचित्करोमि,—इति। अत्र चांशे तुल्येपि[1] किंचित्त्वे कस्मादिदमेव

भावेन शून्यादिः[2] नीलादिरूपतया स्फुरेत्, नच स्फुरति ग्राह्यग्राहकयोः स्फुटं भेदेन स्फुरणात् इति न तस्य ऐश्वर्ययोगो युक्तः तद्ग्राहकस्य चिद्रूपस्यैव इति।

अस्य शून्यादिप्रमातृगस्यापरिमितभावस्यैव कालादितत्त्वपंचकरूपतां कथयति "परिमितत्वं च" इति। परिमितत्वं च-स्वमेयाद्व्यतिरेकेण भाननिमित्तकः परिमितत्वाख्यो गुणश्च, कालादिपंचकम्-मायानन्तरभावि कालविद्याकलारागनियतिरूपं पञ्चकं भवतीत्यर्थः। एतदेव साधयितुमाह "तथाहि" इति। आसूत्रयन् प्रथमत्वेन उद्भावयन्, प्रमातरि-शून्यादिरूपे प्रमातरि, तदनुसारेण-प्रमात्रनुसारेण, प्रसरति-संचारं करोति, तदनुसारं प्रसारं दर्शयति "योहम्" इति। वर्ते, भवामीत्यर्थः, आत्मानम्—प्रमातारम्, तत्सहचारिणि—तद्विषयभूते, प्रमेये—नीलादौ, प्रकाशयति, अज्ञासिषम्, जानामि, ज्ञास्यामि इति प्रकटीकरोति इत्यर्थः। कालनिर्णयं कृत्वा सूत्रे आदिशब्देन गृहीतस्य विद्यातत्त्वस्य निर्णयं करोति "अस्य" इति। नीलसुखादिम्-नीलसुखादिरूपम्, विविनक्ति-व्यवस्थापयति। कलातत्त्वनिर्णयं करोति "कला" इति। तत्र विद्यास्वरूपं दर्शयति "किंचिज्जानामि" इति। कलायाः स्वरूपं दर्शयति "किंचित्करोमि" इति। रागस्य स्वरूपं दर्शयति "अत्र चांशे" इति। अत्र चांशे—ज्ञेयरूपे कार्यरूपे वांशे, तुल्येपि किंचित्त्वे—किंचिद्वस्तुभावे, इदमेव-

1. तुल्ये किंचित्त्वे—K. S. S.

2. चिद्रूपइव शून्यादिभावेन नीलादिरूपतया—C-

किंचित,—इत्यत्रार्थेऽभिष्वङ्गरूपः प्रमातरि देहादौ प्रमेये च गुणाद्यारोपणमय[1] इव रागो व्याप्रियते। न च तद्बुद्धिगतमवैराग्यमेव, तद्धि स्थूलं वृद्धस्य प्रमदायां न भवेदपि, रागस्तु भवत्येव। बुद्धिधर्माष्टकेऽपि च दृष्टोऽभिष्वङ्गः। अत्रैव कस्मादभिष्वङ्ग,—इत्ययमर्थो नियत्या नियम्यते इति। एवं कलाविद्याकालरागनियतिभिरोतप्रोतो माययापहृतैश्वर्यसर्वस्वः सन् पुनरपि प्रतिवितीर्णतत्सर्वस्वराशिमध्यगतभागमात्र एवंभूतोऽयं मितः प्रमाता भाति—इदानीमिदं किंचिज्जानानः, इदं कुर्वाणोऽत्र रक्तोऽत्रैव च यः सोऽहम्—इति। एषां च भिन्नविषयत्वमपि

---

इष्टत्वेन आश्रितं कार्यं ज्ञेयं वा वस्तु एव, किंचिद्-भवति, उपादानविषयीकृतं भवतीति यावत्। इति-एवं केनाप्याक्षेपे कृते सति इति यावत्। अत्रार्थे-अस्मिन्विषये, अभिष्वंगरूपः—आसक्तिरूपः, तथा गुणादीनां यत् आरोपणम्-असत्वेप्यारोपः तत्प्राचुर्येण प्रकृतमस्मिन् तादृशे इव, रागः-रागतत्त्वम्, व्याप्रियते—व्यापारं करोति। कुत्र इत्यपेक्षायामाह 'देहादौ प्रमेये च" प्रमातरि प्रमेये चेत्यर्थः, तत्र प्रमातुराश्रयत्वेन व्यापारविषयत्वं प्रमेयस्य तु विषयत्वेनेति विभागः। ननु बुद्धिधर्मभूतावैराग्यरूपस्य रागस्य कथमणूपरि सन्निवेशः इत्यत आह "तद्धि" इति। तत्-बुद्धिगतमवैराग्यम्, रागः-तत्त्वान्तर्वर्ती रागः, अयं रागो जीवस्यान्तःस्वभावभूत एव न बाह्यवैराग्याऽभावः इति भावः। ननु तर्हि बुद्धिगतत्त्वमेव अवैराग्यस्य मा भवतु इत्यत आह "बुद्धि" इति। अभिष्वङ्गः-रागः तत्रापि स्थूलतयाऽस्तीति भावः। एतेन विद्याया अपि बुद्धिधर्मज्ञानव्यतिरेकः स्वयमेव ज्ञातव्यः। नियतेः स्वरूपं दर्शयति, "अत्रैव" इति। अत्रैव अस्मिन्निष्टे वस्तुन्येव, नियम्यते—नियमविषयतां नीयते। उपसंहारं करोति "इत्येवम्" इति। ओतप्रोतः-बलितः बद्ध इति यावत, प्रतिवितीर्णं तत्सर्वस्वराशिगतात्—सर्वज्ञत्वसर्वकर्तृत्वादिरूपमाहेश्वर्यराशिगतात् भागमात्रं यस्य तादृशः, सर्वज्ञत्वभागं विद्यायाः सर्वकर्तृत्वभागं कलायाः कथं भातीत्यत आह "इदानीम्" इति। "इदानीम्" इत्यनेन कालनिर्देशः "जानानः" इत्यनेन विद्यानिर्देशः, "कुर्वाणः" इत्यनेन कलानिर्देशः 'रक्त" इत्यनेन रागनिर्देशः, 'एव' कारेण नियतेर्निर्देशः "सोऽहम्" इत्यनेन कलादिपञ्चकस्य प्रमातरि

---

1. गुणारोपणमय—K. S. S.

भवति कदाचित्, यथान्यत्र रक्तोऽपि नियत्यान्यत् कार्यते इति । एते च प्रमातृलग्नतयैव भान्ति,—इति तस्यैव शक्तिरूपाः प्रतिप्रमातृभिन्ना एव, कदाचित् तु नटमल्लप्रेक्षादावीश्वरेच्छया एकीभवेयुरपि । न ह्येतेषामीश्वरेच्छातिरिक्तं निजं किमपि जीवितमस्ति,—इत्यसकृदुक्तं वक्ष्यते च ॥ ९ ॥

यदुक्तमिदमित्यत्र प्रमेये व्यतिरेकिणि माता,—इति तत्र तत्प्रमेयं दर्शयति ।

त्रयोविंशतिधा मेयं यत्कार्यकरणात्मकम् ।
तस्यास्त्रिभागरूप्येकं प्रधानं मूलकारणम् ॥ १० ॥

---

व्यापारदर्शनम् प्रमेयविषयत्वं तु स्फुटमेवेति न कोपि विरोधः । एवमेकविषयत्वेन कालादिपञ्चकं दर्शयति "एषां च" इति । तदेव दर्शयति "यथा" इति । ननु कथमेषां प्रमातुरान्तरत्वमित्यत आह "एते च" इति । तस्यैव–प्रमातुरेव, "कदाचित्तु" इत्यनेन एतेषां सर्वदा प्रतिप्रमातृभिन्नत्वमेव द्योतितम् । नटादिप्रेक्षायां हि बहूनामप्येक एव कालाद्याभासो दृश्यते । नन्वीश्वरेच्छायाः कोऽत्राधिकारोऽस्ति इत्यत आह "नहि" इति । एतेषाम्—कालादीनाम् जीवितम्–सत्ता ।

एवमत्र संक्षेपः । यः—शून्यादिः, व्यतिरेकिणि स्वतो भिन्ने प्रमेये, माता भवति, स मेयः सन्—आन्तरं चित्तत्वम् प्रति मेयीभवन् एव माता भवति, अन्यथा स्वयमसिद्धः सन् कथं परत्र सिद्धिं कुर्यात् , अत एवासौ परिमितत्वात् कालादिपञ्चकवेष्टितः भवति । मेयभावगमनमेव तस्य कालादिपरिच्छेद इति भावः । यस्तु व्यतिरेकिणि माता न भवति सः स्वयं न मेयीभवति एव यथा चित्तत्वम् , तद्धि शून्यादिभासनसमये तद्रूपमेव भवति इति ॥ ९ ॥

अथ दशमस्य श्लोकस्यावतरणिकां करोति "यदुक्तम्" इति ।

स्पष्टम् , एवम् अवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "त्रयोविंशतिधा" इति ।

---

1. एषाम्—K. S. S.

यत् कार्यकरणरूपं त्रयोविंशतिप्रकारं, यच्च तस्य मूलभूतं कारणं सर्वकार्यकरणाविभागरूपं प्रधानं नाम तत्सर्वं मेयम्—इति सम्बन्धः। योगिमन्त्रतदीश्वरप्रभृतीनां हि भूततन्मात्रकरणप्रधानवशीकारयोगित्वात् सर्वमेव प्रमेयम्। संसारिणामप्यनुमानागमादिदिशा प्रमेयमेव, इतीयत् प्रमेयम्। कालादयस्तु प्रमेया अपि प्रमातर्येव लग्नाः,—इति प्रमातृशक्तिस्वभावत्वात् न प्रमेयत्वेनेहावसरे मायाप्रमातृव्यतिरिक्तप्रमेयप्रस्तावे[1] गणिताः। वस्तुतो हि अत्रत्योऽयं प्रमातापि[2] प्रमेय एव, स तु प्रमात्रीक्रियमाण आच्छादितप्रमेयताक इहोच्यते॥ १०॥

नन्वत्र त्रयोविंशतौ किं कार्यं किं करणम्? इत्याशङ्क्याह

**त्रयोदशविधा चात्र बाह्यान्तःकरणावली।**
**कार्यवर्गश्च दशधा स्थूलसूक्ष्मत्वभेदतः॥ ११॥**

प्रमातुः पूर्वं करणोपयोगः,—इत्यत्रादौ त्रयोदश करणानि; तत्र

---

अत्र टीकाः—

"यच्च" इति, युक्तत्वेन चच्छब्दाध्याहारः तस्य—कार्यकरणरूपस्य मेयस्य, कार्यकरणानां यः अविभागः सः रूपं यस्य तादृशम्, अव्यक्तरूपमित्यर्थः। ननु कालादीनामपि प्रमेयत्वं स्फुटमेव इति "इयत्" इति किमुक्तमित्यत आह "कालादयस्तु" इति। आदिशब्देन विद्यादेर्ग्रहणम्। मायाप्रमातुः व्यतिरिक्तानि यानि प्रमेयाणि तेषां यः प्रस्तावः, तस्मिन्। "प्रमेयत्वेन गणिताः—" इति योजना। अत्रत्यः—मायापदसंबन्धी, प्रमात्रीक्रियमाणः—परमार्थतः अप्रमातृत्वेऽपि स इव संपाद्यमानः, इह—अस्मिन्नवसरे॥ १०॥

अथैकादशस्य श्लोकस्यावतरणिकां करोति, नन्वत्र इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "त्रयोदश" इति।

अत्र टीकाः—

"प्रमातुः पूर्वं करणोपयोगः" इति, अनेन न्यायेनेत्यर्थः, आदौ—

---

1. °प्रस्तावात्मनि—K. S. S.

2. अत्र योऽयं प्रमाता स प्रमेय एव—K. S. S.

बुद्धिरध्यवसायसामान्यमात्ररूपा, ग्राह्यग्राहकाभिमानरूपोऽहंकारः, संकल्पादिकारणं मनः,—इत्यन्तःकरणं त्रिधा। बुद्धौ शब्दाद्यध्यवसायरूपायामुपयोगीनि बुद्धीन्द्रियाणि पञ्च—श्रोत्रं, त्वक्, चक्षुः, जिह्वा, घ्राणम्,—इति। कर्मणि तूपयोगीनि पञ्च कर्मेन्द्रियाणि। तथा हि—त्यागो ग्रहणमिति द्वयम्,[1]—बहिर्विषयं यत् तत्र पाणिः पायुः पादः,—इति करणानि। एतदेवान्तः प्राणे येन क्रियते तद्वागिन्द्रियम्। तत्प्रक्षोभप्रशान्त्या विश्रान्तिक्रियोपयोगी उपस्थः। सर्वदेहव्यापकानि च कर्मेन्द्रियाण्यहङ्कारविशेषात्मकानि। तेन च्छिन्नहस्तो बाहुभ्यामाददानः पाणिनैवादत्ते, एवमन्यत्। केवलं तत्तत्स्फुटपूर्णवृत्तिलाभस्थानत्वात् पञ्चाङ्गुलिरूपमधिष्ठानमस्यीच्यते,—इत्येवं करणानि त्रयोदश। एषां च कार्यत्वेऽप्यसाधारणेन करणत्वेन

---

प्रथमम्, तत्र—त्रयोदशकमध्ये, अध्यवसायः—विषयाभिमुख्येन "इदम्" इति ज्ञानम्। ग्राह्यग्राहकाभिमानः "इदं मम ग्राह्यम्" "अहमत्र ग्राहकः" इत्येवंरूपः अभिमानः, न तु बुद्धौ उदिता प्रतियोगिरहिता अहन्ता। बुद्धीन्द्रियाणि—ज्ञानेन्द्रियाणि। कथमेषां कर्मण्युपयोग इत्यत आह "तथाहि" इति। इतिद्वयम्, एवंरूपं कर्मद्वयम् इत्यर्थः, बहिर्विषयम्—बाह्यवस्तुविषयम्, तत्र—तस्मिन्कर्मद्वये, करणानि—करणत्रयम्। एतदेव—प्रोक्तत्यागग्रहणरूपं द्वयमेव। अन्तःप्राणे येन क्रियते—अन्तः प्रदेशस्थस्य प्राणस्य त्यागग्रहणे येन क्रियते इति यावत्, तत्—वागिन्द्रियम्, नतु वागेव, एतेन प्राणप्रयत्नस्य वागिन्द्रियत्वमुक्तम्, तत्प्रक्षोभस्य प्राणक्षोभस्य प्रशान्त्या, विश्रान्तिक्रियोपयोगी उपस्थः—पुंस्त्रीलक्षणाख्यमिन्द्रियं भवति, संयोगकाले हि प्राणः स्वभावेन प्रशाम्यति इति "तत्प्रशान्त्या" इत्युक्तम्। अन्यत्—छिन्नपादादेः गमनादि। ननु यदि सर्वशरीरव्यापीनि कर्मेन्द्रियाणि तर्हि कथमेषां पाण्यादिस्थाननियम इत्यत आह "केवलम्" इति। ताश्च ताः स्फुटाः पूर्णाश्च वृत्तयः तासां यः लाभः तस्य स्थानत्वात्, यादृशं ग्रहणं हि पञ्चाङ्गुलियुक्तेन पाणिना भवति न तादृशम् बाह्वादिना, एवं सर्वत्र स्वयमेव योजनीयम्। उपसंहारं करोति "एवम्" इति। एषाम्—त्रयोदशकरणानाम्।

---

1. त्यागो ग्रहणं द्वयम्,—इति—K. S. S.

व्यपदेशः। स्थूलं कार्यं पृथिवी, आपः, तेजो, वायुः, नभः,—इति पञ्च भूतानि। सूक्ष्ममेषामेव रूपं, गन्धो, रसो, रूपं, स्पर्शः, शब्दः,—इति। तत्रैकैकगुणमाकाशादि, एकैकवृद्धगुणं वा,—इति दर्शन-भेदः,—इति न विवेचितोऽनुपयोगात्। वत्र[1] स्थूलं विभक्तमविभाग-स्यानुमापकम्,—इति स्थूलरूपोपक्रममुक्तम्। अत्र पृथिव्याद्याभासा एव मिश्रीभूय घटादिस्वलक्षणीभूताः कर्मेन्द्रियैरुपसर्पिताः, बुद्धीन्द्रि-यैरालोचिताः, अन्तःकरणेन संकल्पिताभिमतनिश्चितरूपाः, विषया विवेचिताः, कलादिभिरनुरञ्जिताः, प्रमातरि विश्राम्यन्ति,—इति तात्पर्यम्। एतच्च विस्तरतस्तत्प्रधानेषु तन्त्रालोकसारादिषु मया निर्णीतम्,—इतीहानुपयोगान्न वितानितम्,—इति शिवम् ॥११॥

इति श्रीमदाचार्योत्पलदेवविरचितायामीश्वरप्रत्यभिज्ञायां श्रीम-दाचार्याभिनवगुप्तविरचितविमर्शिन्याख्यटीकोपेतायामाग-माधिकारे तत्त्वनिरूपणाख्यं प्रथममाह्निकम् ॥ १ ॥

---

“स्थूल”[2] इत्यादि व्याचष्टे। दर्शनभेदः-मतभेदः। विभक्तम्—व्यक्तम्। अविभागस्य-अव्यक्तस्य, अत्र-स्थूलमध्ये। नन्वत्र भरः किं न कृतः इत्यत आह “एतच्च” इति। न वितानितम्-न विस्तारितम्। अयं तत्त्व-निश्चयश्च श्रीतन्त्रालोकस्य नवमे आह्निके मयैव सम्यक् कृतोऽस्ति। इह तु विस्तारभिया मूलकारानुसृत्या च न कृतः, इति तत एव अवधार्यमितिभावः। इति शब्दः आह्निकसमाप्तौ। शिव शब्दः मंगलवाचकः परतत्त्ववचनपरश्चेति शिवम् ॥ ११ ॥

इति श्रीमद्भास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञाविमर्शिनीटीकायां भास्कर्याख्यायाम् आगमाधिकारे प्रथममाह्निकं समाप्तम् ॥

---

1. तत्र—K. S. S.

2. Could the text have been स्थूल इत्यादि व्याचष्टे ‘स्थूल’ इति ?

## आगमाधिकारे

# द्वितीयमाह्निकम् ।

### विमर्शिनी ।

अखण्डितस्वभावोऽपि विचित्रां मातृकल्पनाम् ।
स्वहृन्मण्डलचक्रे यः प्रथयेत्तं स्तुमः शिवम् ॥

---

# भास्करी

एकचित्साररूपोऽपि मितमातृमयीं[1] स्थितिम् ।
स्वान्तर्धारयतीवेह यस्तं चित्ते स्तुमः शिवम् ॥

अथागमाधिकारे द्वितीयाह्निकस्य व्याख्यानिर्विघ्नपरिसमाप्तये प्रचयगमनाय च स्वान्तरनुष्ठितमपि बहिः शिष्यशिक्षार्थं स्वेष्टदेवतापरामर्शनरूपं मङ्गलं सकलाह्निकतात्पर्यसूचकेन श्लोकेनोपनिबध्नाति 'अखण्डित' इति । वयं तं शिवम् स्तुमः । तं कम् ? यः शिवः अखण्डितः-यथा तथा कल्पितायां खण्डनायामपि साक्षित्वेन सारत्वेन च स्थितत्वात् परमार्थतः खण्डनारहितः, स्वभावः-विमर्शखचितं प्रकाशाख्यं स्वरूपं यस्य तादृशः अपि सन्, स्वहृन्मण्डलचक्रे-अखण्डचिद्रूपे निजहृदयमण्डलचक्रे, विचित्राम्-नानाविधाम्, मातृकल्पनां प्रथयेत्-स्फारयेत् । एतेन मातृविचारोऽत्राह्निके भवितेति सूचितम् ।

एवं मङ्गलं कृत्वा आह्निकाभिप्रायं समस्तत्वव्यस्तत्वाभ्यां कथयति । एवम् इति ।

---

1 मतमातृ—C. 'मत' does not yield much meaning here. As the Āhnika deals with the limited subjects, we have altered it into "मित". Another possible reading is "भिन्नमातृमयीम्", corresponding to "विचित्रां मातृकल्पनाम्" in the introductory verse of Abhinavagupta.

एवं तत्त्वराशौ निर्णीते एतदन्तर्भावेनोक्तमपि मुख्यतया निर्णेतव्यं प्रमातृतत्त्वं वितत्य निर्णेतुं 'तत्रैतन्मातृतामात्र' इत्यादि 'व्यानो विश्वात्मकः परः' इत्यन्तैर्विंशतिश्लोकैराह्निकान्तरं प्रस्तूयते। तथाहि– प्रमातुरत्र स्वरूपप्रत्यभिज्ञानमुपदिश्यते शास्त्रे। स हि हेयमुपादेयं च स्वं स्वभावं विद्वान् परमोपादेयरूपं शिवस्वभावं स्वात्मानमभेदेनाविशन् जीवन्नेव मुक्तो भवति,–इति। तत्र श्लोकेन ब्रह्मादित्रयस्वरूपम्, ततोऽपि द्वयेन हेयोपादेयप्रमातृतत्त्वम्, ततस्तदुपयोगिमलस्वरूपम्, तत्कृतं च प्रमातृभेदं श्लोकसप्तकेन, द्वयेन समावेशस्वरूपम्, श्लोकपञ्चकेन प्रमातुरेव सुषुप्ताद्यवस्थाः, त्रयेण तासां हेयोपादेयविभागं निरूपयति,–इत्याह्निकतात्पर्यम्। ग्रन्थार्थस्तु निरूप्यते॥

**तत्रैतन्मातृतामात्रस्थितौ रुद्रोऽधिदैवतम्।**
**भिन्नप्रमेयप्रसरे ब्रह्मविष्णू व्यवस्थितौ॥ १॥**

तत्रेति, एवंभूतेऽस्मिन्नागमसिद्धे युक्त्यनुगते च तत्त्वस्वरूपे सति यदेतत् कालादिपञ्चकवेष्टितं प्रमातृतारूपम्, तदेव यस्यां शुद्धमुपसंहृतप्रमेयजातं भवति दशायां संहाराख्यायां तस्यामधिष्ठातृदेवतात्वं तद्दशासंपादनेन स्वोपासकलोकस्य तद्दशाध्यानावेशसमापन्नस्य स्वाभिमुख्यसंपादनेन च भजमानो भट्टारक ईश्वर एव रुद्रो भगवान्, यो

---

एतदन्तर्भावेन–तत्त्वराश्यन्तर्भावेन। हेयम्–मायापर्यन्तवर्ति, उपादेयम् मायोर्ध्ववर्ति सदाशिवान्तम्। 'इति' शब्दः समस्तत्वेनाभिप्रायकथनसमाप्तौ। व्यस्तत्वेन कथयति तत्र इति। तदुपयोगि–हेयोपादेयप्रमातृतत्त्वोपयोगि, मलस्वरूपम्–आणवादिमलत्रयरूपम्, तत्कृतम्–मलत्रयकृतम्। अथ प्रथमश्लोकमवतरणिकां विनैवोपन्यस्य व्याचष्टे **'तत्र'** इति।

अत्र टीका:—

'तत्र' इति व्याचष्टे 'एवं भूते' इत्यादि 'सति' इत्यन्तम्। **एतन्मातृतामात्रस्थितौ** इति व्याचष्टे 'यदेतत्' इति। प्रमातृतारूपम् तदेव–प्रमातृतारूपमेव, यस्याम्–संहाराख्यायां दशायाम्, उपसंहृतप्रमेयजातम् अत एव शुद्धम् भवति। तस्यामधिष्ठातृदेवतात्वं भजमानः ईश्वरो भट्टारक एव–शुद्धविद्यायां स्थितः ईश्वरो भट्टारक एव, भगवान् रुद्रो भवति,

मायापदेऽपि प्राणापानात्मकधर्माधर्मसूर्येन्दुदिननिशादिविमुक्तमध्यम[1]-ज्योतीरूपप्रमातृस्वरूपस्पर्शाद् उन्मीलिततृतीयनेत्रः। भिन्नस्य तु प्रमेयस्य 'प्रसरे' संपादनेऽधिष्ठातृदेवतात्वं भजन् ब्रह्मा, प्रसृते भिन्ने प्रमेये तत्संतानप्रवहणलक्षणे प्रसरेऽधिष्ठातृदेवता विष्णुः, अत एव तयोः प्रमेयप्रसररूपस्य 'इदं नीलम्' इत्येवं प्रकाशात्मनः प्राधान्यात् 'अहम्' इति प्रमातृदशावेशशून्यत्वात् न तृतीयनेत्रोन्मीलनम्। देवतैव दैवतम्। 'प्रसर' उत्पत्तिः संतानश्च ॥ १ ॥

---

रुद्रभावमागच्छतीति यावत्। केन हेतुना भजमान इत्यपेक्षायामाह 'तद्दशा' इति। यतः तद्दशाध्यानसमावेशयुक्तस्य तद्दशादानं स्वाभिमुख्यसम्पादनञ्च करोतीत्यर्थः। भगवान् रुद्रः कः इत्यपेक्षायामाह 'यः' इति। यः–भगवान् रुद्रः, प्राणापानात्मकौ यौ धर्माधर्मौ तथा सूर्येन्दू तथा दिननिशे. 'आदि' शब्देन ज्ञानादिग्रहणम्, ततो विमुक्तम्–उभयस्पर्शाऽरूषितम्, यन्मध्यमज्योतिः–बाह्यान्तरकुम्भकप्राप्यः मध्यावस्थाख्यः प्रकाशः, तद्रूपं यत् प्रमातृस्वरूपम्–शून्यत्वान्निर्गतस्य तावदप्राप्तशिवभावस्य चिन्मात्ररूपस्य प्रमातुः स्वरूपम्, तस्य स्पर्शात्–उन्मीलनामात्रात्, उन्मीलिततृतीयनेत्रः–प्रादुर्भूततृतीयनेत्रः, प्रमातृरूपस्य प्राणः सूर्याख्यं दक्षिणनेत्रम्, अपानः चन्द्ररूपं वामनेत्रम्, द्वादशान्तहृद्देशगतं तन्मध्यावस्थाख्यमग्निरूपं तृतीयनेत्रं येन त्रिनेत्रत्वं तस्य कथयन्ति। एतेन श्रीविष्णोः क्रियाशक्तिद्वैगुण्यमेव बाहुचतुष्टयम्। श्रीब्रह्मणः वैखरीभावापन्नवेदचतुष्टयोद्भावनमेव चतुर्मुखत्वमित्यादि ज्ञेयम्। नत्वसम्भवोपहतेष्वतिशयेषु मन्तव्यमित्यलम्।

द्वितीयमर्धं व्याचष्टे 'भिन्न' इति। प्रसरस्य द्विविधं वाच्यं कथयति उत्पत्तिः सन्तानश्च। तत्र ब्रह्मपक्षे उत्पत्तिः, तस्य हि प्रमेयोत्पत्तौ अधिष्ठातृत्वम्। विष्णुपक्षे सन्तानः, विष्णुर्हि उत्पन्नं प्रमेयजातं प्रवाहेण प्रसारयन् अधिष्ठाता भवति। पूर्वं शुद्धेऽध्वनि तु सदाशिवेश्वरभट्टारकयोरधिष्ठातृत्वमुक्तमेवेति कारणानि पञ्च कृत्यपञ्चके। तदुक्तम्ः—

"ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः"

इति। परमार्थतस्तु सर्वमेतच्छ्रीशिवे एव विश्राम्यतीति तस्यैव पञ्चकृत्यकारित्वमुक्तम् ॥ १ ॥

---

1 दिननिशाविमुक्तमध्यमज्योति—K. S. S.

यदेतन्मातृतामात्रमुक्तं तस्य विभागमागमिकं च संज्ञाभेदं निरूपयति ।

एष प्रमाता मायान्धः संसारी कर्मबन्धनः ।
विद्याभिज्ञापितैश्वर्यश्चिद्घनो मुक्त उच्यते ॥ २ ॥
स्वाङ्गरूपेषु भावेषु प्रमाता कथ्यते पतिः ।
मायातो भेदिषु क्लेशकर्मादिकलुषः पशुः ॥ ३ ॥

मायया‌न्धो विमोहितः, अत एव कर्माणि स्वात्मनो बन्धकान्यभिमन्यमान 'एष' इति कालादिवेष्टितः शून्यादिप्रमाता संसरति,-इत्यतः संसारी । देहोऽपि हि स्वरूपसादृश्यं बाल्ययौवनादिष्वनुवर्तयन् संसरतीव । बुद्ध्यादेस्तु जन्मान्तरेऽपि संसरणम् । विद्यया तु स्वरूपप्रकाशनशक्त्या प्रत्यभिज्ञापदं प्रापितमैश्वर्यं यस्य, अत एव शरीराद्यपि विश्वम[1]पि च संवेदनमेवाभिमन्यमानोऽत एव चिदेव घना अन्याचिद्रू-

अथ द्वितीयस्य तृतीयस्य च श्लोकस्यावतरणिकां करोति 'यदेतत्' इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे "एष" इति ।

अत्र टीका :—

"मायान्धः" इति व्याचष्टे "विमोहितः" इति । एतद्धेतुकत्वेन 'कर्मबन्धनः' इति व्याचष्टे 'अत एव' इति । 'एष' इति व्याचष्टे 'कालादि' इति । 'प्रमाता' इति व्याचष्टे 'शून्यादि' इति । 'संसारी' इत्यस्य व्याख्यां करोति 'संसरति' इति । ननु चेह जडस्य कथं संसरणमित्यत आह 'देहोऽपि' इति । परमार्थेन संसरणाभावात् 'इव' शब्दोपादानम्, जन्मान्तरेऽपि पुत्रादिरूपेऽन्यजन्मन्यपि, पुत्रस्य हि पितुरेव बुद्धिर्बीजभावेन आगच्छति, अन्यथा सद्योजातस्य बालादेस्त[2]दयोगापातात्, यत्तु अग्रे तत्प्राकट्यं तद्विस्तारासिमात्रकृतमेव ज्ञेयम् इत्यलं रहस्योद्घाटनेन । 'विद्या' इत्यादि समस्तं पदं व्याचष्टे 'विद्यया' इति । ऐश्वर्यम्—ज्ञातृत्वकर्तृत्वरूपा ईश्वरता । प्रत्यभिज्ञासाध्यं वस्तु अध्याहृत्य कथयति 'अत एव' इति । विश्वमपि–बाह्यं प्रमेयजातमपि, 'च' शब्दः

1 विश्वमपि संवेदनमेव—K. S. S.

2 तदयोगात्—C.

व्यामिश्रणशून्या यस्य रूपम्, स पुनर्जन्मबन्धविरहात् देहेऽपि स्थिते 'मुक्त' इति व्यपदेशयोग्यः। पतिते तु शिव एकघनः इति कः कुतो मुक्तः। भूतपूर्वगत्या तु प्रमात्रन्तरापेक्षया मुक्तः शिवः,-इति व्यवहारः।

यश्चासौ मुक्तः स भावान् स्वाङ्गवदभिमन्यमानः प्रमिमीते इति स तेषां स्वामी, स्वरूपपरमार्थसमर्पणाच्च पालकः इति पतिरुपदिष्टः शास्त्रे। मायाशक्तिकृतभेदान् व्यतिरिक्तानेव सतो यदा मिमीते तदा तैरेव मेयैः पाशरूपैः पाशितः इति पशुरुक्तः। तथाहि वेद्यराशिवशादेवास्या-विद्यास्मितारागद्वेषाभिनिवेशादयः क्लेशाः, धर्माधर्मादिरूपाणि कर्माणि, आदिपदादाशयरूपा वासना, फलभोगरूपो विपाकः,-इति कालुष्य-मनन्तप्रकारम्, यतः पाशितत्वात् 'पशुः' इत्युक्तः ॥ ३ ॥

---

समुच्चये, संवेदनमेव-ज्ञानस्वरूपमेव । एतद्धेतुकत्वेन 'चिद्घनः' इति व्याचष्टे 'अत एव' इति। चित् एव घना, अन्येन स्वव्यतिरिक्तेन अचिद्रूपेण यद् व्यामिश्रणं तेन शून्या, रूपं यस्य सः। 'मुक्तः' इति व्याचष्टे 'स पुनः' इति। 'उच्यते' इति व्याचष्टे 'व्यपदेशयोग्यः' इति। जीवन्मुक्ततामुक्त्वा तद-नन्तरभाविनीं विदेहमुक्ततामर्थादेव योजयति 'पतिते तु' इति। पतिते, देहे पतिते सतीत्यर्थः। ननु तर्हि तस्य मुक्तः शिव इति कथं व्यपदेश इत्यत आह 'भूत' इति। भूतपूर्वा-पूर्वं भूता या गतिः तया।

द्वितीयं श्लोकं व्याचष्टे 'यश्चासौ' इति। कुतोऽभिमन्यमान इत्यपेक्षायां 'प्रमाता' इत्यस्य विग्रहं करोति 'प्रमिमीते' इति। सः-प्रमाता, तेषाम्—भावानाम्, 'पतिः' इति व्याचष्टे स्वामी इति। अस्य पदस्य द्वितीयां व्याख्यां करोति 'स्वरूप' इति। स्वरूपमेव परमार्थः-सहजं वस्तु, तस्य समर्पणात्। ननु किमयमर्थः स्वबुद्ध्यैवोक्त इत्यत आह 'उपदिष्टः' इति। पूर्वार्धं व्याख्यायोत्त-रार्धं व्याचष्टे 'माया' इति। पाशितः-बद्धः, इति—अतो हेतोः, 'क्लेशक-र्मादिकलुषः' इति व्याचष्टे 'तथा हि' इति। अस्य-प्रमातुः, एतद्धेतुकत्वेन पशुः इति व्याचष्टे 'यतः' इति। यतः—यस्मात्कालुष्याद्धेतोः, पाशितत्वात्-बद्धत्वात् ॥ ३ ॥

यदेवैतत्पशुरूपं तदेवागमेषु त्रिविधं मलम्,—इत्याह ।

स्वातन्त्र्यहानिर्बोधस्य स्वातन्त्र्यस्याप्यबोधता ।
द्विधाणवं मलमिदं स्वस्वरूपापहानितः ॥ ४ ॥
भिन्नवेद्यप्रथात्रैव मायाख्यं जन्मभोगदम् ।
कर्तर्यबोधे कार्मं तु मायाशक्त्यैव तत्त्रयम् ॥ ५ ॥

इह ज्ञातृकर्तृरूपं तावच्चित्तत्त्वस्य स्वरूपं, तस्यापहारो नामाणवं मलं येनासावणुः संकुचितो जातः। तत्र स्वरूपस्य निमीलनं संकोचः। तत्स्थिते बोधरूपे कर्तृत्वलक्षणस्य स्वातन्त्र्यात्मनः स्वरूपान्तरस्य निमीलनं विपर्ययो वा,—इत्युभयथाप्याणवं मलं स्वरूपापहानिरूपमेकमेव ।

अत्रैवेति, सत्याणवे मले द्विप्रकारे स्वरूपसंकोचे वृत्ते भिन्नस्य

---

अथ चतुर्थस्य पञ्चमस्य च श्लोकस्य व्याख्यां करोति 'यदेव' इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकद्वयमुपन्यस्य व्याचष्टे 'स्वातन्त्र्य' इति ।

अत्र टीकाः—

श्लोकं व्याख्यातुं प्रक्रियां करोति 'इह' इति । इह—अत्र शिवाद्वयशास्त्रे, तस्य—ज्ञातृकर्तृत्वरूपस्य स्वातन्त्र्यस्य, येन—मलेन, असौ अणुः—शून्यादिप्रमाता, 'तत्र' इति । तस्मिन् आणवे मले इत्यर्थः । 'निमीलनम्' इत्यस्य स्वयमेव पर्यायमाह 'संकोचः' इति, स च विद्याकलाऽवच्छेदरूपो ज्ञेयः । उक्तप्रक्रियावष्टम्भेन श्लोकं व्याचष्टे 'तत्' इति । तत्—यतः ज्ञातृकर्तृरूपस्य संकोच एव न तु स्वरूपतो नाशः ततः कारणात्, बोधरूपे स्थिते सति, ज्ञातृत्वे स्थिते सतीति यावत्, कर्तृत्वलक्षणस्य—कर्तृत्वरूपस्य, स्वातन्त्र्यात्मनः—स्वातन्त्र्यस्वभावस्य, स्वरूपान्तरस्य—ज्ञातृत्वाद् व्यतिरिक्तस्य स्वरूपस्य, निमीलनम्—सूत्रे 'हानि' शब्देनोक्तः संकोचः, विपर्ययो वा—सूत्रे 'अबोधता' शब्देनोक्तः बोधविपर्ययो वा, इत्युभयथापि—एवं प्रकारद्वयेनापि ।

द्वितीयं श्लोकं व्याख्यास्यन् तदन्तर्गतं 'अत्रैव' इति पदद्वयम् व्याचष्टे 'सत्याणवमले' इति । 'भिन्नवेद्यप्रथा' इति व्याचष्टे 'भिन्नस्य' इति ।

यत्प्रथनं तस्य 'मायीयम्' इति संज्ञामात्रम्। मायाकृतत्वेन मायीयता मलत्रयस्यापि। तत्र कर्तुरबोधरूपस्य देहादेर्भिन्नवेद्यप्रथने सति धर्माधर्मरूपं कार्मं मलम्, यतो जन्म भोगश्च स च नियतावधिकः, इति जात्यायुर्भोगफलं कर्म इत्युक्तं भवति।। ४ ॥ ५ ॥

---

संज्ञामात्रम् इति, तैलपायिकादिवदिति भावः, कुतः संज्ञामात्रमित्यत आह 'माया' इति, अन्यथा 'मायाशक्त्यैवतत्त्रयम्' इति कथनमयुक्तं स्यादिति भावः। 'जन्मभोगदम्' इत्याद्यवशिष्टं व्याचष्टे 'तत्र' इति, स च—भोगश्च, नियतावधिकः—कार्ममलस्थिति तावत् स्थितिभाग् भवति, इति—अतः कारणात्, इति—कर्तृ[2], उक्तं भवति, इति किमिति? कर्मजात्यायुर्भोगफलम् जन्मायुर्भोगफलम् भवति।

एवमत्र संक्षिप्तार्थः। इदम् आणवमलं कर्तृ अपरिमितस्य प्रमातुः अणुभावापादकं मलम्, इति—एवं स्वस्वरूपापहानितः द्विधा भवति, इति किमिति? बोधस्य चिन्मात्रस्य, स्वातन्त्र्यहानिः—ज्ञातृत्वस्य संकोचः एकः प्रकारः, तथा स्वातन्त्र्यस्य—कर्तृत्वस्य अबोधता—बोधव्यतिरिक्ताभिमानः द्वितीयः प्रकारः। अत्रैव—द्विरूपे आणवे मले स्थिते सति, भिन्नवेद्यप्रथा मायाख्यं मलम्—मायीयं

---

1 संज्ञामात्रमिति, तैलपायिकादिवदितिभावः। अन्यथा मायाशक्त्यैव तत्त्रयमिति कथनमयुक्तं स्यादिति भावः। कुतः संज्ञामात्रमित्यत आह माया इति। जन्मभोगदम्—C.

The order of these sentences, as found in the M. S. cannot be right. The sentence "अन्यथा मायाशक्त्यैव" etc. is apparently an explanation of the Vimars'inī, beginning with मायाकृतत्वेन, which is referred to in the Bhāskarī by the word माया इति। Its real position, therefore, is not after तैलपायिकादिवदिति भावः as found in the M. S. but after माया इति as printed.

2 The position of the word 'कर्तृ' at first looks rather strange, but on a careful study, it seems to indicate the connection of 'इति' with 'भवति' as its subject.

अथैषां मलानां विविक्तविषयनिरूपणात् स्वरूपं स्फुटीकर्तुं 'स्वातन्त्र्यहानिर्बोधस्य' इत्यस्य तावद्विषयमाह।

शुद्धबोधात्मकत्वेऽपि येषां नोत्तमकर्तृता।
निर्मिताः स्वात्मनो भिन्ना भर्त्रा ते कर्तृतात्ययात् ॥६॥

येषां चिन्मात्रमेव परमार्थो न तु 'अहम्' इति स्वात्मविश्रान्त्यानन्दरूपं परमं स्वातन्त्र्यम्। ते परमेश्वरेण तथा निर्मिताः स्वात्मनः सकाशाद्व्यतिरिक्ताः। अत्र हेतुः–'कर्तृतायाः' उत्तमस्वातन्त्र्यलक्षणायाः 'अत्ययात्' अभावात्; परमेश्वरस्य तूत्तमस्वातन्त्र्यावियुक्तबोधरूपत्वम्,–इत्यभिप्रायशेषः। ६॥

---

मलं भवति। कर्तरि अबोधे–बोधव्यतिरिक्ते—बोधव्यतिरिक्तस्वरूपे सति कार्ममलं भवति, कीदृशम्? जन्मभोगदम्, तत्त्रयं मायाशक्त्यैव ॥ ५ ॥

अथ षष्ठस्य श्लोकस्यावतरणिकां करोति 'अथैषाम्' इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'शुद्ध' इति

अत्र टीकाः—

'शुद्धबोधात्मकत्वेऽपि' इति व्याचष्टे 'येषाम्' इति। 'शुद्ध' पदस्य मात्रचा व्याख्या, परमार्थः–परमात्मतयाऽभिमतं विश्रान्तिस्थानम्। 'नोत्तमकर्तृता' इति व्याचष्टे 'न तु' इति। स्वातन्त्र्यम्–विमर्शशक्तिरूपा स्वतन्त्रता। द्वितीयमर्धं व्याचष्टे 'ते' इति। ते–सांख्यादिरूपाः, 'भर्त्रा' इति व्याचष्टे 'परमेश्वरेण' इति। तथा–तेन प्रकारेण। युक्तत्वेन अस्य अध्याहारः। 'व्यतिरिक्ताः निर्मिताः' इति योजना। 'कर्तृतात्ययात्' इत्यस्य हेतुत्वेन योजनां करोति 'अत्र हेतुः' इति। शुद्धबोधस्य किं परमेश्वरत्वं नास्तीत्यपेक्षायामस्याभिप्रायमाविष्करोति 'परमेश्वरस्य' इति। 'अहम्' इति विमर्शशक्तियुक्तस्य बोधस्यैव परमेश्वरत्वं न सांख्यादिमतस्य शुद्धबोधस्येति भावः ॥ ६ ॥

नन्वस्माद्धेतोर्भवतु परमेश्वरात् तेषां भिन्नत्वमन्योन्यतस्तु कथं भेदो बोधरूपस्य व्यापित्वनित्यत्वकृतस्य च देशकालाभेदस्य समानत्वात्; अन्योन्यभेदाभावे च 'निर्मितास्ते' इति कथं बहुवचनम् ? इत्याशङ्कां व्यपोहति ।

**बोधादिलक्षणैक्येऽपि तेषामन्योन्यभिन्नता ।**
**तथेश्वरेच्छाभेदेन ते च विज्ञानकेवलाः ॥७॥**

इह हि सर्वत्राप्रतिहतशक्तिः परमेश्वर एव तथाबुभूषंस्तथा[1] तथा भवति, नत्वन्यः कश्चित् परमार्थतोऽस्ति,–इत्यसकृदुक्तम्; ततश्च व्यापकनित्यबोधस्वभावोऽपि 'अहं भेदेन निर्भासे' इत्येवंभूतेनेश्वरेच्छाविशेषेण तेषां शरीरादिशून्यान्तप्रमातृपदोत्तीर्णानां बोधत्वनित्यत्वविभुत्वादिधर्मजातस्यैक्येऽप्यन्योन्यं भेदः, ते च शास्त्रे विज्ञानकेवला उक्ताः । तत्र विज्ञानकेवलो मलैकयुक्तः,–इत्यादौ 'विज्ञानं' बोधात्मकं रूपं 'केवलं' स्वातन्त्र्यविरहितमेषामिति ॥ ७ ॥

---

अथ सप्तमस्य श्लोकस्यावतरणिकां करोति 'नन्वस्मात्' इति ।

अत्र टीकाः—

अस्माद्धेतोः—कर्तृतात्पर्याद्धेतोः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे "बोधादि" इति ।

अत्र टीकाः—

श्लोकं व्याख्यातुं पूर्वोक्तां युक्तिमनुसरति 'इह हि' इति । तथाभवितुमिच्छन् तथा बुभूषन्, तथा तथा भवति–तथा तथा वस्तुस्वरूपो भवति । एतदवष्टम्भेन श्लोकं व्याचष्टे 'ततश्च' इति । कुत्रोक्ता इत्यपेक्षायामाह 'तत्र' इति । इत्यादौ–एवमादौ वाक्यकदम्बके । 'विज्ञानकेवलाः' इति व्याचष्टे विज्ञानम् इति ॥ ७ ॥

---

1 तथा बुभूषुः—K. S. S.

एवं 'स्वातन्त्र्यहानिर्बोधस्य' इत्यस्य भागस्य विज्ञानाकलविषयता-मुक्त्वा 'स्वातन्त्र्यस्याप्यबोधता' इत्यमुमंशं विषयप्रदर्शनेन स्पष्टयति।

शून्याद्यबोधरूपास्तु कर्तारः प्रलयाकलाः।

तेषां कार्मो मलोऽप्यस्ति मायीयस्तु विकल्पितः॥ ८॥

शून्ये जडत्वादबोधरूपे एव, यदि वा प्राणे बुद्धौ वा येषाम् अह-मिति चमत्कारयोगात् कर्तृत्वं ते प्रलयेन कृताः 'अकलाः' कलातत्त्वो-पलक्षितकरणकार्यरहिता अबोधरूपाः कर्तारश्च। प्रलयावधि हि ते तथाकृताः[1] उत्तरकालं तु कार्यकरणसंबद्धा एव भवन्ति; यतस्तेषां न केवलमुक्तरूप आणव एव मलो यावत् कार्मोऽपि वासनासंस्काररूपो धर्माधर्मात्मास्त्येव। यद्येवम्, भिन्नवेद्यप्रथाप्येषां स्यात्। सत्यम्, सवेद्ये[2] सुषुप्तपदे, ऽपवेद्ये तु न भवति; तेन मायीयो मल एषां विकल्पितो व्यवस्थितविषयत्वेन। तथा हि-केऽपि शून्यादिभागविश्रान्ता गाढ-निद्राजडीकृता अपवेद्यसुषुप्तपदभाजः। अन्ये तु बुद्ध्यादिनिष्ठाः सुख-दुःखावशेषसामान्यात्मकभिन्नवेद्यसंवेदनयोगिनः सवेद्यसौषुप्तपद-

---

अथाष्टमस्य श्लोकस्यावतरणिकां करोति 'एवम्' इति। स्पष्टम्। एवमव-तरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'शून्ये' इति।

अत्र टीकाः—

'आदि' शब्दगृहीतं वस्तु पक्षान्तररीत्या कथयति 'यदि वा प्राणे' इति। अहमिति चमत्कारयोगात्-अहमित्यास्वादयोगात्, शून्यादावात्माभिमान-पूर्वमिति यावत्। प्रलयेन-मूर्च्छारूपेण प्रलयकालेन, प्रलयावधि-प्रलयकालं तावत्, तथा कृताः-अकलाः कृताः, उत्तरकालम्-प्रलयानन्तरम्, कुतो भवन्तीत्यत आह 'यतः' इति। अत्र शिष्यः प्रश्नयति 'यद्येवम्' इति। एषाम्-प्रलयाकलानाम्, उत्तरमाह 'सत्यम्' इति। सवेद्ये-सुखाद्यवेद्यसहिते, सुषुप्तपदे तेषां भिन्नवेद्यप्रथा सत्यमस्तीति योजना। व्यवस्थितविषयत्वेन-बीजभावस्थितनानारूपवस्तुविषयत्वेन, अत्र समर्थनं करोति 'तथाहि' इति।

---

1 तथाभूताः—K. S. S.

2 सवेद्यरूपे—K. S. S.

लीनाः । स्थूलदेहेन्द्रियात्मककार्यकरणवियोगरूपत्वं तु प्रलयाकललक्षणं सर्वेषां तुल्यम् ॥ ८ ॥

एवं 'स्वातन्त्र्यस्याप्यबोधता' इत्येवमंशः स्फुटीकृतः, प्रसङ्गाच्च कार्ममलस्य विषयो दर्शितः, मायामलस्य च पाक्षिकत्वमुक्तम् । अधुना पुनराणवकार्ममलद्वयाभावेऽपि शुद्धोऽस्ति मायाख्यस्य मलस्य विषयः,-इति दर्शयति

**बोधानामपि कर्तृत्वजुषां कार्ममलक्षतौ ।**
**भिन्नवेद्यजुषां मायामलो विद्येश्वराश्च ते ॥ ९ ॥**

ये चिन्मात्रमेवात्मतया पश्यन्ति 'अहम्' इति च चमत्कारोल्लासात् कर्तारस्तत एव सर्वज्ञाः सर्वकर्तारश्च ते विद्येश्वराः । किन्तु तनुकरणभुवनादि यदेषां वेद्यतया कार्यतया च भाति, तत् कुविन्दपटदृष्ट्या भिन्नमेव सत्,-इत्यस्ति विद्येश्वराणां मायाख्यमलयोगः ॥९॥

अथ मलत्रयस्यापि यौगपद्येन यो विषयस्तं दर्शयितुमाह ।

**देवादीनां च सर्वेषां भविनां त्रिविधं मलम् ।**
**तत्रापि कार्ममेवैकं मुख्यं संसारकारणम् ॥ १० ॥**

---

**सर्वेषाम्**-सवेद्यसुषुप्तपदस्थानाम् अपवेद्यसुषुप्तपदस्थानाञ्च, **'तुल्यम्'** इति, सर्वेषां सुष्ठु सुप्तत्वेन स्थूलदेहाद्यभिमानाभावादिति भावः ।

एवमत्र संक्षिप्तार्थः । तु-व्यतिरेके, शून्याद्यबोधरूपाः कर्तारः प्रलयाकलाः भवन्ति । तेषाम्-प्रलयाकलानाम्, कार्मो मलोऽपि-संस्काररूपः कार्माख्यो मलोऽपि, अस्ति, न केवलं संस्काराभावरूपः आणवः । तु-व्यतिरेके । तेषां मायीयो मलोऽपि कल्पितः भवति, संस्कारभावेन स्थितत्वात् ॥ ८ ॥

अथ नवमश्लोकस्यावतरणिकां करोति **'एवम्'** इति ।

अत्र टीकाः—

पाक्षिकत्वम्-सवेद्यसुषुप्तपक्षनिष्ठत्वम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे **'बोधानाम्'** इति ।

अत्र टीकाः—

**विद्येश्वराः**-शुद्धविद्यानिष्ठाः मन्त्राख्याः प्रमातारः ॥ ९ ॥

अथ दशमस्य श्लोकस्यावतरणिकां करोति **'अथ'** इति । स्पष्टम् । एवमव-

इह विद्येश्वरविज्ञानाकलास्तावन्न भविनो मायान्ताध्वातिक्रमणात्; प्रलयाकला अपि कंचित्कालमविद्यमानभवाः। ये त्वेते मायातत्त्वान्तरालपरिवर्तिनो देवादयः स्थावरान्ताश्चतुर्दश[1] शास्त्रेषु परिगणितास्ते सर्वे 'भविनः' संसारिणः, तेषां च त्रयोऽपि युगपन्मलाः। ननु मलत्रयमध्ये कतमो मलः संसरणमेषां संपादयेत्? आह, 'तत्रापि' तेषु त्रिष्वपि सत्सु कार्मं मलं मुख्यतया संनिपत्य संसरणे कारणम्। यथोक्तम्।

---

तरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'देवादीनाम्' इति।

अत्र टीकाः—

'चतुर्दश' इति। तदुक्तम्ः—

अष्टविकल्पो दैवः तिर्यग्योनिश्च पञ्चधा भवति।
मानुष्यश्चैकविधः[2] समासतो भौतिकः सर्गः॥
पैशाचो राक्षसो याक्षो गान्धर्वः शाक्र एव च।
सौम्यस्तथान्यः[3] प्राजेशो ब्राह्मण्य[4] इत्यष्टधा स्मृतः॥

इति। अष्टविकल्पो दैवः। पशु मृग-पक्षि सरीसृप स्थावरभेदस्तिर्यग्योनिः पञ्चधा, विज्ञानाकलाः–विज्ञानकेवलाः, भविनः[5]–संसारिणः, पुनः के भविनः सन्तीत्यत आह 'ये तु' इति। प्रश्नं करोति 'ननु' इति। उत्तरं कथयति 'आह' इति। सन्निपत्य–अन्याभ्यां मिलित्वा, अत्रागमवाक्यमुदाहरति' यथोक्तम्' इति।

---

1 चतुर्दशधा—K. S. S.

2 मानुषश्च—C. 3 सौम्यस्तथान्यः—C.

4 The second half of the verse, as found in the M. S., has one syllable more than what is required by metre. Could the reading have been ब्राह्मण्यश्चाष्टधा स्मृतः?

5 भाविनः—C. Although this reading occurs, repeatedly in the M. S. yet we have adopted the K. S. S. reading 'भविनः'; because it expresses more accurately the idea contained in the explanatory word संसारिणः। For the same reason we have retained 'भविनाम्' in Utpala's kārikā also.

'कर्मतस्तु शरीराणि विषयाः करणानि च ।'

इति । तनुकरणविषयसंबन्ध एव च वर्तमानो भविष्यंश्च,–इत्यनवरतं प्रबन्धतो वर्तमानः संसरणमुच्यते । आणवमायामलौ तु यद्यपि न कारणं संसारे, तथापि कार्मेण विना तौ देहादिविचित्रभावाभिनिर्वर्तनशक्तिशून्यौ विज्ञानाकलादिषु,–इति मुख्यं कार्ममेव मलं संसारकारणं तत्र तत्र शास्त्रे गण्यते । अत एव तदुपक्षये वृत्ते दत्तस्तावद्-संसरणसोपानपदबन्धः,–इत्याशयेन कर्मबन्धाभिमानपरिहानिरेव यत्नतः सांख्यपुराणभारतादिशास्त्रेषूपदिश्यते । एवं मलत्रयस्यैकैकभेदैस्त्रिभिर्द्विभेदैस्त्रिभिस्त्रिभेदेनैकेन, इति सप्त प्रमातार उत्तिष्ठन्ति । तथा च शास्त्रे

'शिवादिसकलान्ताश्च शक्तिमन्तः सप्त ।'

---

ननु संसरणाख्यो भवः किमुच्यत इत्यत आह 'ननु' इति । नवीनानामुत्पत्तिमपेक्ष्य भूत इति नोक्तम् । ननु तर्हि आणवमायीयौ तत्र व्यर्थावेवेत्यत आह 'आणव' इति । एतेन फलितं वस्त्वाह 'अत एव' इति । तदुपक्षये–कार्ममलक्षये, वृत्ते–सम्पन्ने, पदबन्धः–पदस्पर्शः । उपसंहारं करोति 'एवम्' इति । एवम्–उक्तप्रकारेण । इति–एवम् , मलसप्तकेनेति यावत् । सप्तप्रमातारः–शिवादयः सकलान्ताः, उत्तिष्ठन्ति–संपद्यन्ते । इति कथम् ? मलत्रयस्य त्रिभिः एकैकभेदैः, केवलेन प्रत्येकं मलत्रयेणेत्यर्थः । तथा त्रिभिः द्विभेदैः—आणवमायीयाभ्याम् , आणवकार्माभ्याम्, मायीयकार्माभ्याम् , इत्येवं द्वयत्रिकेणेति यावत् । तथा एकेन त्रिभेदेन, एकीभूतेन मलत्रयरूपेण एकेन त्रिकेणेत्यर्थः । तत्र केवलेन आणवमलेन शिवतत्त्वमुत्तिष्ठति, शक्तेर्भिन्नतया गणनया आपाततः तद्रहिततया स्फुरणात् , तस्यैव च स्वातन्त्र्यहानित्वात् । यद्यप्याणवमलद्वितीयभेदेन स्वातन्त्र्याबोधतारूपेण शक्तितत्त्वस्योत्थानम्, तथापि तदिह न गणितम्, अप्रकृतत्वात् । शक्तिमतां निर्णयस्यैव प्रकृतत्वात् । शिवाद्भेदेन गणिता शक्तिरबोधकलत्वमाश्रयत्येव, सैव स्वातन्त्र्यस्याऽबोधता, केवलेन आणवेन शिवोत्थानम् , केवलेन मायीयमलेन मन्त्र महेश्वरोत्थानम् केवलेन कार्ममलेन मन्त्रोत्थानम् , आणवमायीयाभ्यां मन्त्राख्य विद्येशोत्थानम् , आणवकार्माभ्यां विज्ञानाकलोत्थानम्, मायीयकार्माभ्यां प्रलयाकलोत्थानम्, आणवादित्रिकेण सकलोत्थानमिति क्रमः । अत्रागमशास्त्रमुदाहरति 'तथा च'

इत्युक्तम् । तत्राप्यवान्तरभेदेन गुणमुख्यताभेदेन विकल्पसमुच्चयतादिभेदेन चानन्तप्रकारत्वमिति ॥ १० ॥

अस्य च मलत्रयस्योद्भवतिरोभावभेदात् संसारिणां प्रकारद्वयम् ,- इति दर्शयति

कलोद्बलितमेतच्च चित्तत्त्वं कर्तृतामयम् ।
अचिद्रूपस्य शून्यादेर्मितं गुणतया स्थितम् ॥ ११ ॥
मुख्यत्वं कर्तृतायाश्च बोधस्य च चिदात्मनः ।
शून्यादौ तद्गुणे ज्ञानं तत्समावेशलक्षणम् ॥ १२ ॥

एतच्चेति, यत् त्रिदशादीनां भविनां चैतन्यं कर्तृतांशस्य प्राधान्यान्मलेन संविद्भागस्य निमज्जितत्वात् कर्तृतामयम् चिद्रूपस्य तत्त्वं स्वातन्त्र्यम्, कलाख्येन परमेश्वरशक्त्यात्मना तत्त्वेन 'उपोद्बलितम्' अनुप्राणितम्, मलेन न्यक्कृतं सदुद्बोधितम्, शून्यादेर्देहपर्यन्तस्य

---

इति । सप्तकेऽपि अवान्तरभेदेन बहुत्वं कथयति 'तत्र' इति । 'इति' शब्दः श्लोकव्याख्यासमाप्तौ । एतेन ऊर्ध्वमपि शिवतत्त्वान्तं मायातत्त्वस्य व्याप्तिर्दर्शिता, अन्यथा एकत्र तत्त्वे कां शिवादिकल्पना । शिवस्याणवमलादुत्थानञ्च तत्परामर्शकाणवमलसंस्कारवशेन ज्ञेयम् । अन्यथा एकस्मिन् पूर्णे तत्त्वे का शिवादिकल्पना । एवं सदाशिवादौ ज्ञेयम् ॥ १० ॥

अथैकादशस्य द्वादशस्य च श्लोकस्यावतरणिकां करोति 'अस्य च' इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे **'कलोद्बलितम्'** इति ।

अत्र टीकाः—

**'एतच्च'** इति व्याचष्टे 'यत्' इति । भविनाम्-संसारिणाम्, मलेन-कार्ममलेन, कर्तृतामयम्-स्थूलकर्तृतास्वरूपम्, **'चित्तत्त्वम्'** इति व्याचष्टे 'चिद्रूपस्य' इति, 'कलाख्येन'[1] इति । अत्र पर्यायान्तरमाह 'मलेन' इति । **'शून्यादेर्गुणतया स्थितम्'** इति व्याचष्टे 'शून्यादेः' इति । षष्ठ्यर्थमाह

---

1 चित्तत्त्वम् इति व्याचष्टे कलाख्येन इति—C.

मायाप्रमातुः संबन्धि, तत्र 'गुणत्वेन अप्रधानत्वेन स्थितम्, यतो 'मितम्' इदन्तापन्नदेहादिशून्यान्तप्रमेयभागनिमग्नत्वात् प्रमेयम्, यो गौरो, यः सुखी, यस्तृषितो, यः सर्वरूपरहितः सोऽहम्,-इति हि इदन्तैवान्तर्नीताहंभावा[1] संसारिणां परिस्फुरति। सेयं जाग्रत्स्वप्नसुषुप्तरूपा संसारावस्था।

यदा तूक्तगुरूपदेशादिदिशा तेनैवाहंभावेन स्वातन्त्र्यात्मना व्यापकत्वनित्यत्वादिधर्मपरामर्शमात्मनि विदधता ततः शून्यादेः प्रमेयादुन्मज्ज्येवास्यते तदा तुर्यातीतावस्था। यदापि परामृष्टतथाभूतवैभवादिनित्यैश्वर्य[2]संभेदेनैवाहंभावेन शून्यादिदेहधात्वन्तं सिद्धरसयोगेन

---

'सम्बन्धि' इति। एतद्धेतुकत्वेन 'मितम्' इति व्याचष्टे 'यतः' इत्यादि 'प्रमेयम्' इत्यन्तम्। ननु कथं प्रमातुः स्वरूपस्य प्रमेयत्वं युक्तमित्यत आह 'यो गौरः' इति। 'गौरः' इति पदेन देहप्रमातुः परामर्शः। 'यः सुखी' इति बुद्धिप्रमातुः, ' 'तृषितः' इति प्राणप्रमातुः परामर्शः। 'सर्वरूपरहितः' इति शून्यप्रमातुः परामर्शः। संसारिणाम् अन्तर्नीताहंभावा इदन्तैव परिस्फुरति' इति। सोऽहम् इति हि परमार्थतः अहन्तासामानाधिकरण्येन तच्छब्दाक्षिप्तयच्छब्दानुरोधतः इदन्ताविषयस्यैव ग्रहणम्। स्मृतिनिर्णये चात्र भरः कृत एवेति न पुनरायस्तम्। सेयम्-अन्तर्नीताहंभावा इदन्तैव, संसारावस्था, संसारदशा, तत्र प्रमेयप्रधानायां देहप्रमात्रवस्थायां जाग्रदवस्था, प्रमाणप्रधानायां धीप्रमात्रवस्थायां स्वप्नावस्था, प्रमातृप्रधानायां प्राणशून्यप्रमात्रवस्थायां सुषुप्तावस्था इति क्रमो ज्ञेयः।

द्वितीयं श्लोकं व्याख्यातुमवतरणिकां करोति 'यदा तु' इति। आत्मनि-सत्ये चिदात्मनि, प्रमेयात्-आपाततः प्रमातृत्वेऽपि परमार्थेन प्रमेयरूपात्, उन्मज्ज्येव-उत्थायेव, तदा तुर्यातीतावस्था, परमार्थतः उन्मज्जना ऽयोग्यतामपेक्ष्य 'इव' शब्दोपादानम्। परामृष्टं[3] तथा भूतं यत् वैभवादिनित्यैश्वर्यम्-व्यापकत्वादिरूपमैश्वर्यम्, तस्य संभेदः यस्य तादृशेन, सिद्धरसस्य-ताम्रादौ

---

1 इदन्तैवान्तर्लीनाहंभावा—K. S. S.

2 परामृष्टतथाभूतवैभवनित्यैश्वर्यादिधर्मसंभेदेनैवाहंभावेन K. S. S.

3 परामृष्टं तथा भूतं वैभवादि नित्यैश्वर्य-यत् व्यापकत्वादि—C.

विध्यते, तदास्यां तुर्यदशायां तदपि प्रमेयतामुज्झतीव। सेयं द्वय्यपि जीवन्मुक्तावस्था 'समावेश' इत्युक्ता शास्त्रे। सम्यगावेशनमेव हि तत्र तत्र प्रधानम्, तत्सिद्धये तूपदेशान्तराणि। यथा गीतम्।

'मय्यावेश्य मनो ये मां।' ( गी० १२।२ )

इति।

'अथावेशयितुं चित्तं।' ( गी० १२।९ )

इत्यादि च। समावेशपल्लवा एव च प्रसिद्धदेहादिप्रमातृभागप्रह्वीभाव-भावनानुप्राणिताः परमेश्वरस्तुतिप्रणामपूजाध्यानसमाधिप्रभृतयः कर्म-प्रपञ्चाः। यद्गीतमपि।

'अभ्यासेऽप्यसमर्थः सन्मत्कर्मपरमो भव।' ( गी० १२।१० )

इति। देहपाते तु परमेश्वर एवैकरसः,–इति कः कुत्र कथं समाविशेत्। तदेतदाह-यत् पुनः कर्तृताया मुख्यत्वं तन्नान्तरीयकश्च शून्यादे-

---

सुवर्णताऽऽपादकस्य पारदादेः सिद्धरसस्य, यो योगः तेन, विध्यते–व्याप्यते, सर्वत्राहन्ताग्रहे हि देहादिरपि तथैव गृह्यते। तदपि–शून्याद्यपि, उज्झतीव, तत्रापि चिन्मात्ररूपत्वेन ग्रहणात्, अन्यथाहंपरामर्शविषयत्वायोगात्। द्वयी अपि-देहाभिमानस्पर्शरूषिता तुर्यावस्था तदभिमानस्पर्शरहिता तुर्यातीतावस्था, समावेश इति–परतत्त्वेन सहैकीभाववाचकेन समावेश-शब्देन, शास्त्रे–अध्यात्मशास्त्रे। ननु शास्त्रे बहूक्तमस्ति इत्यत आह 'सम्यक्' इति। तत्र तत्र–तेषु तेषु शास्त्रेषु। अत्र श्रीभगवता स्वयं प्रोक्तश्रीगीताशास्त्रवाक्यमुदाहरति 'यथा गीतम्'–इति। किं गीतमित्य-पेक्षायाम् आह 'मय्यावेश्य' इति। आवेश्य–योजयित्वा। ननु सत्स्वपि प्रसिद्धेषु स्तुत्यादिषु किमिति समावेश एवेत्थमुक्तः इत्यत आह 'समावेश' इति। देहादिरूपा ये प्रमातृभागाः तेषां यत् प्रह्वीभावभावनम्–परप्रमातारं प्रति गुणीभावापादनम्–नामनं च तेन अनुप्राणिताः–सन्दीपिताः, अत्रापि श्रीगीतावाक्यमुदाहरति 'अभ्यासे' इति।

ननु जीवन्मुक्तिर्द्वयरूपिणी भवतु, विदेहमुक्तिस्तु कीदृशी भवति इत्यत आह 'देह' इति। देहपाते–विदेहमुक्त्यवस्थायाम्, तदेतत्–समनन्तरोक्तं वस्तु।

गुणभावः, तस्मिंश्चाप्यचिद्रूपे गुणीभूते 'स्वातन्त्र्यस्याप्यबोधता' इति मलव्यापारस्यापहस्तनात् चितो यः परोऽप्यात्मभागो[1] बोधलक्षणो मलेन न्यक्कृतोऽभूत् तस्यापि अधुनोन्मग्नत्वेन मुख्यत्वम्। यच्च तत् [2]कर्तृताया 'मुख्यत्वम्' उन्मग्नता, इदमेव ज्ञानमज्ञानात्मकमलप्रतिपक्षत्वात्; तदेतन्मुख्यत्वं समावेशस्य लक्षणं येन देहस्थितोऽपि 'पतिः' इति 'मुक्तः' इति शास्त्रेषूक्तः ॥ १२ ॥

---

[3]एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे यत्पुनः इति। तन्त्रान्तरीयकः-कर्तृतामुख्यत्वाविनाभावी, गुणभावः-अप्रधानत्वम्, तस्मिन्-शून्यादौ च, अपहस्तनात्-निमीलनात्, चितः-चिन्मात्रस्य परोऽपि-उत्तीर्णोपि सन्, आत्मभागः-स्वांशः, न्यक्कृतः-तिरस्कृतः, तत्कर्तृतायाः-चित्कर्तृतायाः, तदेतत् मुख्यत्वम्-प्रोक्तं चिद्भागस्य मुख्यत्वम्, लक्षणम्-स्वरूपम्, येन-येन मुख्यत्वेन, देहस्थितोऽपि-जीवन्नपि पुरुषः।

एवमत्र श्लोकद्वयस्य संक्षिप्तार्थः। एतद्-देहादिभावमागतं सकलप्रमातृरूपम्, चित्तत्त्वम्-चितः स्वरूपम्, अचिद्रूपस्य जडस्य देहादेः शून्यादिप्रमातृचतुष्टयस्य, गुणतया स्थितम्-धर्मतया स्थितं भवति। कीदृशम्? कलया किञ्चित्कर्तृत्वरूपेण कलातत्त्वेन, उपोद्बलितम्-अनुप्राणितम्, अतएव कर्तृतामयम्-कर्तृतास्वरूपम्। कुतो गुणत्वेन स्थितमित्यपेक्षायाम् विशेषणं हेतुत्वेनाह 'मितम्' इति। यतः तार्किकाः हि प्रमातारं प्रति ज्ञानस्य गुणत्वमेव कथयन्ति। तु-व्यतिरेके। कर्तृताया मुख्यत्वं यद् भवति शून्यादौ तद् गुणे सति, गुणत्वेन

---

1 योऽपरोऽपि—K. S. S.

2 यच्च कर्तृतायाः—K. S. S.

3 The verses 11 and 12 are given together. The introduction to verse 12 comes after the commentary on the verse 11. As there is now no need to give verse 12, Bhāskara, therefore appears to say 'श्लोकमुपन्यस्य' by mere habit.

नन्वेवं पत्युः समावेशात्मिका तुर्यतदतीतरूपा भवतु दशा, पशोस्तु कथं सुषुप्तस्वप्नजाग्रद्दशाभेद आगमेषूक्तः,–इत्याशङ्क्य सुषुप्तस्वरूपमेव तावदाचष्टे श्लोकत्रयेण ।

शून्ये बुद्ध्याद्यभावात्मन्यहन्ता कर्तृतापदे ।
अस्फुटारूपसंस्कारमात्रिणि ज्ञेयशून्यता ॥ १३ ॥
साक्षाणामान्तरी वृत्तिः प्राणादिप्रेरिका मता ।
जीवनाख्याथवा प्रागेऽहन्ता पुर्यष्टकात्मिका ॥ १४ ॥
तावन्मात्रस्थितौ प्रोक्तं सौषुप्तं प्रलयोपमम् ।
सवेद्यमपवेद्यं च मायामलयुतायुतम् ॥ १५ ॥

इह चित्तत्वं स्वस्वरूपमाच्छादयत् ज्ञेयरूपेण बुद्ध्यादिना देहान्तेन घटादिना वाभासते[1] । एकमेव चेदं स्वातन्त्र्यविजृम्भितं, न त्वत्र

---

ज्ञाते सतीति यावत्, चिदात्मनः–चिद्रूपस्य बोधस्य च मुख्यत्वं यद् भवति तत् समावेशलक्षणम्–तुर्यतुर्यातीतसमावेशस्वरूपं ज्ञानं भवति इति । तदुक्तम्:—

'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज'

इति । अत्र हि 'धर्म' शब्देन शून्यादिप्रमातृप्रमेयवर्गग्रहम् 'माम्' इत्यनेन चिद्रूपस्य, शरणव्रजनं चात्र समावेश एवेत्यलं बहुना ॥ १२ ॥

अथ त्रयोदशस्य चतुर्दशस्य पञ्चदशस्य च श्लोकस्यावतरणिकां करोति 'नन्वेवम्' इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'शून्ये' इति ।

अत्र टीका:—

प्रथमं श्लोकं व्याख्यातुं प्रक्रियां करोति 'इह' इति । इह–अत्र जगति, आभासते–स्फुरति । तदुक्तम् ।

चिद्घनोऽपि जगन्मूर्त्याऽस्थानो यः स जयत्यजः ।
स्वात्मप्रच्छादनक्रीडाविदग्धः परमेश्वरः ॥

---

1 भासते—K. S. S.

वास्तवः क्रमो वा भेदो वा । तत्रापि तु स्वातन्त्र्यात् क्रमश्च भेदश्चाभासते । तदेवंस्थिते यश्चित्तत्त्वस्य स्वरूपाच्छादनभागः स एवोत्तरभागान्तरासंकीर्णो यदा विश्राम्यति तदनुदयाद्वा तत्प्रध्वंसाद्वा प्रलय इव तदनादरणाद्वा निद्रासमाधिमूर्च्छादाविव, तत्रैव चाहन्तारूपं कर्तृतायाः पदं परामर्शोऽस्फुटत्वादरूपात्मना संस्कारेण शुद्धेन वेद्यपदवीमप्राप्तेन युक्तो भवति, तदा सैवावस्था नेत्येवपरामर्शलेशानपेक्षित-

---

इदम्—जगद्रूपम् , अत्र—अस्मिन्स्वातन्त्र्ये । ननु तर्हि कथं तन्निर्मितेषु भावेषु क्रमो वा भेदो वा दृश्यत इत्यत आह 'तत्रापि तु' इति । तत्रापि, एवं सत्यपीत्यर्थः । एकस्य स्वतन्त्रस्य क्रमभासनं भेदभासनमपि वा स्वातन्त्र्यमेवेति भावः । उक्तप्रक्रियावष्टम्भेन श्लोकं व्याचष्टे 'तदेवम्' इति । स्वरूपाच्छादनभागः-स्वरूपाच्छादनांशः, उत्तरभागान्तरैः—भूतभाविपदार्थरूपैः अन्यैरंशैः, असंकीर्णः । तदनुदयात्-उत्तरभागानुदयात् , 'अनुदयात्' इत्यवरोहाभिप्रायेण, 'प्रध्वंसात्' इत्यारोहाभिप्रायेण, अत्र दृष्टान्तं दर्शयति 'प्रलये इव' इति । तदनादरणात् , उत्तरभागोपेक्षयां, तत्र दृष्टान्तमाह 'निद्रा' इति । तत्रैव च-शून्याख्ये तस्मिन् विश्रान्तिकाले एव । 'पद' शब्दं व्याचष्टे 'परामर्शः' इति । 'अस्फुट' इत्यादि समस्तं पदं व्याचष्टे 'अस्फुटत्वात्' इति । मात्रचः व्याख्यां करोति 'शुद्ध' इति । तद्धितप्रत्ययव्याख्यां करोति 'युक्तः' इति । 'शून्ये' इति व्याचष्टे 'तदा' इति । तदा-तस्मिन् काले, सैवावस्था शून्य इत्युच्यते पण्डितैरिति शेषः । कीदृशी ? नेत्येव-'न' इत्येतावन्मात्ररूपः यः परामर्शलेशः तेन अनपेक्षितः-विषयत्वेन न अपेक्षाविषयीकृतः, निषेध्यबुद्ध्यादिविषयः-उत्तरकाले निषेधनीयबुद्ध्यादिविषयः, सुस्पष्टः परामर्शः तेन संभेदः संबन्धः यस्याः । निषेधपरामर्शे हि निषेध्यपरामर्शोऽवश्यंभावी एव, अन्यथा किं विषयः सः स्यात् । अस्याम् अवस्थायां तु स न युक्तः सुषुप्तत्वहानेः । किञ्च निषेध्यपरामर्शोऽप्यत्र न युक्त एव, उत्तरकाले एव न किञ्चिदवेदिषमिति परामर्शोत्पादादिति भावः ।

---

1 नेत्येव परामर्शशेषा अनपेक्षितनिषेध्यबुद्ध्यादि—K. S. S.

निषेध्यबुद्ध्यादिविषयसुस्पष्टपरामर्शसंभेदापि अवश्यंभाविनिषेध्ययोगात् 'अकिञ्चनोऽहम्' इतिवत्[1] स्वीकृतसामान्याकारनिषेध्या, अत एव संस्कारशेषीकृतज्ञेया[2] 'शून्य' इत्युच्यते। तथाविधे बुद्ध्यादीनां देहादिनीलान्तानामभावरूपे शून्यत्वमुच्यते, यतस्तत्र ज्ञेयानां 'शून्यता' अभावरूपता संस्कारशेषता। इयमेव हि सर्वत्राभावो न तु सतां सर्वात्मना विनाशः।

---

तादृशी अपि अवश्यंभाविनिषेध्ययोगात्-उत्तरकाले अवश्यंभाविनिषेधनीययोगात्, अकिञ्चनोऽहमितिवत्-एवंरूपसामान्यतो निषेधवत्, स्वीकृतः सामान्याकारः—बुद्ध्यादिविशेषरहितः निषेध्यः यया सा, तत्परामर्शाभावेऽपि फलतः तद्युक्तेति यावत्। अत एव-अस्माद्धेतोरेव, संस्कारशेषीकृतं ज्ञेयम् बुद्ध्यादिरूपं ज्ञेयवस्तु यया सा, अन्यथाऽग्रे तत्प्रादुर्भावायोगादितिभावः। सप्तमीयोजनां करोति 'तथाविधे' इति। 'बुद्ध्याद्यभावात्मनि'[3] इति व्याचष्टे 'बुद्ध्यादीनाम्' इति। कुतः शून्यत्वमुच्यते इत्यपेक्षायाम् "ज्ञेयशून्यता" इति व्याचष्टे 'यतः' इति। तत्र-तस्मिन् शून्ये, अभावरूपतामपि प्रकटीकरोति 'संस्कार' इति। ननु अन्यत्र अभावः कीदृशो भवति इत्यत आह 'इयमेव' इति। इयमेव—संस्कारशेषतैव, सर्वात्मना-निःशेषेण, तदुक्तम्;-

'नाभावो विद्यते सतः'

इति।

एवमत्र श्लोके योजना बुद्ध्याद्यभावात्मनि तथा अहन्ताकर्तृतापदे उत्तरकाले 'न किञ्चिदवेदिषम्' इति स्मृतिरूपपरामर्शान्यथानुपपत्तेः अहन्तारूपकर्तृतापरामर्शयुक्ते, तथा अस्फुटम् अरूपं संस्कारमात्रमस्मिन्नस्तीति तादृशे, शून्ये-सुषुप्तरूपे शून्यपदे, ज्ञेयशून्यता-ज्ञेयराहित्यम्, ज्ञेयस्य संस्कारमात्रेणावस्थानमिति यावत्, भवति इति।

---

1 इत्येवंभूतपरामर्शवत्—K. S. S.

2 संस्कारशेषीकृतज्ञेयरूपा—K. S. S.

3 बुद्ध्यादिभावात्मनि—C.

तत्रैव शून्ये प्रमातरि समवेता प्राणापानसमानोदानव्यानात्मके वायुचक्रे प्रेरणात्मिका शक्तिः, सा च विद्याकलयोः प्रपञ्चभूतौ यौ क्रमेण बुद्धीन्द्रियकर्मेन्द्रियवर्गौ तयोरान्तरी वृत्तिः । बाह्या हि तयोः शब्दाद्यालोचनशब्दाभिव्यक्तिस्थानाभिहननादिका वृत्तिः । तदुक्तम्

'सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ।' (सां० २९ का०)

इति । एवं शून्य एवाहन्ता अक्षचक्रोपोद्बलिता जीवनम्, इति स शून्य एव जीवः संसरति । यदि वेन्द्रियशक्तीनामेव यान्तरी साधारणप्राणनात्मिका प्राणशब्दवाच्या प्राणादिमारुतविशेषप्रेरणामयी सैव 'अहम्' इत्यधिशयाना जीवनम्, तदा प्राण एव जीवः संसारी, स एव शून्यः, प्राणश्च पुर्यष्टकशब्दवाच्यः, प्राणादिपञ्चकं बुद्धीन्द्रियवर्गः

---

अथ द्वितीयं श्लोकं व्याचष्टे 'तत्रैव' इति । 'समवेता'[1] इति । 'सा' इति व्याचष्टे 'शून्ये' इति । **प्राणादिप्रेरिका** इति व्याचष्टे 'प्राण' इति । **'अक्षाणान्मातरीवृत्तिः'** इति व्याचष्टे 'सा च' इति । सा च-शक्तिश्च, प्रपञ्चभूतौ-उपप्लवभूतौ, आन्तरी वृत्तिः—आन्तरो व्यापारः, तयोः-बुद्धीन्द्रियकर्मेन्द्रियवर्गयोः, तत्र शब्दाद्यालोचनं बुद्धीन्द्रियवृत्तिः शब्दाभिव्यञ्जनस्थानहननादि कर्मेन्द्रियवृत्तिरिति क्रमो ज्ञेयः । **'जीवनाख्या'** इति व्याचष्टे **'एवम्'** इति । **शून्ये एव अहन्ता**-शून्यप्रमातृगताऽहन्ता एव, इति-अतः कारणात्, यः **जीवः संसरति** सः **शून्य एव**-शून्यप्रमातैव भवति । **'अथवा'** इत्यादि व्याचष्टे **'यदि वा'** इति । **अधिशयाना**-आश्रितवती । नन्वत्र कस्य जीवत्वमित्यत आह 'तदा' इति । **'पुर्यष्टकात्मिका'** इति पक्षद्वयेऽपि योजयति 'स एव' इति । स एव-प्राण एव । कुतः प्राणस्य पुर्यष्टकवाच्यत्वमित्यत आह 'प्राणादि' इति । प्राणाद्यष्टकव्यञ्जकत्वादेवास्य

---

1 The position of समवेता, coming before शून्ये, is rather difficult to understand. In the Vimars'inī **सा** is explained as शून्ये प्रमातरि समवेता. Could the Bhāskarī, therefore, have been **'सा'** इति व्याचष्टे 'शून्ये' इत्यादि 'समवेता' इत्यन्तम् ?

कर्मेन्द्रियगणो निश्चयात्मिका च यतो धीर्व्यज्यते। तन्मात्रपञ्चकं मनोऽहंबुद्धय इत्यन्ये

'तन्मात्रोदयरूपेण मनोऽहंबुद्धि०।' ( स्प० ४।१९ )

इति।

'भूमिरापोऽनलं०।' ( गी० ७।४ )

इति च वदन्तः।

एवं यदुभयात्मकं पुर्यष्टकं तावत्स्येव शुद्धे या विश्रान्तिः, तस्यां

---

पुर्यष्टकत्वमिति भावः। अन्येत्वन्यथा कथयन्ति इत्याह 'तन्मात्रपञ्चकम्'[1] इति। 'अन्ये' इति-एवम्, आहुरिति शेषः। इति किमिति ? 'तन्मात्रपञ्चकम्' इति। एतदादि बुद्ध्यन्तं[2] पुर्यष्टकम्, नत्वेतद्व्यञ्जकः प्राण इति भावः। अन्ये कीदृशाः ? इति वदन्तः। इति किमिति ? 'तन्मात्रोदय' इति। तथा इति च वदन्तः। इति किमिति ? 'भूमिः' इति। तदुक्तम्:—

'तन्मात्रोदयरूपेण मनोऽहं बुद्धिना पुर्यष्टकेन संरुद्धः' इत्यादि।

एवमत्र श्लोकद्वये योजना पण्डितानाम्। अक्षाणाम्-सर्वेन्द्रियाणाम्, आन्तरीवृत्तिः-आन्तरव्यापाररूपा, तथा प्राणादिप्रेरिका सा अहन्ता जीवनाख्या मता। अथवा प्राणे स्थिता अहन्ता जीवनाख्या मता, अहन्ता कीदृशी ? पुर्यष्टकात्मिका, पुर्यष्टकरूपेत्यर्थः, इति।

अथ तृतीयं श्लोकं व्याचष्टे 'एवम्' इति। 'तावत्' शब्दापेक्षितं वस्तु कथयति 'यत्' इति। उभयात्मकम्-शून्यप्राणगताऽहन्तात्मकम्, मात्रचो व्याख्यां करोति 'शुद्धे' इति। 'स्थिति' पदं व्याचष्टे 'विश्रान्तिः' इति।

---

1 प्राणादिपञ्चकम्—C. Although this reading occurs thrice, yet it seems to be a mistake for तन्मात्रपञ्चकम्, because the sentence beginning with tnis states another view of पुर्यष्टक, which is different form that of Abhinava. According to this view. as we learn from two quotations, given in the Vimars'inī, it is the तन्मात्रपञ्चक and not the प्राणादिपञ्चक, which constitutes the first five of the पुर्यष्टक.

2 एतदादि बुद्ध्यन्तम् पञ्चकं पुर्यष्टकम्—C.

सत्यां यदहन्तायाः सुषुप्ताया बोधलक्षणं भावरूपं कर्म च क्रियास्वभावं तत् सौषुप्तम्। मलेन हि प्रमाता सुप्तः कलया त्वसुप्त इव, अत्र तन्निमज्जने[1] सुष्ठु सुप्तस्तस्य भावः कर्म वा,-इति। तत्र शून्यसौषुप्ते न किञ्चिद्व्यतिरिक्तं वेद्यम्,-इति मायीयमलाभावादपवेद्यं तत्; प्राणसुषुप्ते तु स्पर्शकृतस्य सुखदुःखादेर्भावात् मायाख्यमस्ति मलम्,-इति सवेद्यं तत्। एवं गाढागाढसुषुप्तद्वितयवत् प्रलयोऽपि मन्तव्यः। स परं देहादिप्रध्वंसानुदयकृतश्चिरतरकालश्च। सुषुप्तं तु देहाद्यनादरकृतमचिरकालं च,-इति विशेषः। तत्रापि श्रमकृतं निद्रा, धातुदोषकृतं मूर्च्छा, द्रव्यकृतं मदोन्मादादि, स्वातन्त्र्यकृतं समाधिः,-इत्याद्यवान्तरभेदाः। केचित्तु समाधिरूपं सवेद्यमन्यदपवेद्यम्,-इति प्रपन्नाः॥१५॥

नन्वेवं स्फुटवेद्यपदविनिर्मुक्ता सुषुप्तावस्थास्तु, स्वप्नजाग्रद्दशयोस्तु स्फुटवेद्यावभासयोगिन्योः को भेदः'? इत्याशङ्क्य श्लोकद्वयेन भेदमाह

---

सप्तमीयोजनां करोति 'तस्यां सत्याम्' इति। 'सौषुप्तम्' इति भावे कर्मणि च व्याचष्टे 'अहन्तायाः' इति। 'अहन्तायाः' इति विशेष्याध्याहारः। 'सौषुप्तम्' इति अन्यथा व्याचष्टे 'मलेन' इति। अत्र-अस्यां सुषुप्तौ, तन्निमज्जने-कर्तृरूपकलातत्त्वनिमज्जने सति। उत्तरार्धं व्याचष्टे 'तत्र' इति। तत्र, सुषुप्तद्वयमध्ये इत्यर्थः। एतेन 'न किञ्चिदवेदिषम्' इति शून्यसुषुप्तम्। 'सुखमहमस्वाप्सम्' इति प्राणसुषुप्तम् इति द्योतितम्। मध्ये त्यक्तं 'प्रलयोपमम्' इति पदं व्याचष्टे 'गाढ' इति। ननु तर्हि प्रलयसुषुप्तयोः एकत्वमेवायातमित्यत आह 'स परम्' इति। अवरोहमपेक्ष्य 'अनुदय' इत्युक्तम्, आरोहमपेक्ष्य 'प्रध्वंस' इति प्रोक्तम्। अनादरः-निद्रादोषादिकृता उपेक्षा। सुषुप्तेऽपि हेतुभेदेन नामभेदानाह 'तत्रापि' इति। द्रव्यम्-मद्यादि। अन्येषां मतमाह 'केचित्तु' इति, प्रतिपन्नाः-अङ्गीकृतवन्तः॥ १५॥

अथ षोडशस्य सप्तदशस्य च श्लोकस्यावतरणिकां करोति 'नन्वेवम्' इति स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'मनोमात्र' इति।

---

1 निमज्जनेन—K. S. S.

**मनोमात्रपथेऽप्यक्षविषयत्वेन विभ्रमात् ।**
**स्पष्टावभासा भावानां सृष्टिः स्वप्नपदं मतम् ॥ १६ ॥**
**सर्वाक्षगोचरत्वेन या तु बाह्यतया स्थिरा ।**
**सृष्टिः साधारणी सर्वप्रमातॄणां स जागरः ॥ १७ ॥**

बाह्येन्द्रियाणि[1] चक्षुर्गोलकादीनि निमीलितानि निद्रायमाणस्य लक्ष्यन्ते, न च तेषु निमीलितेषु बाह्येन्द्रियग्रहणव्यापारो दृष्टः, तेन शुद्ध एव मनोमार्गे रूपस्पर्शादयो भावा अक्षग्रहणसमुचितेन स्पष्टेन वपुषा भासनयोग्याः परमेश्वरेण सृज्यन्ते, न त्वणुना, अनिष्टस्यैव दर्शनात्, इष्टस्यापि देशकालान्तरादियोगेन। अत एव मनोमात्रस्थितत्वादेव न प्रमात्रन्तरसाधारणीयं सृष्टिः। यत्तु तत्र बाह्येन्द्रियविषयत्वं प्रमात्रन्तरसाधारण्यं चकास्ति, तद्यद्यपि यावद्भाति तावत् तथैव, तथाप्युत्तरकालं प्रबुद्धस्य न तथा,—इति परामर्शेन तद्रूपं निर्मूलत्वेना-

अत्र टीकाः—

'**मनोमात्र**' इति व्याचष्टे '**बाह्येन्द्रियाणि**' इति। **निद्रायमाणस्य**—निद्रामाचरतः, **शुद्धे**—बाह्येन्द्रियस्पर्शानारूषिते । '**भावानाम्**' इति व्याचष्टे 'रूप' इति। '**स्पष्टावभासा**' इति व्याचष्टे '**अक्ष**' इति। '**सृष्टिः**' इति व्याचष्टे '**सृज्यन्ते**' इति। **नत्वणुना**—अणुना जीवेन न तु सृज्यन्ते। कुतो न सृज्यन्ते इत्यत आह '**अनिष्टस्यैव**' इति कदाचित्स्वप्ने अनिष्टमेव केवलं दृश्यते अतो ज्ञायते तज्जीवेन न सृज्यते। न हि कस्यापि स्वानिष्टसर्जनं **युक्तम्**। यत्तु केनापि कारणेन तदेव दृश्यते तत्रेश्वरकृतत्वं स्फुटमेवेति। द्वितीयमपि **हेतुमाह** '**इष्टस्यापि**' इति। 'दर्शनात्' इति अत्रापि संबध्यते। यदि स्वप्ने जीवस्य निर्मातृत्वं स्यात् तर्हि कदाचित् कुत्रचिदेवेष्टदर्शनमयुक्तं स्यादिति भावः। एतेन फलितं प्रसिद्धं वस्तु कथयति '**अतएव**' इति। **इयम्**—स्वप्नरूपा, न हि अन्यमनोगतमन्यस्य गोचरीभवितुं युक्तमिति भावः। '**विभ्रमात् अक्षविषयत्वेन**' इति व्याचष्टे '**यत्तु**' इति। **तत्र**—तस्मिन्स्वप्ने, **चकास्ति**—भासते। **तथैव**, सत्यभूतमित्यर्थः। **न तथा इति परामर्शेन**—जाग्रदवस्थायां स्थितेन

1 बाह्येन्द्रियाधिष्ठानानि—K. S. S.

वभाति,-इति भ्रान्तम्। यानि हि प्रमात्रन्तराणि स्वप्ने स्वेन्द्रियाणि च भान्ति, एतानि प्रबोधकालभाविभिरेव तैरभिन्नानि,-इति निश्चयः, प्रबोधकाले च न तथा,-इति निश्चयानुवृत्तिरपह्नुतैव। तेनोभयमपि भ्रान्तमुच्यते; भ्रान्तत्वमेव चास्थैर्यम्। एवमिन्द्रियाविषयत्वेनैवा-साधारणत्वमाक्षिप्तम्,

'विभ्रमेणैव चास्थैर्यं............।'

इति स्वकण्ठेन, तत् जाग्रत्प्रतियोगिधर्मनिरूपणावसरेऽपि न दर्शितम्। एवंभूता या सृष्टिः सा पशोः स्वप्नसमये भावात् 'स्वप्नपदं' स्वप्नकाले विषयः इति, तथाभूतविषयं प्रमातृत्वं पशोः स्वप्नावस्था इति यावत्। अक्षग्रहणं बाह्येन्द्रियदशकस्योपलक्षणम्।

---

असत्यत्वपरामर्शेन, तद्रूपम्-स्वप्नपदार्थरूपम्, निर्मूलत्वेन-बाध्यत्वेन, इति-अतः कारणात्, भ्रान्तम्-भ्रमसिद्धम्। तदुक्तम्:—

'स्वप्नो जाग्रत्यसद्रूपः'

इति। यत्तु

'जाग्रत्स्वप्नोऽप्यसद्वपुः'

इति नीत्या जागरस्याप्यसत्यत्वमेव तदिह अप्रस्तावहतमिति न वक्तुं युक्तम्। कथं भ्रान्तमित्यपेक्षायामाह **'यानि'** इति। **तैः**-प्रमात्रादिभिः, **'प्रबोधकाले च न तथा'** इति, मया यत्स्वप्ने दृष्टं तत् तथा न भवति। एवं **निश्चयानुवृत्तिः**-स्वप्ननिश्चयानुवर्तनम्, **अपह्नुतैव**-उन्मूलितैव भवति। **तेन**-ततः कारणात्, **उभयमपि**-प्रमात्रन्तराणि इन्द्रियाणि च, स्वप्ने **भ्रान्तम्**-भ्रमसिद्धमुच्यते। ननु तत्र अस्थैर्यत्वं कथमस्तीत्यत आह **'भ्रान्तत्वमेव'** इति। उपसंहारं करोति **'एवम्'** इति। **तत्**-असाधारणत्वम् अस्थैर्यञ्च, जाग्रतः-जाग्रद्दशायाः प्रतियोगिभूताः-प्रतिपक्षत्वेन स्थिताः ये धर्माः-असाधारणत्वादिरूपाः धर्माः, तेषां यन्निरूपणं तस्य अवसरे। **स्वकण्ठेन न दर्शितम्**-साक्षान्नोक्तम्। नहि आक्षेपमात्रसिद्धे यत्नो युक्त इति भावः। **'स्वप्नपदम्'** इति व्याचष्टे **'स्वप्नकाले'** इति। **'पदम्'** इत्यवयवं व्याचष्टे **'विषयः'** इति। अत्र पर्यायान्तरमाह **'तथाभूत'** इति। **'अक्ष'** शब्दस्य दशेन्द्रियोपलक्षणत्वं कथयति **'अक्षग्रहणम्'** इति।

यत्र तु बाह्याक्षविषयं सर्वप्रमातृसाधारणत्वं च निश्चयानुवृत्त्या बाधारहितया परमार्थत्वेन चकास्ति, तत एव स्थैर्यं विषयस्य सा सृष्टिः पशोः जागरः; तद्विषयं प्रमातृत्वं जागरावस्था,–इति यावत्। यावच्चानुवृत्तिस्थैर्यं निश्चयस्य चकास्ति तावज्जागरः। तन्मध्ये[1] च निश्चयानुवृत्तिनिर्मूलनात् स्वप्नः,–इत्यवभाससारत्वात् वस्तूनां, स्वप्नेऽपि दीर्घे यत्र स्वप्नान्तरं स तदपेक्षया जाग्रदेव; जाग्रदभिमतमपि वा दीर्घदीर्घं कालान्तरे निश्चयानुवृत्तिनिरोधाज्जाग्रदन्तरापेक्षया स्वप्न एवेति मन्तव्यम् ॥ १७ ॥

आसां तिसृणां हेयत्वप्रदर्शनेन तुर्यावस्थातः प्रभृत्युपादेयत्वं सूचयति

---

द्वितीयं श्लोकं व्याचष्टे 'यत्र तु' इति। अनुवृत्तिरूपं स्थैर्यम् अनुवृत्तिस्थैर्यम्। जाग्रन्मध्येऽपि स्वप्नं साधयति 'तन्मध्ये' इति। तन्मध्ये च–जाग्रन्मध्ये च, **निश्चयानुवृत्तिनिर्मूलनात्**–तत्कालजातनष्टवस्तुविषयनिश्चयनिर्मूलनेन, **'स्वप्नः'** इति भवति। कुतः ? **वस्तूनामवभाससारत्वात्**, यथावभासमेव हि वस्तूनि व्यवस्थाप्यन्ते इति भावः। स्वप्नमध्येपि जाग्रत्साधयति **'यत्र'** इति। **स्वप्नान्तरम्**–अन्यः स्वप्नः। नन्वस्य स्वप्नस्य जागरत्वं स्फुटमेवास्तीति कथं स्वप्नव्यवहारः इत्यत आह **'जाग्रदभिमतमपि'** इति। जाग्रत् इति अभिमतं जाग्रदभिमतम्। **कालान्तरे**–स्वप्नद्वयात्प्रबोधसमये। तदुक्तं श्रीवशिष्ठेनः—

'जाग्रच्चेत्क्षणदृष्टं स्यात्स्वप्नः कालान्तरस्थितः।
तज्जाग्रत्स्वप्नतामेति स्वप्नो जाग्रत्त्वमेव च ॥'

इति ॥ १७ ॥

अथाष्टादशस्य श्लोकस्यावतरणिकां करोति **'आसाम्'** इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे **'हेया'** इति।

---

1 तन्मध्ये एव च—K. S. S.

हेया त्रयीयं प्राणादेः प्राधान्यात्कर्तृतागुणे।
तद्धानोपचयप्रायसुखदुःखादियोगतः ॥ १८ ॥

यत्रायं प्रमाता त्यागोपादानतदिच्छाप्रयत्नादिकं परिक्लेशं पश्यति, तदेवास्य हेयतया भाति। स चास्य सुखदुःखयोगवैचित्र्येणैव कृतः, तच्चैतदवस्थात्रये संभवति; यतः कर्तृतारूपं स्वात्मविश्रान्त्यनन्यौन्मुख्यलक्षणमानन्दैकघनं यच्चिन्मयं वपुः, तद्यदा प्राणादिमत् शून्यपुर्यष्टकदेहादिभूमिषु गुणतामभ्येति, तदा तस्मिन् गुणीभूते प्राणादेः प्राधान्यं स्फुरति। तथा च तस्य चिद्रूपस्य यथायथा हानिस्तथातथा दुःखोपचयो, यथायथा किञ्चिदुन्मज्जनं तथातथा सुखोपचयः। तथाहि–बुभुक्षाकाले प्राणस्यैवोद्रेकात् दुःखं, तृप्तौ तस्य न्यग्भावादहन्तोद्रेके सुखं युक्तम्। एवं श्रान्तस्य मर्दनामर्दने देहप्राधान्याप्राधान्ये मन्तव्ये।

---

अत्र टीका :—

श्लोकं व्याख्यातुं प्रक्रियां करोति 'यत्र' इति। 'आदि' शब्देन सुखादिग्रहणम्, स च–परिक्लेशश्च, अस्य–प्रमातुः। तच्चैतत्–समनन्तरोक्तं त्यागोपादानतदिच्छादिकम्, अवस्थात्रये–जाग्रत्स्वप्नसुषुप्तरूपे। कुतः संभवतीत्यपेक्षायामाह 'यतः' इति। स्वात्मनि–चिद्रूपे स्वात्मतत्त्वे या विश्रान्तिः–अहंपरामर्शरूपो विश्रामः, तत्र यत् अनन्यौन्मुख्यम्–परापेक्षाराहित्यम्, तदेव लक्षणम्–स्वरूपं यस्य तादृशम्। तत्–चिन्मयं वपुः, प्राणादिमत्–जीवनाख्यवृत्तिमत् सत्, गुणताम्–गुणभावम्। ननु तेन किं सेत्स्यतीत्यत आह तथा च, इति। तथा च, प्राणादिप्राधान्ये सतीत्यर्थः। हानिः– गुणीभावः, प्राणादिभावे न्यग्भावनमिति यावत्। कथमित्यपेक्षाया समर्थनं करोति 'तथाहि' इति। तस्य–प्राणस्य, प्राण प्रमातुः, युक्तम्–न्याय्यम्। देहप्रमातर्यतिदिशति 'एवम्' इति। श्रमसमये देहस्य प्राधान्यम् मर्दनसमये अप्राधान्यमिति क्रमो-

---

1 स्वात्मविश्रान्त्यानन्यौन्मुख्य—K. S. S.

2 प्राणादिवृत्तिशून्य—K, S. S.

3 सुखम्। एवं—K. S. S.

यस्तु समावेशतत्त्वज्ञस्तस्य तत्काले[1] दुःखानुदय एव । यदाह

'दुर्बलोऽपि तदाक्रम्य यतः कार्ये प्रवर्तते ।
आच्छादयेद्बुभुक्षां च तथा योऽतिबुभुक्षितः ॥' ( स्प० ४८ )

इति । एवं प्राणादेः प्राधान्ये कर्तृताया गुणभावे सुखदुःखवैचित्र्यशत-योगः प्रयासभूमिः,–इति जाग्रत्स्वप्नसुषुप्ते प्राणादिप्राधान्यं कर्तृतान्य-ग्भावश्चास्ति,–इति तत् त्रयमेव हेयम् । कर्तृताप्राधान्योन्मेषात्तु तुर्य-रूपात्प्रभृति तत्स्थैर्यात्मकतुर्यातीतदशान्तमुपादेयम्, एकरसानन्दघन-

---

ज्ञेयः । ननु सर्वेषां देहादिप्राधान्यं सममेवास्ति उत न इत्यपेक्षायामाह 'यस्तु' इति । समावेशस्य–समनन्तरोक्तस्य तत्त्वं जानातीति तादृशः । तत्काले–बुभुक्षादिवशागतप्राणादिप्राधान्यकाले । अथ श्रीस्पन्दवाक्यमुदाहरति 'दुर्बलोऽपि' इति । अस्यैव श्लोकस्य तृतीयं पादमाह 'आच्छादयेत्' इति । तत्र प्रथमे पादे सहजस्वरूपनिभालनक्षमस्य समावेशतत्त्वज्ञस्य क्षीणतासमये देहप्राधान्यनिवारणम् । तृतीयेन तु बुभुक्षासमये प्राणप्राधान्यनिवारणम् सामान्यदृष्टान्तेन निर्वाहितम् । उक्तप्रक्रियावष्टम्भेन श्लोके योजनां करिष्यन् उपसंहारं करोति 'एवम्' इति । एवम्–उक्तन्यायेन, **'प्राणादेः प्राधान्यात्'** इति व्याचष्टे 'प्राणादेः प्राधान्ये' इति । कर्तृतायाः–अहन्तायाः, **'कर्तृतागुणे'** इति व्याचष्टे कर्तृताया गुणभावे' इति ।

द्वितीयमर्धं व्याचष्टे 'सुख' इति । **'इयं त्रयी हेया'** इति व्याचष्टे 'जाग्रत्' इति । तत्त्रयम्–जाग्रदादिरूपं त्रयम् । एतेन फलितं तुर्यतदतीतयो-रुपादेयत्वं कथयति 'कर्तृता' इति । कर्तृताप्राधान्योन्मेषात्–पराहन्ताप्राधान्यप्रादुर्भावात्, तत्स्थैर्यात्मिका या तुर्यातीतदशा तदन्तम् तत्स्थैर्यात्मकतुर्यातीतदशान्तम् । कुतः उपादेयत्वमित्यत आह 'एक' इति । एकरसः–महाद्वैतमयः तथा आनन्दघनः यः स्वभावः–सहजं रूपम् तस्य लाभे सति, उपादित्साजिहासयोः–वस्तुविषययोः उपादानेच्छाहानेच्छयोः यत् वैवश्यम्–विवशता तस्य प्रशमात्, तुर्यतदतीतयोर्हि सहजस्वरूपलाभेन वस्तुविषयाः हानोपादानेच्छाः न स्फुरन्त्येव ।

---

1 तत्तत्काले—K. S. S.

स्वभावलाभे उपादित्सा-जिहासा-वैवश्य-परिश्रम-प्रशमात्,--इति तात्पर्यम् ॥ १८ ॥

ननु प्राणादिप्राधान्यं हेयतायां कारणमुक्तं तच्चेज्जाग्रदादित्रय एव तर्हि तुर्यादौ तदभावात् तत्समावेशे व्युत्थानानुपपत्तिः,—इति श्लोकद्वयेन शङ्कां परिहरति ।

**प्राणापानमयः प्राणः प्रत्येकं सुप्तजाग्रतोः ।**
**तच्छेदात्मा समानाख्यः सौषुप्ते विषुवत्स्विव ॥१९॥**
**मध्योर्ध्वगाम्युदानाख्यस्तुर्यगो हुतभुङ्मयः ।**
**विज्ञानाकलमन्त्रेशो व्यानो विश्वात्मकः परः ॥२०॥**

'प्राण' इति प्राणापानरूपा[1] जीवनस्वभावा येयं चिद्रूपस्य स्थितिः, सा तावत्सामान्यपरिस्पन्दरूपा, देहप्राणादेरचेतनस्य चेतना

---

एवमत्र संक्षिप्तार्थः । पुरुषेण इयं त्रयी–जाग्रदादित्रयम्, हेया, कुतः ? प्राणादेः प्राधान्यात्, तथा 'कर्तृतागुणे' भावप्रधानो निर्देशः, पराहन्तायाः अप्रधानत्वे सति, तत् हानोपचयप्रायम्–प्राणहानोपचयरूपं यत् सुखदुःखादि तस्य योगतः–योगात् ॥ १८ ॥

अथैकोनविंशविंशयोः श्लोकयोरवतरणिकां करोति 'ननु' इति ।

अत्र टीकाः—

**तदभावात्**–प्राणापानादिप्राधान्याभावात्, **तत्समावेशे**–चित्तस्वलयरूपे प्राणादिसमावेशे, **व्युत्थानानुपपत्तिः**–व्युत्थानायोग्यता स्यात्, पुनः प्राणादिनिष्ठैव व्युत्थानमितिभावः । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे **'प्राण'** इति ।

अत्र टीकाः—

**'प्राणापानमयः प्राणः'** इति व्याचष्टे 'प्राणापान' इति । जीवन **स्वभावा**–जीवनरूपा स्थितिः भवतीति सम्बन्धः । **सा**–प्राणापानरूपा चिद्रूपस्य

---

1 प्राणनरूपा—K. S. S.

यमानतासंपादनात्मिका अहमितिस्वातन्त्र्यारोपसारा[1] सती विकल्पपरामर्शमयी[2] सैव प्राणापानादिविशेषात्मना[3] पञ्चरूपतां भजते। तत्र किञ्चिज्जहती कचित्पतन्ती च श्वासनिःश्वासरूपा[4] क्रमेण प्राणत्वमपानत्वं च विशेषं दर्शयति। तदिदं विशेषद्वयं जाग्रति तावत् स्फुटमेव देहात् प्रसृत्य विषये विश्रान्तेः, ततोऽपि देहे; स्मृत्यादौ वाभ्यन्तरे वेद्ये विश्रान्तेः प्राणापानयोः सुस्पष्टत्वात्। स्वप्नेऽपि तद्द्वयमस्त्येव; स्वपतोऽपि हि प्राणापानौ निर्गमप्रवेशात्मानौ स्फुटमेव परेण[5] लक्ष्येते। स्वयमेव च वेद्यसंवेदनात् त्यागोपादानरूपा स्थितिः

---

स्थितिः, चेतनायमानतासंपादनात्मिका–चेतनीभवनसंपादनस्वरूपा, चिदावेशेनैव हि प्राणादि चेतनीभवति। अहम् इति यः स्वातन्त्र्येण आरोपः–प्राणादौ आरोपणम् सः सारः यस्याः सा तादृशी, विकल्पपरामर्शमयी–द्वयाक्षेपित्वेन विकल्परूपाहंपरामर्शरूपा भवतीति योजना। सैव–चिद्रूपस्य स्थितिरेव, प्राणापानादिविशेषात्मना–प्राणापानोदानसमानव्यानभावेन, तत्र–पञ्चरूपमध्ये, सा चिद्रूपस्य स्थितिः किञ्चित्–हृद्देशाख्यं परिमितं वस्तु, जहती सती अत एव श्वासनिःश्वासरूपा सती क्रमेण प्राणत्वम्–प्राणभावम्, अपानत्वम्—अपानभावम् च दर्शयति, बहिर्निर्गमकारी हि प्राणः अन्तःप्रवेशकारीत्वपानः। 'प्रत्येकं सुप्तजाग्रतोः' इति व्याचष्टे 'तदिदम्' इति। तत्–पूर्वोक्तम्, विशेषद्वयम्–प्राणापानरूपं भेदद्वयम्, 'तावत्' इति, नात्र कस्यापि विप्रतिपत्तिरिति भावः। प्रसृत्य–नासिकाद्वारेण, अधोद्वारेण द्वादशान्तं तावत् निर्गत्य, विषये–बाह्यवाते। जाग्रति प्राणापानसत्तामुक्त्वा स्वप्नेऽपि कथयति 'स्वप्नेऽपि' इति। परेण–अन्येन जाग्रता, वेद्यसंवेदनात्—स्वप्नस्थवस्त्वनुभवात्, त्यागोपादानरूपा–हृद्देशत्यागोपादनस्वरूपा, स्थितिः

---

1 'अहम्' इति स्वातन्त्र्यारोपसारा—K. S. S.

Bhāskara takes this as one compound, as printed.

2 विकल्परूपपरामर्शमयी—K. S, S.

3 प्राणादिविशेषात्मना—K. S. S,

4 प्रश्वासनिःश्वासरूपा—K. S. S.

5 स्फुटमेवापरेण—K. S. S.

संवेद्यत एव, तेन प्राणना प्राणापानविशेषद्वयमयी जाग्रति, तथा स्वप्ने; सुप्तं स्वप्नः, तदेव तु यदा सुतरां पुष्टं भवति, तदा सुषुप्तः प्रमाता, तस्येदं सौषुप्तं पदम्। तत् द्विविधमपि समानाख्यरूपविशेषं[1] प्राणीयं स्वीकरोति। सवेद्ये तावत्सुषुप्ते यद्यपि प्राणापानस्पन्दो लक्ष्यते, तथापि तयोर्मध्ये या विश्रान्तिर्हृदयसदने निरिन्द्रिये प्रदेशे तदेव मुख्यतः सुषुप्तमिति। तत्र प्राणापानयोर्यश्छेदो विश्रान्तिः कंचित्कालं तदात्मा सकलरसादिवर्गस्योर्ध्वाधरतिर्यक्षु समानीकरणव्यापारात्मा, तत एव हृत्पद्मविकासदानाद्भुक्तपीतजरणकारी समानो दिनरात्रिरूपयोः प्राणापानयोः कंचित्कालं साम्याद्विच्छेदाच्च विषुवत्कालतुल्यः। विषुं व्याप्तिं समानीकरणमर्हति,—इति, 'तदर्हम् (पा० सू० ५।१।११७) इति वतिः।

---

प्राणापानयोः सत्ता, संवेद्यते–ज्ञायते एव, प्राणचारं विना वेद्यसंवेदनायोगात्। फलितमाह 'तेन' इति। प्राणना—प्राणनरूपा चिद्रूपस्य स्थितिः, 'तथा स्वप्ने' इति। तथा—तद्वत्, स्वप्ने प्राणनरूपा चिद्रूपस्य स्थितिः प्राणापानविशेषद्वयमयी भवति। द्वितीयमर्धं व्याचष्टे 'सुप्तम्' इति। तदेव–सुषुप्तमेव, तस्य—प्रमातुः, सम्बन्धि इत्यर्थः। तत्—सौषुप्तपदम्। एतेन 'सौषुप्ते' इत्यस्य व्याख्या कृता। 'अपि' शब्दः साकल्ये, समानाख्यो यः रूपविशेषस्तम् समानाख्यरूपविशेषम्, प्राणीयम्—प्राणसम्बन्धि, सवेद्ये–वेद्यसहिते 'सुखमहमस्वाप्सम्' इत्यौत्तरकालिक परामर्शानुमेये, तयोः–प्राणापानयोः, 'छेदे' इत्यवयवं व्याचष्टे 'विश्रान्तिः' इति। 'कञ्चित्कालम्' इति, यावत् न किञ्चिद्रूपता भवति तावत्कालमित्यर्थः, तदात्मा–छेदात्मा, 'रसादि' इति, आदिशब्देन अन्नादिग्रहणम्। तत एव—समानीकरणव्यापाराद्धेतोरेव, भुक्तपीतयोर्यज्जरणम्–जीर्णतापादनम् तत्करोतीति तादृशः। 'विषुवत्स्विव' इति व्याचष्टे 'दिन' इति। दिनरात्रिरूपयोः–उष्णशीतत्ववशेन दिनरात्रिरूपयोः, साम्यात्–समत्वाद्धेतोः, विच्छेदाच्च–हृदेशे विश्रान्तेश्च, विषुवत्कालतुल्यः–विषुपदाख्यकालसदृशः, तत्र हि दिनरात्र्योः समत्वमेव भवति। 'विष्लृ व्याप्तौ' इति धात्वाश्रयणेन विग्रहं करोति 'विषुम्' इति। 'व्याप्ति' पदस्यापि लक्षणामाश्रित्य पर्यायमाह 'समानीकरणम्' इति। असमा-

---

1 समानरूपं विशेषम्—K. S. S.

उपमाने वतेरेव चाव्ययत्वम् 'उद्वतो निवतः' इति प्रयोगात्; तद्धि न्यायसिद्धं न वाचनिकम्। विशेषं वा दिनरात्रितदूनाधिकत्वलक्षणं सुवति प्रेरयत्यविरतम्,—इति शतरि विषुवत्। तत्र च विषुवति विच्छिद्यमानस्य प्राणापानस्य संस्काररूपतया सद्भावः, सैव हि विच्छेदो न तु सर्वात्मना नाशोऽस्ति,—इत्युक्तमसकृत्। ततश्च हानादानयोर्बीज-

नानां समानतासंपादनं समानीकरणम्, तच्च व्यापकस्य न संभवति। नन्वत्र केन सूत्रेण वतिरित्यपेक्षायामाह 'तदर्हम्' इति। अनेन सूत्रेणेत्यर्थः। नन्वत्राव्ययत्वेन सप्तमी बहुवचनं न प्राप्नोति इत्यत आह 'उपमाने' इति। 'प्रयोगात्', एतद्वैदिकप्रयोगद्वयदर्शनाद्वेवोरिति भावः। अन्यथा अत्र षष्ठ्येकवचनान्तत्वं युक्तं न स्यादित्याशयः। उदः नेश्च[1]

'उपसर्गाच्छन्दसि धात्वर्थे'

इति वतिः, ततः षष्ठ्येकवचनम् 'ङस्'। ननु कुतः उपमानवतेरेवाव्ययत्वम् इत्यत आह 'तद्धि' इति, तत्–अव्ययत्वम्, न्यायसिद्धम्–

'तद्धितश्चासर्वविभक्तिः'

इति न्यायेन सिद्धमित्यर्थः। वाचनिकम्–पारिभाषिकम्,

'षु प्रसवैश्वर्ययोः'

इति धात्वाश्रयणेन विग्रहं करोति' 'विशेषम्' इति–वि इत्युपसर्गं व्याख्याय तं स्फुटीकृत्य दर्शयति 'दिन' इति। 'वा' इति पक्षान्तरे। दिनरात्री च तदूनाधिके च, भावप्रधानो निर्देशः, दिनरात्री तदूनाधिकत्वे च लक्षणम्–स्वरूपं यस्य तादृशम्, प्रेरयति–निवारयति। विषुवत्समये हि कालः सर्वो गलत्येव, अन्यथा आगमशास्त्रेषु तत्रावधानम् अवश्यानुष्ठेयतया न ब्रूयात्, शतरि–विपूर्वात् षुवतेः शतृप्रत्यये विहिते इदं पदं सिध्यतीत्यर्थः। ननु तत्र प्राणापानविगलनेन तुर्यतैवापतेत् इत्यत आह 'तत्र च' इति। विच्छिद्यमानस्य–हृद्देशे विश्रान्तिं भजतः, 'प्राणापानस्य' इति समाहारे द्वन्द्वः। सैव–संस्काररूपतैव, तदुक्तम्:—

'नाभावो विद्यते सतः'

इति। फलितमाह 'ततश्च' इति। हानादानयोः–प्राणापाननिष्ठयोः हृद्देश-

1 निरश्च—C.

रूपता सुषुप्ते; इयति च सर्वः प्रलयाकलान्तः पशुवर्गः ।

यदा तु सा प्राणनावृत्तिर्वामदक्षिणमार्गौ खिलीभावयन्ती मध्यरूपेणोर्ध्वेन प्रवहति, तदा तत्प्रवहणं सकलस्य भेदस्याभेदसारतादानलक्षणं विलापनमाज्यानस्येव सर्पिषो विदधती उदानवृत्तिर्विज्ञानाकलादारभ्य सदाशिवान्तम्, सा च तुर्यात्मिका दशा। मायोर्ध्वे हि विज्ञानाकलाः,–इति ततःप्रभृति भेदगलनं प्रवर्तते। विलीने तु भेदे सर्ववेद्यराशिरूपतत्त्वभूतभुवनवर्गात्मकदेहव्यापनरूपेण[1] प्राणवृत्तिर्व्यानरूपा विश्वात्मकपरमशिवोचिता तुर्यातीतरूपा। प्राण एव प्रमाता प्राणापानरूपः समानरूप उदानरूपो व्यानरूपश्च,–इति सामानाधिकरण्यम्,

---

त्यागादानयोः। नन्वत्र केषां स्थितिरित्यत आह 'इयति च' इति। 'अन्तः' इत्यनेन विज्ञानाकलानामप्यत्र लेशतः स्थितिरस्त्येवेति द्योतितम्।

द्वितीयं श्लोकं व्याचष्टे 'यदा तु' इति। प्राणनावृत्तिः–चिद्रूपस्य प्राणनाख्या स्थितिः, खिलीभावयन्ती–न्यग्भावयन्ती, उपेक्षाविषयतां नयन्तीति यावत्। मध्यरूपेण–सुषुम्णाख्यनाडीस्वरूपेण, ऊर्ध्वेन, अतिश्रेष्ठत्वात् ऊर्ध्वदेशरूपेणेत्यर्थः। विलापनम्–लयीकरणम्, आज्यानस्य–घनीभूतस्य, उदानवृत्तिः–उदानाख्यः प्राणव्यापारो भवति।. ननु तस्याः प्रचारः कुत्रेत्यपेक्षायां 'विज्ञानाकल' इति पदं व्याचष्टे लक्षणया 'विज्ञान' इति। मध्यगानां मंत्रादीनामुदानवृत्तिविषयत्वम् अयत्नसिद्धमेव ज्ञेयम्। साच–प्रोक्ता उदानवृत्तिश्च, ततः प्रभृति–विज्ञानाकलात् प्रभृति, 'आज्यानस्य सर्पिष इव' इत्यनेन 'हुतभुङ्मयः' इति पदं सूचनया व्याख्यातम्। हुतभुजैव आज्यानीभूतं सर्पिर्लीयते, मध्यनाड्याश्च अग्निनाडीत्वमागमेषु प्रसिद्धम्, वामदक्षिणनाड्योस्तु सोमसूर्यनाडीभावः। 'व्यानः' इति श्लोकखण्डं व्याचष्टे 'विलीने तु' इति। सर्ववेद्यराशिरूपः यः तत्त्वभूतभुवनवर्गात्मकः–तत्त्वादिरूपः देहः तत्र यद् व्यापनं तेन रूपेण, परमशिवोचिता–शिवशक्त्यैक्यरूपपरमशिवयोग्या, तुर्यातीतरूपा, तुर्यातीतदशारूपा भवतीत्यर्थः। इति–अतः कारणात्, सामानाधिकरण्यम् सूत्रे एकया प्रथमाविभक्त्या निर्देशः।

---

1 ·······वर्गात्मकदेहव्यापाररूपेण—K. S. S.

विज्ञानाकलश्चासौ[1] मन्त्रश्चासौ वर्गापेक्षया, ईशश्च सदाशिवेश्वररूपो योऽसौ,–इति स उदानः। एतदुक्तं भवति, यद्यपि तुर्यतदतीतयोरप्यस्ति प्राणना–अन्यथा जीवत्वस्य व्युत्थानस्य चानुपपत्तेः–तथापि भेदोपसंहारेणाभेदविश्रान्तिप्रधानत्वादनयोर्दशयोः[2] सुखदुःखादिवैचित्र्यायोगात् एकघनस्वात्मविश्रान्त्यात्मकपरमानन्दमयत्वेनोपादेयतैव। सुषुप्तादौ तु संस्काररूपत्वास्फुटवेद्योल्लासस्फुटवेद्यावभासरूपस्य भेदस्य विद्यमानत्वात् अस्ति सुखदुःखादिवैचित्र्यम्,—इति हेयतैव,–इति युक्तमुक्तं 'हेया त्रयीयम्' इत्यादि। भगवतश्च विश्वशरीरस्य प्राणापानसमानोदानव्यानरूपतैव[3] सकलगतोल्लासप्रवेशप्रलयाकलविज्ञानाकलादिवर्गशिवरूपता,[4]–इत्यप्यनेन दर्शितम्। यथोक्तम्

---

'ईशः' कुतः? सदाशिवेश्वररूपतया, इति योज्यम्। इति उदानः–विज्ञानाकलमन्त्रेशः उदानो भवतीत्यर्थः। एतेन **विज्ञानाकलमंत्रेशः'** इत्यस्य कर्मधारयमाश्रित्य विग्रहः। अभिप्रायकथनं प्रतिजानीते **'एतदुक्तं भवति'** इति। एतच्छब्दाकांक्षां पूरयति **'यद्यपि'** इति। **प्राणना**–जीवनरूपः प्राणव्यापारः। **अन्यथा**–प्राणनाभावे, **भेदोपसंहारेण**–भेदगलनात्, **'अभेदविश्रान्तिप्रधानत्वात्'** इत्यनेन गौणत्वेन देहस्वभाववशेन भेदविश्रान्तिरपि भवेदिति सूचितम्। **अनयोर्दशयोः**–तुर्यतदतीतरूपयोः। ननु सुषुप्तादौ कथमनुपादेयता अस्तीत्यत आह **'सुषुप्तादौ'**[5] इति। संस्काररूपत्वेन यः अस्फुटवेद्योल्लासः स एव स्फुटं कृत्वा वेद्यावभासः सः रूपं यस्य तादृशस्य। अभिप्रायान्तरमाह **'भगवतश्च'** इति। **भगवतः**–परमशिवस्य, 'च' समुच्चये, **विश्वशरीरस्य**–शिवादिधरण्यन्तषट्त्रिंशत्तत्त्वात्मकजगच्छरीरस्य, **प्राणापानसमानोदानव्यानरूपतैव**–**सकलप्रलयाकलविज्ञानाकलादिवर्गशिवरूपता** भवति, 'आदि'शब्देन

---

1 सामानाधिकरण्यात् विज्ञानाकलश्चासौ मन्त्रश्चासौ—K. S S.

2 अभेदविश्रान्तिप्राधान्यात्—K. S. S.

3 प्राणापानसमानोदानव्यानरूपतयैव—K. S. S.

4 विज्ञानाकलादिवर्गसदाशिवरूपता—K. S. S.

5 आसुषुप्तादौ—C.

'षट्त्रिंशदात्मकं विश्वं शम्भोः प्राणादिशक्तयः।'

इति ॥ २० ॥ आदितः १७१ ॥

---

मन्त्रादिग्रहणम्। इत्यपि—एतदपि, अनेन—सूत्रेण, दर्शितम्—सूचनया प्रकटीकृतम्। न केवलमवस्थापञ्चकस्य हेयोपादेयतामात्रं अपि तु प्राणापानादेः सकलादिरूपताऽपि दर्शिता इति 'अपि' शब्दाभिप्रायः। तत्र प्राणापानरूपतायाः सकलरूपता, समानरूपतायाः प्रलयाकलता, उदानरूपतायाः विज्ञानाकलादिवर्गरूपता, विज्ञानाकलमंत्रमंत्रेश्वरमंत्रमहेश्वररूपता, व्यानरूपतायाः शिवरूपतेति विभागः। भेददर्शने तु मुखनासिकाभ्यां निष्क्रमणात् प्राणः, रसस्याधोनयनात् अपानः, तस्यैव समीकरणात् समानः, तस्यैवोर्ध्वनयनात् उदानः, तस्यैव गर्भनाडीवितननात् व्यानः इत्येवं शरीरमात्रगतत्वेनैव प्राणादिपञ्चकनिर्णयः इति। आगमं संवादयति' यथोक्तम्' इति। 'इति' शब्दः आगमवाक्यसमाप्तौ आह्निकव्याख्यासमाप्तौ च। 'शिव' पदं मङ्गलवाचकम् परतत्त्वसूचनपरञ्च।

एवमत्र श्लोकद्वये संक्षेपः। सुप्तजाग्रतोः प्राणः जीवनम्, प्रत्येकं प्राणापानमयः, स्फुटं दर्शनात्, सः प्राणः सौषुप्ते—सुषुप्त्यवस्थायाम्, तच्छेदात्मा—प्राणापानच्छेदरूपः समानाख्यो भवति, तत्र हि किञ्चित्कालमपानो हृद्देश एव लीनो भवति, प्राणस्तु नोत्तिष्ठति, तदुक्तम्:—

'यदा प्राणः पुरीततिं प्रविशति तदा सुषुप्तिः'

इति। सौषुप्ते केष्विव? विषुवत्स्विव-विषुपदेष्विव, तत्रापि हि दिनरात्र्योः कश्चित्कालं समतैव भवति इति तत् उपमानत्वेन गृहीतम्। उदानाख्यः प्राणः तुर्यगः भवति। कीदृशः? मध्यैव—मध्यनाडी एव ऊर्ध्वम्—ऊर्ध्वदेशः तत्र गच्छतीति तादृशः, तथा हुतभुङ्मयः—अग्निरूपः, अग्निनाडीगतत्वात्, तथा सः उदानः विज्ञानाकलमन्त्रेशः भवति। व्यानः—व्यानाख्यः प्राणः, परः परशिवरूपो भवति, अत एव विश्वात्मकः—सर्वस्वरूपः, अत एव च तदतीतगत्वमस्य अर्थात् ज्ञेयम्। इति शिवम्।

इति श्रीमदाचार्योत्पलदेवविरचितायामीश्वरप्रत्यभिज्ञायां श्रीमदाचार्याभिनवगुप्तविरचितविमर्शिन्याख्यटीकोपेतायामागमाधिकारे प्रमातृतत्त्वनिरूपणाख्यं द्वितीयमाह्निकम् ॥ २ ॥

संपूर्णश्चायमागमाधिकारस्तृतीयः ॥

---

इति श्रीमत्काश्मीरमण्डलान्तर्वर्त्याराध्यपादश्रीवैडूर्यकण्ठात्मजश्रीमदवतारककण्ठपुत्रश्रीमद्भास्करकण्ठविरचितायां श्रीप्रत्यभिज्ञाविमर्शिनीटीकायां श्रीभास्कर्याख्यायामागमाधिकारे द्वितीयमाह्निकं समाप्तम् ।

समाप्तश्चायं तृतीयो विमर्शः । इति शिवम् ।

तत्त्वानां प्रविवेचनं कृतमिदं यत्रास्ति सम्यक्तया
व्याख्यातो ननु भास्करेण स इहाध्यायस्तृतीयः स्फुटम् ।
सद्युक्त्यागमनामधेयसहितो बुद्ध्याधिकारो मया
श्रीमत्सद्गुरुसंप्रदायवशतः शास्त्रानुसारात्तथा ॥
नाभिमानो मनः कार्यो शिवः कर्तात्र यत्स्थितः ।
तदैक्येनाभिमानस्ते यद्यस्त्यस्तु स शोभनः ॥
शिवः कर्ता शिवो द्रष्टा शिवः पाठक एव च ।
व्याख्याता च शिवः प्रोक्तः शिवार्पणमिति स्फुटम् ॥

---

तत्त्वसङ्ग्रहाधिकारे

## प्रथममाह्निकम्

---

विमर्शिनी

अनन्तमानमेयादिवैचित्र्याभेदशालिनम्।
आत्मानं यः प्रथयते भक्तानां तं स्तुमः शिवम्॥

---

## भास्करी

अनन्तमेयादिविचित्रतायामेवैकतां यो महतीं बिभर्ति।
पूर्णातिपूर्णो भगवान् न किञ्चिद्रूपः स आश्चर्यमयः शिवोऽव्यात्॥

अथैकाह्निकरूपस्य[1] चतुर्थविमर्शस्य आगमार्थसङ्ग्रहाधिकाराख्यस्य[2] निर्विघ्न-

---

1. Although the K. S. S. divides the last 18 verses into two Ahnikas, the first 15 constituting the first and the last 3 the second, yet, according to both Abhinava and Bhāskara, all of them constitute one Ahnika, as the following passage in Abhinava's introduction to the Tattvasaṅgrahādhikāra shows:—

"तदेव सङ्क्षेपेण शिष्यबुद्धिषु निवेशयितुमागमार्थसङ्ग्रहं श्लोकाष्टादशकेन दर्शयति"

This conclusion is further supported by the fact that there is no separate introductory verse to the last three verses, which have been made into a second Ahnika by the editor of the K. S. S.

2. The usual name of this अधिकार is तत्त्वसङ्ग्रहाधिकार, as Bhāskara himself calls it in the colophon at the end; but as 'आगमार्थसङ्ग्रह' means the same thing and the text is quite clear, we are not changing it.

एवं स्वसंवेदनोपपत्त्यागमसिद्धं महेश्वररूपमात्मस्वरूपं यदधिकारत्रयेण वितत्य निर्णीतं तदेव संक्षेपेण शिष्यबुद्धिषु निवेशयितुमागमार्थसंग्रहं श्लोकाष्टादशकेन दर्शयति 'स्वात्मैव सर्वजन्तूनाम्' इत्यादिना 'उत्पलेनोपपादिता' इत्यन्तेनैकेनाह्निकेन। तत्र श्लोकेन पारमार्थिकं रूपमुक्त्वा श्लोकनवकेन बन्धस्वरूपं प्रमातृप्रमेयतत्त्वदर्शनदिशा, सप्तकेन प्रत्यभिज्ञात्मकं मोक्षतत्त्वं, श्लोकेनोपसंहारं दर्शयति,–इति तात्पर्यम्। ग्रन्थार्थस्तु निरूप्यते।

**स्वात्मैव सर्वजन्तूनामेक एव महेश्वरः।**
**विश्वरूपोऽहमिदमित्यखण्डामर्शबृंहितः॥ १॥**

---

समाप्तये प्रचयगमनाय च स्वान्तरनुष्ठितमपि बहिः शिष्यशिक्षार्थं परतत्त्वानुस्मरणरूपं मङ्गलं सकलाधिकारतात्पर्यसूचकश्लोकेनोपनिबध्नाति 'अनन्त' इति।

वयं तं शिवं स्तुमः। तं कम्? यः शिवः भक्तानाम्–अतितीव्रशक्तिपाताघ्रातहृदयत्वेन समावेशरूपभजनशालिनाम्, अनन्तमानमेयादीनां यद् वैचित्र्यम्–विचित्रता, नानात्वेन स्फूर्तिरिति यावत्, तदेवाभेदः–स्वान्तःकृतद्वैताद्वैतरूपातिपूर्णतास्वभावं महाद्वैतम्, तेन शालते इति तच्छीलम्। आत्मानम्–पूर्णप्रकाशरूपम् स्वरूपम्। प्रथयते–स्वप्रकाशत्वेन स्वयं प्रथनशीलं सत् तत्समर्थाचरणरूपप्रयोजकव्यापारेण तत्र प्रेरयति। राहोः शिर इतिवत् प्रयोगः। न हि स्वस्मात् कोऽपि भिन्नः, तद्द्वारेण तद्व्यतिरेको वा। अद्वैतप्राप्तप्रतिष्ठा भक्ता हि द्वैतावस्थायां महाद्वैतं पश्यन्ति। तदुक्तम्:—

भुक्त्वा भोगान् भवभ्रान्तिं हित्वा लप्स्ये परं पदम्।
इत्याशंसेह शोभेत शम्भोर्भक्तिमतः परम्॥

एवं मङ्गले कृते एकाह्निकरूपाधिकारतात्पर्यं समस्तव्यस्तत्वाभ्यां कथयति 'एवम्' इति।

अत्र टीकाः—

स्वसंवेदनोपपत्त्या–स्वानुभवयुक्त्या, निवेशयितुम्–संक्रामयितुम्, अथावतरणिकां विना प्रथमश्लोकमुपन्यस्य व्याचष्टे 'स्वात्मैव' इति।

इह जडास्तावच्चेतननिमग्ना एव भान्ति; इदमिति हि जडपरामर्शोऽहमिति संवित्परामर्श एव विश्राम्यति। ततश्च जडा निरात्मान इति जन्तव एव जीवाः सात्मानः, तेषां च महेश्वर एव स्वात्मा स एव महेश्वरो न त्वन्यः कश्चित्। यतः संवित्स्वभावोऽसौ, संविदश्च न देशेन न कालेन न स्वरूपेण कोऽपि भेदः, कामं देहप्राणादयो भिद्यन्तां, ते तु जडपक्ष्याश्चेतननिमग्ना एव,-इत्येक एव चिदात्मा स्वातन्त्र्येण स्वात्मनि यतो वैश्वरूप्यं भासयति, ततो महेश्वरोऽन्तर्नीतामिदन्तां

---

अत्र टीकाः—

**'जन्तूनाम्'** इति व्याचष्टे युक्तिपूर्वकम् 'इह' इति। इह-भासमाने जगति, चेतननिमग्नाः-ग्रहणद्वारेण चेतने विश्रान्ताः। कुतो भान्तीत्यपेक्षायामाह 'इदम्' इति। 'इदम्' इति-'इदम्' इत्येवम्, जडपरामर्शः-चेतनाश्रयः जडविषयः परामर्शः। 'अहम्' इति संवित्परामर्शे-'अहम्' इत्येवंरूपे संविदाश्रये तद्विषये च परामर्शे। फलितमाह 'ततश्च' इति। निरात्मानः-निरात्मकल्पाः, इति अतः कारणात्, षष्ठीयोजनां करोति 'तेषाम्' इति। तेषाञ्च-जन्तुपदवाच्यानां जीवानाञ्च, **'स्वात्मैव महेश्वरः महेश्वर एव स्वात्मा'** इति योजनाद्वयेन अत्यन्तभेदाभावः सूचितः। एवकारद्वयव्यावर्त्यमाह 'नत्वन्यः' इति। कुतः इत्यपेक्षायां स्वयमेव हेतुयोजनां करोति **'एक'** इति पदं व्याचष्टे च 'यतः' इति। असौ-स्वात्मरूपो महेश्वरः। ननु संवित्स्वभावोऽसौ ततः किमित्यत आह 'संविदश्च' इति। 'कामम्' इति निश्चये। जडपक्षे भवाः जडपक्ष्याः, **'विश्वरूपः'** इति विशेषणं हेतुत्वेन योजयति 'स्वातन्त्र्येण' इति। वैश्वरूप्यम्-विश्वरूपताम्। **'अहमिदम्'** इति पदं व्याख्यास्यन् फलितमाह 'ततः' इति। अन्तर्नीताम्-स्वात्मनि लयीकृताम्,[1]

---

1. वैश्वरूप्यम्-विश्वरूपताम्। अन्तर्नीताम्-स्वात्मनि लयीकृताम्। 'अहमिदम्' इति पदं व्याख्यास्यन् फलितमाह 'ततः' इति। We have changed the position of 'अन्तर्नीताम्-स्वात्मनि लयीकृताम्' as printed; firstly because it cannot be easily connected with 'वैश्वरूप्यम्', and secondly because in the K. S. S. it is actually found after 'ततः' as qualifying 'इदन्ताम्'।

कृत्वा परानुन्मुखस्वात्मविश्रान्तिरूपाहंविमर्शपरिपूर्णः, अत एव सर्वज्ञसर्वकर्तृत्वे[1] नास्य यत्नोपपाद्ये। विचित्रबुद्धिकर्मेन्द्रियविषये हि यथा ज्ञातृत्वकर्तृत्वे एकस्यैवात्मनस्तथेन्द्रियस्थानीयरुद्रक्षेत्रज्ञसहस्रविषयस्य भावराशेर्यज्ज्ञानं करणं च तदेकत्र चिदात्मनि,-इति ॥ १ ॥

ननु यद्येक एवायं महेश्वररूप आत्मा कस्तर्हि बन्धो यदवमोचनायायमुद्यमः ? इत्याशङ्कयाह

**तत्र स्वसृष्टेदंभागे बुद्ध्यादि ग्राहकात्मना ।**
**अहंकारपरामर्शपदं नीतमनेन तत् ॥ २ ॥**

'तत्रैवं स्वात्मनि महेश्वरे स्थिते तस्मिन्नेव प्रकाशरूपे स्वात्मदर्पणे तेनैव परमेश्वरेण स्वातन्त्र्यात् तावत्सृष्टः संकोचपुरःसर इदंभागः,

---

अत एव-अहंविमर्शपरिपूर्णत्वादेव, सर्वज्ञसर्वकर्तृत्वे-सर्वज्ञत्वं सर्वकर्तृत्वञ्च, अस्य-स्वात्ममहेश्वरस्य, कुतो न यत्नोपपाद्ये इत्यत आह 'विचित्र' इति। विचित्रबुद्धिकर्मेन्द्रियविषये-साध्यत्वेन विचित्रबुद्धिकर्मेन्द्रियविषयभूते, आत्मनः-देहावच्छिन्नात्मतत्त्वस्य। दृष्टान्तमुक्त्वा दार्ष्टान्तिकं कथयति 'तथा' इति। रुद्राः-मायोर्ध्ववर्तिनः प्रमातारः। 'इति' शब्दः श्लोकव्याख्यासमाप्तौ ॥१॥

अथ द्वितीयश्लोकस्यावतरणिकां करोति 'ननु' इति। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'तत्र' इति।

अत्र टीकाः—

'तत्र' इति पदं सत्सप्तमीमाश्रित्य व्याचष्टे 'एवम्' इति। 'तत्र' इति शब्दस्य तन्त्रेण आधारसप्तमीमाश्रित्य व्याख्यान्तरं करोति 'तस्मिन्नेव' इति। 'अनेन' इति व्याचष्टे 'तेन' इति। तेन-स्वात्मरूपेण, 'स्वसृष्टेदंभागे' इति व्याचष्टे 'स्वातन्त्र्यात्' इति। संकोचपुरःसरः-संकोचपूर्वकः। 'बुद्ध्यादि'

---

1. सर्वज्ञत्वसर्वकर्तृत्वे—K. S. S.

तन्मध्ये यदेतद्बुद्धिप्राणदेहरूपमिदन्तया वेद्यं तद्बुद्ध्यादिभिन्नस्य[1] वेद्यस्य ग्राहकतया समुचितम् इदंभावाभिभवाप्रभविष्णुत्वात् कृतकेनापूर्णेनाहंभावेन परामर्शेन भासमानं चकास्ति 'अहं देवदत्तोऽहं चैत्र' इति ॥२॥

नन्वेवमप्यस्तु, तथापि कस्य बन्धः ? ईश्वरव्यतिरिक्तो हि कोऽन्योऽस्ति ? तदेतत् परिहर्तुमाह—

---

इति व्याचष्टे 'तन्मध्ये' इति । तन्मध्ये-इदंभागमध्ये, 'आदि' शब्दगृहीतं वस्तु कथयति 'प्राण' इति । इदन्तया वेद्यम्-चिद्रूपं स्वं प्रति वेद्यतया स्थितम् । तद्बुद्ध्यादिभिन्नस्य-तस्माद् बुद्ध्यादेः भिन्नस्य, वेद्यस्य-नीलसुखादेः, 'ग्राहकात्मना' इति व्याचष्टे 'ग्राहकतया'[2] इति । ग्राहकतया समुचितम्-अहंभावपरामर्शयोग्यं सत्, इदंभावस्य यः अभिभवः तत्र अप्रभविष्णुत्वात्-असमर्थत्वेन, कृतकेन—असहजेन सता, अहंभावेन परामर्शेन-अहन्तया परामर्शेन, भासमानं चकास्ति । कथं चकास्तीत्यपेक्षायामाह 'अहं देवदत्तः' इति ।

एवमत्र श्लोके स्फुटा योजना । तत्र सति स्वात्मनि महेश्वरे सति अनेनस्वात्मना महेश्वरेण, काकाक्षिन्यायेन पुनः 'तत्र' इति योजनीयम् । तत्र-प्रकाशरूपे स्वात्मनि भित्तौ, स्वसृष्टेदंभागे-स्वयमुत्पादिते इदंभागमध्ये, लक्षणया स्वयंसृष्टदंभावविषयवेद्यग्राममध्ये, तत् बुद्ध्यादि, स्वं प्रति वेद्यत्वेऽपि बाह्यं प्रति वेदकत्वेन प्रसिद्धं बुद्ध्यादिकम्, ग्राहकात्मना-नीलसुखादिकं प्रति ग्राहकतया, अहंकारपरामर्शपदम्-अहंपरामर्शविषयतास्थानम्, नीतम्-स्वातन्त्र्येण प्रापितम् । अत एव एकेश्वरवादेऽपि बद्धस्य ग्राहकस्य बुद्ध्यादेः मोचनाय उद्यमो युक्त एवेति भावः ॥ २ ॥

अथ तृतीयस्य श्लोकस्यावतरणिकां करोति 'नन्वेवम्' इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'सस्वरूप' इति ।

---

1. तद्भिन्नस्य—K. S. S.
2. ग्राहकत्वेन—C.

स [1] स्वरूपापरिज्ञानमयोऽनेकः पुमान् मतः ।
तत्र सृष्टौ क्रियानन्दौ भोगो दुःखसुखात्मकः ॥ ३ ॥

सत्यम् ; परमार्थतो न कश्चिद् बन्धः केवलं स्वस्मादनुत्तरात् स्वातन्त्र्यात् यदा स्वात्मानं संकुचितमवभासयति स एव, तदा स्वस्य पूर्णस्य रूपस्य यदपरिज्ञानं भासमानत्वेऽप्यपरामर्शरूपं तदेव कारणत्वेन प्रकृतं यस्य स पूर्णत्वाख्यातिमात्रतत्त्वः 'पुरुषः' इत्युच्यते । अत एवानेकः तत्तद्देहप्राणबुद्धिविशेषेण संकोचग्रहणात् । स च पुमान् भोक्ता सम्बन्धनं[2] भोगलक्षणमनुभवति । भोगश्च नाम तस्य यौ कल्पितौ क्रियानन्दौ, कल्पिता क्रिया दुःखम् , रजो हि प्रकाशाप्रकाशचाञ्चल्यरूपं दुःखमुच्यते; प्रकाशरूपं च सत्त्वं सुखम् ; तमस्त्वप्रकाशरूपो मध्ये विश्रमः प्रलयस्थानीयः ॥ ३ ॥

---

अत्र टीकाः—

**'स्वरूपापरिज्ञान'** इति व्याचष्टे **'सत्यम्'** इति । अवतरणिकायां शंकितं वस्तु अपेक्ष्यैव अङ्गीकारवाचकं 'सत्यम्' इति पदं प्रयुक्तम् । स एव–स्वात्मरूपः परमेश्वर एव, अपरामर्शरूपम् , न तु ज्ञानाभावरूपम् , तस्यासंभवोपहतत्वादिति भावः । मयटो व्याख्यां करोति **'तदेव'** इति, प्रकृतम्–प्राचुर्येण प्रस्तुतम् । विग्रहं कृत्वा अभिधेयं कथयति **'पूर्णत्व'** इति । **'पुमान्'** इति व्याचष्टे **'पुरुषः'** इति । कथमनेक इत्यपेक्षायां स्वयमेव हेतुयोजनां करोति **'तत्तत्'** इति । **'विशेषेण'** विशेषभावेन इत्यर्थः । नभसः तादृक्संकोचाभावेन अग्रहणम् । पूर्वार्धं व्याख्याय उत्तरार्धं व्याख्यातुं सङ्गतिं करोति **'स च'** इति । **संबन्धनम्**–विषयैः सह संबन्धनम् । सङ्गतिं कृत्वा उत्तरार्धं व्याचष्टे **'भोगश्च'** इति । **'दुःखसुखात्मकः'** इति व्याचष्टे **'दुःखम्'** इति । ननु कथं कृतिवाचिन्याः क्रियायाः दुःखरूपत्वमित्यत आह **'रजः'** इति । रजः–क्रियारूपप्रवृत्तिवाची रजोगुणः, **सत्त्वम्**—सत्त्वाख्यो गुणः, एतत्प्रसङ्गेन तमोगुणस्यापि निर्णयं करोति **'तमः'** इति **प्रलयस्थानीयः**—प्रलयसदृशः, न तु साक्षात्प्रलयरूपः, तत्र सर्वगुणध्वंसनात् ॥ ३ ॥

---

1. स्वस्वरूपापरिज्ञानमय—K. S. S.
2. सम्बन्धम्—K. S. S.

ननु सृष्टावित्यनेन किं व्यवच्छेद्यं किं च संग्राह्यम्? इत्याह—

**स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या।**
**मायातृतीये ते एव पशोः सत्त्वं रजस्तमः ॥ ४ ॥**

विश्वरूपस्य भगवतः स्वरूपभूत एव विश्वत्र यः प्रकाशो यश्च विमर्शः, ते तावज्ज्ञानक्रिये स्वरूपद्वयपरामर्शापरित्यागेनैव[1] तु यद्विभिन्नतयापि[2] विमर्शनं स्वरूपपरामर्श एव विश्रान्तम् 'अहमिदमितिसदाशिवेश्वरपरमार्थं सा भगवतो मायाशक्तिः, ता एतास्तिस्रः शक्तयो भगवति नैस-

अत्र टीकाः—

अथ चतुर्थश्लोकस्यावतरणिकां करोति 'ननु' इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे '**स्वाङ्ग**' इति।

अत्र टीकाः—

'पत्युः' इति व्याचष्टे 'विश्वरूपस्य' इति। '**स्वाङ्गरूपेषु भावेषु**' इति व्याचष्ट '**स्वरूप**' इति। विश्वत्र—सर्वत्र भावजाते। '**ज्ञानम्**' इति व्याचष्टे 'प्रकाशः' इति। '**क्रिया**' इति व्याचष्टे 'विमर्शः' इति। ते—प्रकाशविमर्शौ। क्रियाशब्दापेक्षं स्त्रीत्वम्। '**माया**' इति व्याचष्टे '**स्वरूपद्वय**' इति। स्वरूपद्वयस्य—प्रकाशविमर्शरूपनिजरूपद्वयस्य, यः परामर्शः तस्यापरित्यागेनैव, विभिन्नतयापि विमर्शनम्—स्वतो भेदेन परामर्शनम्, 'अपि' शब्दात् अभिन्नतया परामर्शनञ्च ग्राह्यम्। कीदृशं विमर्शनम्? 'स्वरूप' इति, अत एवेति शेषः। अत एव 'अहम् इदम्' इति सदाशिवेश्वरौ परमार्थः-सहजं स्वरूपं यस्य तादृशम्, भगवतः—पत्युः, न तु पशोरितिं भावः। एतासां तिसृणां 'सृष्ट' पदव्यवच्छेद्यत्वं दर्शयति 'एताः' इति।

1. स्वरूपपरामर्श—K. S. S.
2. यद्भिन्नतयापि—K. S. S.

र्गिकयोऽसृष्टाः[1]। स्वरूपापरिज्ञाने तु भिन्नेषु भावेषु ज्ञानं क्रिया, शुद्धमेव भिन्नत्वं प्रकाशविमर्शशून्यम्,—इति पशोः प्रकाशः प्रकाशाप्रकाशावप्रकाशश्च इति क्रमेण सुखदुःखमोहलक्षणानि प्रकाशक्रियानियमशीलानि[2] सत्त्वरजस्तमांसि ॥ ४ ॥

ननु चैवं सति यथा परमेश्वरस्य ज्ञानक्रियामाया अव्यतिरेकिण्यः शक्तयः,—इत्युच्यन्ते, तद्वत् पशोः सत्त्वरजस्तमांसि प्रसज्यन्ते, व्यतिरिक्तानि च तानि पुंस्त्वाद् गण्यन्ते, तदेतत् कथम्? इति संशयं शमयति

**भेदस्थितेः शक्तिमतः शक्तित्वं नापदिश्यते ।**
**एषां गुणानां करणकार्यत्वपरिणामिनाम् ॥ ५ ॥**

---

'असृष्टाः' इति, स्वरूपत्वेन स्थितत्वादिति भावः । 'ते एव' इत्यादि श्लोकखण्डं व्याचष्टे 'स्वरूप' इति । स्वरूपापरिज्ञाने—मायाकृते पारमार्थिकस्वरूपापरिज्ञाने सति । 'भिन्नत्वम्' इत्यनेन लक्षणया मायाग्रहणम् । 'शुद्धमेव' इत्यस्यार्थं स्फुटीकरोति 'प्रकाश' इति । पत्युर्माया हि प्रकाशविमर्शमयी एव, इयन्तु तद्रहितेत्यर्थः । 'सत्वं रजस्तमः' इति योजनापूर्वं व्याचष्टे 'क्रमेण' इति । तत्र सत्वं सुखलक्षणम् प्रकाशशीलम् । रजः दुःखलक्षणं क्रियाशीलम् । तमः मोहलक्षणं नियमशीलम् इति क्रमो ज्ञेयः । नियमः मौढ्येनाप्रवृत्तिः ॥४॥

अथ पञ्चमस्य श्लोकस्यावतरणिकां करोति 'ननु चैवम्' इति ।

अत्र टीका:—

तद्वत्प्रसज्यन्ते, शक्तित्वेन प्रसज्यन्ते इत्यर्थः । 'गण्यन्ते' इति । प्रकृत्यादेः पुरुषाद् भेदेन गणनादिति भावः । सत्त्वरजस्तमसां हि साम्यावस्था प्रकृतिः तत्कार्याणि च महदादीनि सत्त्वादिरूपाण्येव । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'भेद' इति ।

---

1. दृष्टाः—K. S. S.
2. नियमनशीलानि—K. S. S.

सत्यम् एवं स्यात् यदि भेदग्रहो न भवेत्, भेदस्त्वयं[1] विचार्यते। तत्र च संकुचितचिन्मात्रस्वभावः[2] पुरुषो, नास्य नैसर्गिकं भावविषयं प्रकाशनादि रूपं सर्वदा तत्प्रसङ्गात्, अपि त्वन्यसंबन्धकृतम्। ततश्च तस्मात् पशोः शक्तिमत्त्वेन शङ्क्यमानाद् भेदेन यत एतानि सत्त्वादीनि, ततः शक्तयो व्यतिरेकमुक्ताः—इति नोच्यन्ते किं तूपकरणत्वात्

अत्र टीकाः—

अवतरणिकायां शङ्कितस्य वस्तुनः परिहारमाह 'यदि' इति। भेदग्रहः-गुणानां पुरुषाद् भेदेन ग्रहणम्, श्लोकं भङ्ग्या व्याख्यास्यन् भेदविचारणमेव प्रतिजानीते 'भेदस्त्वयम्' इति। भेदविचारणमेव करोति 'तत्र च' इति। सङ्कुचितम्–स्वातन्त्र्यवशेन सङ्कोचमागतम्, यच्चिन्मात्रम् तत्स्वभावः-स्वरूपं यस्य तादृशः, पुरुषः–जीवाख्यः अण्डः। अस्य–पुरुषस्य, प्रकाशनादि–प्रकाशप्रकाशौ, नैसर्गिकं रूपम्, सहजं स्वरूपमित्यर्थः। कुत इत्यपेक्षायामाह 'सर्वदा' इति। तत्प्रसङ्गात्-भावविषयप्रकाशनादिप्रसङ्गात्, नहि क्षणमपि स्वभावत्यागो युक्त इति भावः। पुनः कथं तस्य भावविषयं प्रकाशनादि भवतीत्यत आह 'अपि तु' इति। अन्यसंबन्धकृतम्–व्यतिरिक्तकरणसंबन्धकृतम्। श्लोकयोजनां कर्तुं फलितमाह 'ततश्च' इति। 'भेदेन' इति, भेदेन भवन्तीत्यर्थः। ततः–ततः कारणात्, सत्त्वादीनि शक्तय इति नोच्यन्ते इति संबन्धः। शक्तयः कीदृश्यः? व्यतिरेकमुक्ताः, शक्तिमतोऽव्यतिरेकिण्य इत्यर्थः। तदुक्तम्:—

'तादात्म्यमनयोर्नित्यं वह्निदाहकयोरिव'

इति एतेन एषां गुणानां शक्तिमतो भेदस्थितेः शक्तित्वं नापदिश्यते इति पदसमूहः कृतव्याख्यः। ननु 'गुणानाम्' इत्युक्तं तद्गुणत्वं कथमेषामित्यपेक्षायामाह 'किन्तु' इति। उपकरणत्वात्–परमेश्वरस्य बाह्योत्पादं प्रति उपकरणभावात्, तेन आयातादप्रधानत्वादिति भावः। तदुक्तम्:—

शक्त्यण्डमृत्पिण्डमुपाददानो मायाण्डचक्रभ्रमणक्रमेण।
मूलाण्डदण्डेन·········ब्रह्माण्डभाण्डं भगवान्कुलालः॥

1. भेदव्यवहारस्त्वयम्—K. S. S.
2. संकुचितस्वभावः—K. S. S.

'गुणा' इत्युच्यन्ते । ननु पुरुषात् किमिति ते भेदेनोच्यन्ते ?, उच्यते, इह[1] सुखदुःखमोहपरिणामरूपमेतत्करणत्रयोदशकं कार्यदशकं च सुखादिस्वभावत्वेनानुभूयते,–इति सुखदुःखमोहाः करणकार्यवर्गतादात्म्यवृत्तयो यदि पुरुषस्यापि तादात्म्यं भजेरन् तर्हि पुरुषः कार्यकरणपर्यन्तसृष्टिमयः संपन्नः, परिणामश्च दूषितः–इति स्वातन्त्र्यशक्त्या पुरुषो विश्वरूपः,–इत्यायातम् । तथा च न कश्चित् पुरुष ईश्वर एव, तस्मात् अप्रत्यभिज्ञानमयपुरुषस्वरूपविचारे सत्त्वादयो भिन्ना एव,—इति स्थितम् ॥ ५ ॥

---

इति । अत्र हि 'मूल' शब्देन सत्त्वादिसाम्यावस्थारूपायाः प्रकृतेर्ग्रहणम्, दण्डस्य चोपकरणत्वं प्रसिद्धमेवेति न विरोधः । 'करण' इत्यवशिष्टपदं व्याख्यातुमवतरणिकां करोति 'ननु' इति । ते—गुणाः । अत्र परिहारं वक्तुं प्रतिजानीते 'उच्यते' इति । प्रतिज्ञां सफलीकर्तुमवतरणिकाविषयीकृतं पदं व्याचष्टे 'इह' इति । एतत्—पुरः स्थितम्, कार्यदशकम्, सूक्ष्मभूतरूपं शब्दादिपञ्चकम् स्थूलभूतरूपमाकाशादिपञ्चकञ्चेत्यर्थः । 'सुखादि' इति । 'आदि' शब्देन दुःखमोहयोर्ग्रहणम् । सुखदुःखमोहाः सुखादिरूपं गुणत्रयम्, करणकार्यवर्गेण सह तादात्म्येन वृत्तिर्येषां ते तादृशाः । परिणामश्च—गुणत्रयस्य बुद्ध्यादिभावेन परिणामः, दूषितः इति, पुरुषस्यैव तद्भावाङ्गीकारादिति भावः । इति—अतः कारणात् । नन्वेतदायातु किं तत इत्यत आह 'तथा च' इति, तथा च सति, कश्चित्—कोऽपि जीवः पुरुषः न स्यात् अपि तु सर्वः ईश्वर एव स्यात् विश्वरूपत्वात् इति भावः । फलितमाह 'तस्मात्' इति । अप्रत्यभिज्ञानमयः—परमेश्वरेण सह 'सोऽहम्' इति प्रत्यभिज्ञामप्राप्तः यः पुरुषः—अण्डः, तस्य यत्स्वरूपं तस्य विचारे, सत्त्वादयः भिन्नाः एव भवन्ति, अन्यथा तस्येश्वरत्वापातात् । इति—एवम्, स्थितम्—स्थितियुक्तं भवति ॥ ५ ॥

---

1. उच्यते, सुखदुःखमोहपरिणामरूपम्—K. S. S.

ननु ज्ञानादीनि कथं सत्त्वादिरूपाणि पशुं प्रति ? इत्याह

सत्तानन्दः क्रिया पत्युस्तदभावोऽपि सा पशोः ।
द्वयात्मा तद्रजो दुःखं श्लेषि सत्त्वतमोमयम् ॥ ६ ॥

इह तावत् पतिर्विश्वस्यावभासवैचित्र्य[1]लक्षणेन सृष्ट्यादिना पालयिता स्वप्रकाशस्वभावः, तस्य विश्वपतेर्या सत्ता भवनकर्तृता स्फुरत्तारूपा पूर्वं व्याख्याता 'सा स्फुरत्ता महासत्ता' ( ई० प्र० १।५।१४ ) इत्यत्र, सैव प्रकाशस्य विमर्शाव्यतिरेकात् विमर्शात्मकचमत्काररूपा सती क्रियाशक्तिरुच्यते, पराङ्मुख्यत्यागेन स्वात्मविश्रान्तिरूपत्वाच्च सैव आनन्दः; तदेवं भगवतश्चिदात्मतयैवेयद्रूपता । पशोस्तु सत्ता तद-

अत्र टीकाः—

अथ षष्ठश्लोकस्यावतरणिकां करोति 'ननु' इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'सत्ता' इति ।

अत्र टीकाः—

'पत्युः' इति व्याचष्टे 'इह' इति । अवभासस्य यद्वैचित्र्यं तदेव लक्षणं यस्य तादृशेन, अवभासनमात्रद्वारेणेति यावत् । सृष्ट्यादिना—सृष्टिस्थितिध्वंसपिधानानुग्रहपञ्चकेन, पालयिता—रक्षिता

'पालनात्पतिरुच्यते'

इति न्यायादिति भावः । षष्ठीयोजनां करोति 'तस्य' इति । 'सत्ता' इति पदं व्याचष्टे 'भवन' इति । भवनकर्तृता-'भू' क्रियाकर्तृत्वम्, अस्तीति सत् तस्य भावः सत्ता इति न्यायात् इति भावः । कुत्र व्याख्यातः इत्यत आह 'सा स्फुरत्ता' इति । इति, अस्मिन् श्लोके इत्यर्थः । क्रिया इत्यस्य योजनां करोति 'सैव' इति। सैव—सत्तैव, विमर्शात्मकः—अहंविमर्शरूपः यश्चमत्कारः—स्वरूपास्वादः, सः रूपं यस्याः सा । 'आनन्द' इत्यस्यापि योजनां करोति 'पराङ्मुख्य' इति । सैव—सत्तैव । उपसंहारं करोति 'तदेवम्' इति । इयद्रूपता—सत्तानन्दरूपता । एतेन 'पत्युः' इत्यन्तं व्याख्यातम् । 'तदभावः' इत्यादि

1, विश्वस्यावभासमानवैचित्र्य—K. S. S.

भावश्च आनन्दश्च तदभावश्च संकुचिततद्रूपत्वात्, तेन योऽसौ सत्तानन्दभागस्तत्प्रकाशसुखवृत्ति सत्त्वम्, यस्तदभावस्तदावरणमोहरूपं तमः, एते च ते सत्त्वतमसी नीलानीलवत् परस्परपरिहारेण यद्यपि वर्तेते कार्यकारणत्ववत्[1] तथापि एकपरामर्शगोचरीकार्यधर्म्यपेक्षया[2] चित्रपतङ्गसंगतनीलानीलात्मकरूपन्यायेनान्योन्यमिश्रतयापि भातः, अतो योऽयं 'द्व्यात्मा' मिश्रस्वभावः तद्रजोगुणः, अत एव प्रकाशाप्रकाशस्वरूपयोः सत्त्वतमसोरत्र श्लेषेणावस्थानम् इति दुःखत्वम्; प्रियपुत्रादेरेकघन एव हि प्रकाशः सुखम्; एकघन एवाप्रकाशो मोहः। यस्तु कथञ्चित्प्रकाशो यथा सव्याधिकदेहरूपतयानभिमतया, कथञ्चिच्चाप्रकाशो यथा गतगदकल्याणधर्मयोगितयाभिमतया तदेव दुःखत्वम्; अयमेव च

---

व्याचष्टे 'पशोस्तु' इति। तदभावः-सत्ताभावः। कुतः इत्यपेक्षायामाह 'संकुचित' इति। ननु ततः किमित्यत आह 'तेन' इति। प्रकाशसुखवृत्ति-प्रकाशसुखरूपम्, सत्त्वम्-सत्त्वगुणः, तदभावः-सत्तानन्दभागाभावः, तमः-तमोगुणः। 'कार्यकारणत्ववत्' इत्यस्योत्तरवाक्येन संबन्धः। कार्यकारणत्वयोः एकत्र धर्मिणि युगपत्स्फुरणात्। एकपरामर्शन गोचरीकार्यः यः धर्मी तस्यापेक्षया, चित्ररूपयुक्तः पतङ्गः चित्रपतङ्गः, तत्र सङ्गतं यन्नीलानीलात्मकं रूपं तस्य न्यायेन। एतदवष्टम्भेन 'द्व्यात्मा' इति पदं व्याचष्टे 'तद्' इति। 'रजः' इति व्याचष्टे 'रजोगुणः' इति। 'श्लेषि' इति व्याचष्टे 'दुःखम्' इति च योजयति 'अत एव' इति। अत्र-रजोगुणे, श्लेषेण-संगत्या, दुःखत्वम्-दुःखभावः। दुःखत्वमेव साधयति 'प्रिय' इति, प्रकाशः-अग्रस्तत्वेन प्रकटता। सुखमोहयोः साधनं कृत्वा अभीष्टस्य दुःखस्यापि करोति 'यस्तु' इति। कथञ्चित्—केनापि भागेन, अनभिमतया—अनिष्टया सव्याधिदेहो हि मरणमेव काङ्क्षते, देहापेक्षैव हि प्रकाशः, देहानपेक्षात्वप्रकाशः[3]। गतगदस्य[4] कल्याणधर्मयोगिता तया। तदेव-प्रकाशाप्रकाशस्वरूपमेव, अयमेव-दुःखमेव,

---

1. कार्यत्वकारणत्ववत्—K. S. S.
2. धर्मापेक्षया—K. S. S.
3. देहापेक्षात्वप्रकाशः—C.
4. आगतगदस्य—C.

पूर्वापरीभावसारः क्रियापरमार्थः। अत्रानुभयरूपत्वं तु नास्ति, प्रतीतौ कस्यांचित् कल्पिताकल्पितरूपायामननुप्रवेशात् तस्य। तथा हि–नीलं तावदकल्पितरूपायां धियि भाति; नीलाभावस्तु तुच्छोऽपि कल्पनाकल्पित आभासमानत्वात् तावद्व्यवहारपरमार्थः, तदुभयव्यामिश्रणात्तु नीलानीलं भातु नाम, यस्त्वनुभयरूपं तन्नीलप्रतीत्या तावदकल्पितया न विषयीकृतं चेत् तत् कल्पितामनीलधियमनुधावेत्, अथ तां कल्पितां धियं नाविशत्यकल्पितया विषयीकृतं नीलमेव स्यात्,—इति न पशोश्चतुर्थोऽस्ति गुणः। अपिशब्दश्चार्थे[1], पशोः सा सत्ता सत्त्वम्, तदभावस्तमः, द्व्यात्मा रजश्च,—इति संबन्धः॥ ६॥

---

क्रियापरमार्थः–क्रियासहजस्वभावः। रजोगुणस्य प्रवृत्तिरूपत्वात् प्रवृत्तेश्च स्फुटं क्रियात्वादिति भावः। नन्वनुभयरूपश्चतुर्थोऽपि गुणः अस्तु इत्यत आह 'अनुभय' इति। अननुप्रवेशात्—संक्रान्त्यभावात्। तस्य–अनुभयरूपस्य। अत्र समर्थनमुपक्रमते 'तथा हि' इति। 'तावत्' इत्यनेन पारमार्थिकाकल्पितत्वनिरासः। धियि—नीलबुद्धौ, तदुभयमिश्रणात्—नीलानीलव्यामिश्रणाद्धेतोः, 'नाम' इत्यनेन अस्य भानस्य असम्भवोपहतत्वं द्योतितम्। 'चेत् न विषयीकृतम्' इति योजना, 'अनुधावेत्' इति, स्वग्रहणार्थमिति भावः। अथ शिष्यः प्रश्नं करोति 'अपि' इति। अत्रापि दोषमापादयति 'अकल्पित' इति। 'अपि' शब्दार्थमाह 'अपि शब्दः' इति। 'चार्थे' समुच्चयार्थे इत्यर्थः। संबन्धं स्फुटीकृत्य दर्शयति 'पशोः' इति। सत्त्वम्–सत्त्वगुणः, तदभावः—सत्त्वाभावः, तमः—तमोगुणः।

एवमत्र स्फुटा योजना। पत्युः–परमेश्वरस्य, सत्ता–निजं स्फुरत्तारूपं भवनम्, आनन्दः भवति तथा क्रिया भवति, त्रयस्यापि परमार्थतः शक्तित्वेन तत्र एकत्वात्। पशोः–बद्धस्य जीवस्य, तदभावोऽपि सत्तानन्दाभावोऽपि, अपिशब्दात् तद्भावश्च, द्व्यात्मा–सत्तानन्दभावाभावरूपा सा आनन्दरूपा तत्प्रसिद्धं रजः भवति। रजः किम्? क्रिया, प्रवृत्तिरूपत्वेन क्रियापरमार्थमित्यर्थः। पुनः किम्? दुःखम्–दुःखरूपम्, तथा सत्त्वतमोमयम्, अत एव श्लेषि–श्लेष-

---

1. अपिश्चार्थे—K. S. S.

एवं तावत् पतिपशुरूपं प्रमातृतत्त्वं संक्षेपेण निर्णीतम् ; अथ प्रमेयतत्त्वं निर्णेतुं पत्यौ तावत् 'इत्थमिदं प्रमेयतत्त्वम्' इति निर्णेतुमाह—

येऽप्यसामयिकेदन्तापरामर्शभुवः प्रभोः ।
ते विमिश्रा विभिन्नाश्च तथा चित्रावभासिनः ॥ ७ ॥

इहाभासा एव तावदर्थाः,—इत्युक्तम् , ते च परामर्शैक्येन कदाचिन्मिश्रीक्रियन्ते यदा विशेषरूपता, कदाचिदमिश्रा एव परामृश्यन्ते यदा समान्यरूपता, ते एते उभयात्मानोऽप्यर्था[1] असामायिकेनाकल्पिते-

---

युक्तम्, अर्थादेव सत्तानन्दभावस्य सत्त्वभावः, तदभावस्य तमोभावः, क्रियातूभयत्र समाना, किन्तु पत्यौ शक्तित्वेन स्थिता, पश्वोस्तु रजोगुणत्वेन इति न तस्या अभावोऽत्रोपयोगी। यद्यपि सत्तया अभावोऽपि असंभवोपहत एव तथाप्यपरिमितां सत्तामपेक्ष्यैवमुक्तम् ॥ ६ ॥

अथ सप्तमस्य श्लोकस्यावतरणिकां करोति 'एवम्' इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'येऽपि' इति।

अत्र टीकाः—

श्लोकव्याख्योपयोगित्वेन पूर्वोक्तं वस्तु स्मारयति 'इह' इति। ते च–आभासाश्च, 'कदाचित्' इत्यनेन वक्तुमिष्टं वस्तु प्रकटीकरोति 'यदा' इति। विशेषरूपता–स्वलक्षणता, तत्र हि देशाद्याभासाः मिश्राः भवन्त्येव। ते एते[2] आभासाः, उभयात्मानः–मिश्रामिश्रस्वभावाः, अर्थाः–नीलसुखादयः। एतेन 'विमिश्रा विभिन्नाश्च' इति पदद्वयस्य व्याख्या। "असामयिक" इति समस्तं पदं विग्रहपूर्वकं व्याचष्टे 'असामयिकेन' इति। 'असामयिकेन' इति

---

1. उभयात्मानोऽप्यसामयिकेन—K. S. S.

2. ये एते—C. If we retain Bhāskara's reading 'ये' we would require the correlative 'ते' somewhere in the sentence ; but as that is found neither in K. S. S. reading nor in the Bhāskarī, we have adopted the K. S. S. reading as printed.

नेदंभावेन सहजपरामर्शरूपेणाङ्गुलिनिर्देशादिप्रख्येन[1] गोचरीकार्याः प्रभोरपि न केवलं सद्योजातबालादेर्यावदीश्वरस्यापि,'तथा'तेन सामान्यविशेषप्रकारेण चित्रतयावभासन्ते। चित्रत्वं हि तयोः—यन्मिश्रत्वममिश्रत्वं च युगपदेकाहन्ताविश्रान्तं भाति,—इति ईश्वरदशायां भावोल्लासनान्तरीयकत्वेन संवित्संकोचरूपं निषेध्यानुपरक्तनञर्थमात्ररूपं शून्यं संवित्प्रकाशेनैव प्रकाशमानमहन्तानिषेधरूपामसामायिकीमिदन्तामुल्लासयति ॥ ७ ॥

---

व्याचष्टे 'अकल्पितेन' इति। 'इदन्ता' इत्यवयवं व्याचष्टे 'इदंभावेन' इति। 'परामर्श' इत्यवयवं व्याचष्टे 'सहज' इति। सहजपरामर्शरूपेण, न तु संकेतविषयीकृतशब्दस्मृतिरूपपरामर्शरूपेण, अत एव अङ्गुल्यादिना यो निर्देशः तस्य प्रख्येन-सदृशेन। 'भुवः' इत्यवयवं व्याचष्टे 'गोचरीकार्याः' इति। एतेन असामयिकस्य इदन्तापरामर्शस्य भुवः-गोचराः इति विग्रहः सूचितः। 'अपि' शब्दाभिप्रायं कथयति 'प्रभोरपि' इति। एतेन 'अपि' शब्दो भिन्नक्रम इति सूचितम्। तथा 'असामयिकेदन्तापरामर्शगोचरीकार्याः' एतेन सद्योजातबालवत् सामान्येदन्तापरामर्शेन भावस्फुरणम् ईश्वरावस्थेति सूचितम्। 'तथा' इति व्याचष्टे 'तेन' इति। 'चित्रावभासिनः' इति व्याचष्टे 'चित्रतया' इति। कुत इत्यपेक्षायाम् समर्थनं करोति 'चित्रत्वं हि' इति। एकाहन्ताविश्रान्तम्-एकप्रमातरि विश्रान्तम्। एतेन फलितम् ईश्वरदशायाः स्वरूपं साक्षात्स्फुटीकृत्य कथयति 'इति' इति। इति-अतःकारणात्, शून्यम्-प्रत्यासन्नत्वेन मायापदगतः शून्यप्रमातैव, ईश्वरदशायाम्-ईश्वरावस्थायाम्, अहन्तानिषेधरूपाम्-'नाहम्' इति रूपाम्, असामयिकीम् इदन्ताम्-शिरोनिर्देशप्रख्याम् इदन्ताम्, उल्लासयति-स्फारयति। शून्यम् कीदृशम्? भावानाम्-स्वतो व्यतिरिक्ततया वेद्यानां नीलसुखादीनाम्, यः उल्लासः-स्वतो भेदेन निर्विकल्पकं स्फुरणम्, तस्य यत् नान्तरीयकत्वम्-व्याप्तिः तेन, संवित्सङ्कोचरूपम्, अन्यथा 'अहम्' इति ग्रहणप्रसङ्गात्। तथा निषेध्यानुपरक्तः-प्रतियोगिस्पर्शरहितः, नञर्थः-अभावः, तन्मात्रं रूपं यस्य तादृशम्, न तु 'नाहम्' इत्येवं रूपम्, अत एव संवित्प्रकाशेनैव-संवित्प्रकाशभावेनैव, न तु मायापदवत् न किञ्चिद्भावेन प्रकाशमानम्-स्वप्रकाशत्वेन स्वं प्रति भासमानम् ॥७॥

---

1. सहजमिदपरामर्शरूपेण—K. S. S.

एवं तावदीश्वररूपस्य पत्युरित्थं प्रमेयतत्त्वं, परमशिवे तु भगवति प्रमेयकथैव कथमुत्तिष्ठति, प्रमेयकथोत्थापकत्वमेव भगवतः सदाशिवेश्वरत्वम् ; अतोऽधुना पशुं प्रति कीदृक् प्रमेयस्य वृत्तान्तः,—इति सन्देहमपोहति श्लोकत्रयेण—

ते तु भिन्नावभासार्थाः प्रकल्प्याः प्रत्यगात्मनः ।
तत्तद्भिन्नसंज्ञाभिः स्मृत्युत्प्रेक्षादिगोचरे ॥ ८ ॥
तस्यासाधारणी सृष्टिरीशसृष्ट्युपजीविनी ।
सैषाप्यज्ञतया सत्यैवेशशक्त्या तदात्मनः ॥ ९ ॥
स्वविश्रान्त्युपरोधायाचलया प्राणरूपया ।
विकल्पक्रियया तत्तद्वर्णवैचित्र्यरूपया ॥ १० ॥

तुर्विशेषं द्योतयति, प्रत्यगात्मनस्तु इत्थं प्रमेयरूपा अर्थाः, न त्वीश्वरवदुक्तनयेनेति । 'भिन्न' इति मिश्रामिश्रतया भिद्यमान आभासो येषामर्थानां ते विशेषसामान्यात्मानोऽर्थाः 'प्रत्यगात्मनः' प्रतिपुरुषमव्यामिश्र[1]

अत्र टीकाः—

अथाष्टमनवमदशमश्लोकानामवतरणिकां करोति 'एवम्' इति । स्पष्टम् । अथ श्लोकमुपन्यस्य व्याचष्टे 'ते तु' इति ।

अत्र टीकाः—

'द्योतयति' इति । निपातानां द्योतकत्वादिति भावः । ननु कोऽसौ विशेष इत्याह 'प्रत्यगात्मनः' इति । इत्थम्—वक्ष्यमाणप्रकारेण । 'इति' इति विशेषकथनसमाप्तौ । 'भिन्न' इति समस्तं पदं विग्रहपूर्वकं व्याचष्टे 'मिश्र' इति । तत्र मिश्राः-स्वलक्षणरूपाः, अमिश्राः-सामान्यरूपाः । 'अवभास' इत्यवयवं व्याचष्टे 'आभासः' इति, 'भिन्नावभास' इत्यवयवद्वयस्य बहुव्रीहिणा समासं कृत्वा व्याख्यां करोति 'विशेषसामान्यात्मानः' इति । 'अर्थाः' इति निगदव्याख्यातम् । एतेन भिन्नावभासाश्च ते अर्थाश्चेति विग्रहः सूचितः । 'प्रत्यगात्मनः' इति व्याचष्टे 'प्रतिपुरुषम्' इति । 'प्रति' इत्यवयवं व्याचष्टे

1. अविमिश्रस्वसंवेदन—K. S. S.

स्वसंवेदनावगमस्वरूपस्यासंकीर्णाहंप्रकाशात्मनः प्रकल्प्याः कल्पनीयाः[1], प्रतिप्राणिस्ववासनानुसारेण विभिन्नाभिः संज्ञाभिः 'प्रियोऽयं शत्रुरयम्' इत्यादिकाभिर्भावनाविशेषानुसारेण तत्तद्विचित्रसुखदुःखाद्युपयुक्ताभिः स्मरणे उत्प्रेक्षणे संकल्पनेऽन्यत्रान्यत्र च विकल्पयोगे। एतदुक्तं भवति–ईश्वरस्य विकल्पात्मकतामन्तरेण शुद्धविमर्शविषयीभाव्या अर्थाः, पशोस्त्वन्योन्यापोहनहेवाकिनि विकल्पे समारूढास्तेऽर्था भवन्ति, सांसारिकहानादानादिव्यवहारोपयोगात् इति।

नन्वविकल्प्यत्वे यावानेवार्थस्तावानेव यदि विकल्प्यत्वे तत्को विशेषः प्रमेयस्य पतिपशुरूपतायाम् ? उच्यते, तस्येति, पशुकर्तृका सृष्टि-

---

'अव्यामिश्र' इति । अव्यामिश्रम्–विषयावच्छेदेन अन्येन सह व्यामिश्रताम् अगतं यत् स्वसंवेदनम्–स्वरूपभूतं संवेदनम्, तदेव अवगमः–ज्ञानम्, सः स्वरूपं यस्य। अत्रापि पर्यायमाह 'असङ्कीर्ण' इति। प्रतिपुरुषं नियताहंप्रकाशरूपस्येत्यर्थः। 'प्रकल्प्याः' इति व्याचष्टे कल्पनीयाः' इति। कामिरित्यपेक्षायां 'तत्तद्विभिन्न' इति पदं व्याचष्टे 'प्रतिप्राणि' इति। प्रतिप्राणि या स्ववासनानिभो भावनारूपः संस्कारः, तस्य अनुसारेण—अनुरोधेन। युक्तत्वेन अध्याहृत्य एतत् कथितम्। संज्ञाः एव स्फुटीकरोति 'प्रियोऽयम्' इति। ननु ताभिः संज्ञाभिः क उपयोग इत्यपेक्षायां स्वयमेव किञ्चित् कथयति 'भावना' इति। ननु ताः संज्ञाः कुत्र उपयुक्ता इत्यपेक्षायां 'स्मृत्युत्प्रेक्षादिगोचरे' इति व्याचष्टे 'स्मरणे' इति। 'आदि' शब्दग्राह्यं वस्तु कथयति 'सङ्कल्पने' इति। प्रिये हि स्मृते सुखमुत्पद्यते शत्रौ तु दुःखमिति स्वयं योजनीयम्। नन्वेतेन किमुक्तं भवतीत्यत आह 'एतदुक्तं भवति' इति। उक्तमेव दर्शयति 'ईश्वरस्य' इति। शुद्धविमर्शविषयीभाव्याः—अङ्गुलीनिर्देशप्रत्यवमर्शविषयीभावयोग्याः। अन्योन्यापोहनहेवाकिनि—परस्य व्यावृत्तिकरणहठयुक्ते, 'व्यवहारोपयोगात्' इति। अन्यथा सङ्कीर्णत्वेन व्यवहारो न युक्तः स्यादिति भावः।

अथ द्वितीयस्य श्लोकस्य टीकां करोति 'ननु' इति

अत्र टीकाः—

पतिपशुरूपतायाम्—लक्षणया ईश्वरप्रमेयताभावे पशुप्रमेयताभावे च।

---

1. विकल्पनीयाः—K. S. S.

स्तेषामर्थानामीश्वरसृष्टानामुपरिवर्तिनी, अत एव तामीश्वरसृष्टिमुप- जीवन्ती असाधारणी प्रतिप्रमातृनियता। तद्यथा 'इदं हृद्यम्' इति येन सृष्टं तत् तस्यैव तदा नान्यस्य। ननु यदि पशोरपि सृष्टिशक्तिरस्ति तर्हीश्वर एव? सत्यम्, ईश्वर एवासौ। नन्वेवं साधारणत्वं कस्मात् सृष्टेर्न भवति? भवेत् यदि स्वशक्तिं परिजानीयात्, यावता सा तस्यापरिज्ञाता परवशस्यैव सतो विकल्पक्रिया विकल्पनशक्तिरुदेति। ननु केन सा तस्योत्थाप्यते? आह—ईश्वरस्य परामर्शरूपतया शब्दराशिलक्षणस्य

---

अवतरणिकां कृत्वा श्लोकं व्याख्यातुं परिहारकथनं प्रतिजानीते 'उच्यते' इति। 'तस्य' इत्यस्य कर्तरि षष्ठीत्वं दर्शयति 'पशुकर्तृका' इति। 'सृष्टिः' इति निगदव्याख्यातम्। 'उपरिवर्तिनी' इति। ईश्वरसृष्टपुत्राद्युपरि एव हि पुरुषो हृद्यत्वादि सृजति। एतच्च युक्तत्वेन अर्थादेवानीतम्। एतदवष्टम्भेन 'ईशसृष्ट्युपजीविनी' इति व्याचष्टे 'अत एव' इति। उपजीवन्ती—अपेक्षमाणा, अन्यथा निर्विषयत्वादिति भावः। 'असाधारणी' इति व्याचष्टे 'प्रतिप्रमातृनियता' इति। नियतत्वमेव दर्शयति 'तद्यथा' इति। अत्र शिष्यः प्रश्नयति 'ननु' इति। गुरुः परमार्थदृष्टिमाश्रित्य अङ्गीकारं करोति 'सत्यम्' इति। असौ—पशुः। पुनरपि शिष्यः प्रश्नयति 'नन्वेवम्' इति। एवं सतीत्यर्थः। 'कस्मान्न भवति' इति। ईश्वरसृष्टेः साधारणत्वमेव युक्तमिति भावः। गुरुः उत्तरयति 'भवेत्' इति। भवेत्, स्यादित्यर्थः। तर्हि भवत्वेव इत्यत आह 'यदि' इति। पशुरिति शेषः। न तु जानातीति भावः। ननु कथं न जानातीत्यपेक्षायामवशिष्टं द्वितीयश्लोकस्योत्तरार्धं तृतीयश्लोकं च व्याचष्टे 'यावता' इति। यावता—यस्मात्कारणात्, सा—सृष्टिरूपा। तस्य—पशोः, विकल्पक्रिया—विकल्पक्रियारूपा, विकल्पनशक्तिः—विकल्पकरणशक्तिः। उदेति—उत्पद्यते। ननु सा उदेतु, परवशशक्तेः स्वयमुत्थानासंभवात् कस्तामुत्थापयतीत्याह 'ननु' इति। उत्तरं कथयति 'आह' इति। किमाहेत्यपेक्षायाम् 'ईशशक्त्या' इति व्याचष्टे 'ईश्वरस्य' इति। परामर्शरूपतया—आन्तरशुद्धपरामर्शभावेन, शब्दराशिलक्षणस्य—अकारादिशब्दराशिस्वभावस्य। 'ईश' पदेन 'शक्ति' पदस्य समासं कुर्वन् मध्ये 'स्वविश्रान्त्यु-

या शक्तिः स्वरूपविश्रान्तिलक्षणपारमैश्वर्योपरोधप्रयोजनब्राह्म्यादि-[1] देवताचक्रमयी तैस्तैः ककारादिवर्णवैचित्र्यैर्विचित्रा, तया यासौ विकल्पक्रिया तस्य पशोरेकत्र निरूढ्यभावात् चञ्चला, तेन 'मित्रमिदं[2] शत्रुरयम्' इत्यादिवर्णवैचित्र्यानुविद्धा,[3] तया विकल्पनक्रियया 'तदात्मन' ईश्वरस्वभावस्यैव पशोरसाधारणी सृष्टिः ।

---

परोधाय' इति योजनापूर्वं व्याचष्टे 'स्वरूप' इति । 'स्व' इत्यवयवं व्याचष्टे 'स्वरूप' इति । चतुर्थीविभक्तिं व्याचष्टे 'प्रयोजन' इति । 'शक्ति' पदं व्याचष्टे 'ब्राह्म्यादि' इति । स्वरूपविश्रान्तिलक्षणः—स्वरूपविश्रान्ति-स्वरूपः यः पारमैश्वर्योपरोधः—पारमैश्वर्याख्यधर्माश्रयणम् सः प्रयोजनम् यस्य तादृशम् यत् ब्राह्म्यादिदेवताचक्रम्—अवर्गादिक्षवर्गान्तरूपं ब्राह्म्यादिमातृकाऽ-ष्टकम्, तन्मयी—तत्स्वरूपा । तत्तद्वर्ण' इत्यादिपदम् एतद्विशेषणत्वेन व्याचष्टे 'तैस्तैः' इति । अवर्गे तादृग्वैचित्र्याभावमपेक्ष्य[4] 'ककारादि' इत्युक्तम् । अकारस्य हि शक्तिपञ्चकवशेन वैचित्र्यं हि कवर्गः, इकारस्य च चवर्गः इत्यादि । तया—प्रोक्तया शक्त्या, याऽसौ विकल्पक्रिया, विकल्पो हि वर्णमय एव शब्दस्मृतिरूपत्वात् । 'चलया' इति विशेषणत्वेन व्याचष्टे 'तस्य' इति । तस्य—एतदाश्रयत्वेन स्थितस्य, पशोः—अणोः, निरूढ्यभावात्—विश्रान्त्यभावात्, चञ्चला, एतत्फलितत्वेन 'तत्तद्' इति पदमत्र विशेषणत्वेन योजयति 'तेन' इति । तेन—चञ्चलत्वेन, ''मित्रमिदम्'' ''शत्रुरयम्'' इत्यादि यत् वर्णवैचित्र्यम् तेन अनुविद्धा—व्याप्ता, प्रोक्तविशेषणस्य पदस्य पुनः परामर्शं करोति आशङ्कायां प्रोक्तस्य 'केन' इत्यस्य विषयदानेन आकाङ्क्षां च पूरयति 'तया विकल्पनक्रियया' इति । 'तदात्मनः' इति समस्तं पदं विग्रहपूर्वकं व्याचष्टे 'ईश्वर' इति । एतेन तस्य—ईश्वरस्य, आत्मनः पशोः इति 'तदात्मनः' इति षष्ठीतत्पुरुषः सूचितः । असाधारणी सृष्टिः विकल्पसृष्टिः, भवतीति शेषः । सुगमत्वेन

---

1. स्वरूपविश्रान्तिलक्षण-पारमैश्वर्योपरोधप्रयोजना ब्राह्म्यादिदेवता-चक्रमयी—K. S. S. 2. मित्रमयम्—K. S. S.

3. ° अनुविद्धतया—K. S. S. 4. तादृग्वैचित्र्याभावमुपेक्ष्य—C.

'पञ्चवक्त्रश्चतुर्दन्तो हस्ती नभसि धावति ।'

इत्यपि विमिश्रतायां[1] विकल्पसृष्टिः, तानाभासान् ईश्वरसृष्टानेवोपजीवति इति सर्वा पाशवी[2] सृष्टिः प्रत्ययसृष्टिरीश्वरसृष्ट्युपजीविनीत्युक्तम्॥ १०॥

---

'प्राणरूपया' इति न व्याख्यातम् । 'ईशसृष्ट्युपजीविनी' इत्यस्य समर्थनं करोति 'पञ्च' इति विमिश्रतायाम्–दन्तादिगते अपूर्वपञ्चत्वादियोजने, हस्तिनि अपूर्वनभोधावनयोजने च, तान् आभासान्–दन्तपञ्चकादिरूपान् आभासान्, उपजीवति–अपेक्षते, सर्वं हि एतत् यत्र तत्र व्यस्तत्वेन ईश्वरेणैव सृष्टमस्ति, जीवस्तु तत्र स्वेच्छया योजनामात्रमेव करोति। ईश्वरसृष्टत्वाभावे तु सः किं केन योजयेदिति भावः। इति–अतः कारणात्, सर्वा पाशवी सृष्टिः–जीवसृष्टिः, प्रत्ययसृष्टिः–विकल्पसृष्टिः, ईश्वरसृष्ट्युपजीविनीत्युक्तम्, एतत्कथितमित्यर्थः।

एवमत्र श्लोकत्रये संक्षिप्तार्थः। तु–व्यतिरेके, प्रत्यगात्मनः–प्रतिपुरुषं स्थितस्य पशुरूपस्य जीवस्य कर्तुः, ते भिन्नावभासार्थाः–सामान्यविशेषरूपाः आभासाराः परस्परतः स्वतश्च भिन्नाः नीलसुखादिरूपाः पदार्थाः, स्मृत्युत्प्रेक्षादिगोचरे–स्मृत्यादिविषयीभावे, तत्तद्विभिन्नसंज्ञाभिः[3]–ताभिः ताभिः भिन्नपशुत्वादिरूपाभिः डित्थत्वादिरूपाभिश्च संज्ञाभिः, प्रकल्प्याः–प्रकर्षेण कल्पनीयाः, भावनाविशेषेण सुखदुःखाद्युत्पादकत्वात्, तस्य प्रत्यगात्मनः सृष्टिः–भिन्नावभासार्थविषयतत्त्वसंज्ञाकल्पनरूपा विकल्पसृष्टिः, असाधारणी भवति। नहि एकस्य मित्रादि अन्यस्यापि तदेव। तथा ईशसृष्ट्युपजीविनी–ईशसृष्ट्युपरिस्थितत्वेन तदपेक्षिणी भवति। ईशसृष्टे पुरुषे[4] एव हि उपरि जीवः मित्रत्वं योजयति

---

1. विमिश्रतया—K. S. S.

2. पाशवी प्रत्ययसृष्टिः—K. S. S.

3. तत्तद्वैचित्र्य—C.

4. According to the Sūtra of Pāṇini 'षष्ठ्यतसर्थप्रत्ययेन' II-3-30, 'उपरि' governs a word, ending in षष्ठी. ईश्वरसृष्टस्य पुरुषस्य would, therefore, be better grammar.

नन्वेवं यदि पाशवी सृष्टिः संसाररूपा तर्हि पारमेश्वरी सृष्टिः पशोः किं कुर्यात्? इति निर्णीयते—

---

न तु स्वरूपेणापि तद्देहं सृजति, सा एषा अपि-प्रोक्तजीवसृष्टिरपि, अज्ञतया तस्या एव-स्वशक्तित्वेन अज्ञाततया वर्तमानैव, अन्यथा अस्याऽपि ईश्वरत्वापातात्, तदात्मनः-तस्येश्वररूपस्य पशोः सम्बन्धिन्या, चलया तथा प्राणात् रूपं यस्याः तादृश्या, प्राणसिद्धया, तथा तत्तद्वर्णवैचित्र्यचित्रया विकल्पक्रियया भवति। विकल्पनेनैव हि जीवः सर्वानाभासानुत्पादयति। ननु तस्य पशोः केन हेतुना सा विकल्पक्रिया अस्तीत्यपेक्षायामाह 'स्वविश्रान्त्युपरोधाय' इति। ईशशक्त्या इति योजनीयम्। स्वैश्वर्य-विश्रान्त्याश्रयणाय या ईशस्य शक्तिः-अवर्गादिरूपवर्गाष्टकवाच्य-ब्राह्म्यादिमात्रष्टकरूपा शक्तिः तया, स्वां शक्तिम् उद्भाव्य स्वमैश्वर्यं प्रकटीकरोति। पशुरूपं जीवञ्च तद्रूपविकल्पवशेन परवशीकरोति। तदुक्तं स्पन्दशास्त्रे:—

शब्दराशिसमुत्थस्य शक्तिवर्गस्य भोग्यताम्।
कलाविलुप्तविभवो गतः सन् स पशुः स्मृतः॥

इति। अत्र च क्रियाधिकारे कृतैव विवृतिरिति न पुनरायस्तम्। ईश्वरशक्त्या कीदृश्या? तत्तत् यद्वर्णरूपम्-ककारादिवर्णरूपम्, वैचित्र्यं तेन चित्रया-आश्चर्यकारिण्या, ब्राह्मीवाचकादवर्गात् वैचित्र्यरूपं माहेश्वर्यादिवाचकं कवर्गादिसप्तकं जायते। तत्र अवर्णात् कवर्गः हकारश्च[1]

'अकुहविसर्जनीयानां कण्ठः'

इति वचनात्। अकार एव हि कण्ठे स्थूलत्वमासाद्य कवर्गहकारविसर्जनीयभावेन स्फुरति। इकारात् चवर्गः यकारश्च

'इचुयशानां तालु'

इति वचनात्, एवं सर्वत्र योजनीयम्। या तु अवर्गे अकारादिभ्य आकाराद्युत्पत्तिः सा सूक्ष्मत्वेन नेह गणनीया। तथा हि अकारः चिच्छक्तियुक्ते अनुत्तरे स्वरूपे संकेतितः। तस्यैव स्वान्तर्लीनाऽऽनन्दशक्तिप्रादुर्भावे आकारभावेन स्फुरणम्। तस्यैव चिन्मयत्वेन इच्छाशक्तिप्रादुर्भावे इकारोदयः। तस्या

---

1. कवर्गः हकारश्च इति च—C

साधारणोऽन्यथा चैशः सर्गः स्पष्टावभासनात्।
विकल्पहानेनैकाग्र्यात् क्रमेणेश्वरतापदम् ॥ ११ ॥

ऐश्वरः सर्गो द्विधा, साधारणश्च घटादिरसाधारणश्च अन्यथा[1] निर्दिष्टो

---

एषणीयाख्यविषयलाभे ईकारोदयः। उन्मेषाख्यज्ञानशक्तिप्रादुर्भावे उकारोदयः। तस्यैव स्थौल्यरूप 'ऊह' प्रादुर्भावे ऊकारोदयः। ततः कस्यापि वर्णस्य अनुत्पादकः इच्छाशक्त्युद्दीपनरूपः ऋकारः। अग्निवाचको हि रकारः, इच्छाशक्तिः इकारः, तयोः संयोगः ऋकारः। तस्य पुष्टता ॠकारः। तथा इच्छाशक्तेः आस्वादरूपः ऌकारः। लकारो हि दन्त्यत्वेन रसवाचकः, रस एव चास्वादः, इकारेण मिलितः स एव ऌकारः। तत्स्थौल्यं ॡकारः। अनुत्तरेच्छयोः संयोगः एकारः। पुनः अनुत्तरेण प्रमात्रा संयोगः ऐकारः। अनुत्तरस्य उन्मेषेण संयोगः ओकारः। पुनरपि अनुत्तरेण प्रमात्रा संयोगे औकारः। अनुत्तरस्य स्तोकं पुष्टतापत्तिः विसर्जनीयः। उन्मेषस्य स्तोकं पुष्टतापत्तिः अनुस्वारः। एतावत् पर्यन्तं सूक्ष्मसृष्टिः। इयमेव च

'कलाविलुप्तविभवः'

इत्यनेन पदेनोक्ता। अकारादिकलाभिर्हि भेदापादिकाभिः श्रीशिवस्यकत्वलक्षणो विभवो विलुप्यत एव। इतः परं तु स्थूलसृष्टिः अकार-इकार-उकार-ऋकार-ऌकारस्थूलतारूपत्वात् कवर्गादि सप्तकस्येत्यलम् प्रपञ्चेन। 'तत्तद्वर्ण' इति पदं तन्त्रेणोभयत्र सम्बन्धनीयम् ॥ १० ॥

अथैकादशस्य श्लोकस्यावतरणिकां करोति 'नन्वेवम्' इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'साधारण' इति।

अत्र टीका:—

'ऐशः'[2] इति पदं व्याचष्टे 'ऐश्वरः' इति। द्विधात्वमेव स्फुटीकरोति 'साधारणश्च' इति। 'अन्यथा निर्दिष्टः' इत्यनेन 'अन्यथा' इत्यस्य

---

1. अन्यथा इति निर्दिष्टः—K. S. S.
2. ऐश—C.

द्विचन्द्रादिः; तस्य च सामान्यलक्षणं स्पष्टावभासनं नाम । सोऽयं सर्गो यदा विकल्पहानक्रमेण तस्मिन्निर्विकल्पकपरिगृहीत एव स्पष्टाऽभेर्थे एकाग्रत्वमवलम्ब्य 'अहमिदम्' इत्यैश्वर्यपरामर्शपदं भवति तदा अन्तर्लक्ष्यबहिर्दृष्टिनिमेषोन्मेषपरिहारदिशा[1] 'क्रमेण' अभ्यासतारतम्येन पशोः पशुत्वं प्रतिहन्तीश्वरत्वं च दर्शयति । किं च योऽयं विकल्पसर्गः

---

व्याख्या । 'स्पष्टावभासनात्' इति योजयति 'तस्य च' इति । तस्य द्विविधस्य सर्गस्य स्पष्टावभासयुक्तत्वादिति भावः । पूर्वार्धं व्याख्याय उत्तरार्धं व्याचष्टे 'सोऽयम्' इति । सोऽयम् सर्गः-द्विविधः ऐशः सर्गः । 'विकल्प हानेन क्रमेण' इति पदद्वयं व्याचष्टे 'यदा' इति । विकल्पहानक्रमेण-तत्त्वाभ्यासादिसाधितविकल्पत्यागक्रमेण । तस्मिन्-ऐशसर्गरूपे, एकाग्रत्वम्-एकाग्रभावम् । अवलम्ब्य-आश्रित्य । एतेन 'ऐकाग्र्यात्' इति ल्यब्लोपे पञ्चमीति द्योतितम् । 'ईश्वरतापदम्' इति व्याचष्टे 'अहम् इदम्' इति ऐश्वर्यपरामर्शपदम्-ईश्वरसम्बन्धिपरामर्शपदं भवति । 'यदा' इत्यस्याकांक्षां पूरयितुं फलितरूपं किञ्चित्स्वयमेव कथयति । 'तदा' इति । तदा अन्तर्लक्ष्य-बहिर्दृष्टिनिमेषोन्मेषपरिहारदिशा

अन्तर्लक्ष्यो बहिर्दृष्टिर्निमेषोन्मेषवर्जितः ।
एषा वै शाम्भवी मुद्रा सर्वशास्त्रेषु गोपिता ॥

इति महारहस्यशास्त्रोक्तक्रमेण, अभ्यासतारतम्येन-अभ्यासपराकाष्ठासादनेन, पशोः पशुत्वं प्रतिहन्ति-नाशयति, ईश्वरत्वम्-परमार्थेन स्थितम् ईश्वरत्वम्, च दर्शयति-प्रकटीकरोति । तदुक्तम्:—

सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥

इति । तत्र 'अन्तर्लक्ष्य' इत्यस्यायमर्थो भवेदिति शेषः । पुरुषः अन्तः-सर्वान्तः सारत्वेन स्थितं शुद्धचिन्मात्राख्यम् आन्तरं वस्तु, लक्ष्यम्-अवधानविषयो यस्य

---

1. निमेषोन्मेषपरिहारोपदेशदिशा—K. S. S.

पाशव उक्तः सोऽपि यदि 'अन्यथा' इति पूर्वोक्तरूपवैपरीत्येन परिज्ञातयेशशक्त्या परिज्ञाततादात्म्यस्य भवति तदा सोऽपि साधारण एवाप्यायनाभिचरणशान्त्यादिविकल्प इव न्यस्तमन्त्रस्य भावितान्तः-करणस्य ॥ ११ ॥

---

तादृशः। तथा बहिः—बाह्ये—कुत्रापि धारणया गृहीते बाह्यवस्तुनि, दृष्टिः—चक्षुः यस्य तादृशः। तथा निमेषोन्मेषाभ्यां तत्रैव वस्तुनि बद्धदृष्टित्वेन वर्जितः भवेत्, स्वभाववशेनैव दृष्टिक्षये निर्विकल्पत्वासादनात्, अन्यथा चिन्मात्रावधानपरस्यापि स्वभाववशेन बाह्यसंकल्पस्फुरणात्। मूढस्य तु उन्मेषनिमेषत्यागेन सिद्धाऽपि निर्विकल्पता जाड्यरूपैव इति 'अन्तर्लक्ष्य' इत्युक्तम्। अथवा अन्तर्लक्ष्यत्वं सर्वत्र चिन्मयताभावनम्। बहिर्दृष्टित्वं लौकिकवत् बाह्यवस्तुषु व्यवहरणम्। उन्मेष-निमेषराहित्यम् तद्विषयसंकल्पविकल्पराहित्यम् उक्तम् इत्यलं रहस्योद्घाटनेन। पण्डितैः एषा सर्वशास्त्रेषु गोपिता शाम्भवीमुद्रा—शाम्भवोपायरूपा मुद्रा—आनन्दप्रदायिनी विशिष्टावस्थितिः, प्रोक्ता इत्येतेन साधारणैश्वसर्गद्वारेण निर्वि-कल्पतासादनमुक्तम्।

अधुना **'अन्यथा'** इत्यनेनोक्तम् असाधारणसर्गद्वारेणापि तदासादनं पक्षान्तररीत्या कथयति 'किञ्च' इति। **पाशवः**—पशुनिष्ठत्वेन ईश्वरेणो-त्पादितः द्विचन्द्रादिरूपः, **पूर्वोक्तरूपवैपरीत्येन परिज्ञातया**—मातृका-भाववैपरीत्येन ज्ञातया, शुद्धाऽहं परामर्शभावेन ज्ञातयेति यावत्। परिज्ञातं तादात्म्यम्—ईश्वरेण सह स्वस्यैकात्म्यं येन तादृशस्य, भवति। तदासोऽपि—सर्गः, **साधारण एव** भवति येन योगिकल्पितं वस्तु सर्व एव पुरोऽनुभवन्ति। न चेह 'ईश्वरोऽहम्' इति वाचा कृतेन अभिमानेन भ्रमितव्यम्। अत्र हि भावनादार्ढ्यमुपयुक्तम्, अन्यथा ऐन्द्रजालिकमायोत्पादकेषु मन्त्रेषु भावनादार्ढ्यं न कुर्युः। न च सहजज्ञानयुक्तैरत्र भ्रमितव्यम् इत्यलं बहुना। अत्र दृष्टान्तमाह **'आप्यायन'** इति। आप्यायनम्—पुष्टिः, अभिचरणम् अभिचारः, शान्तिः—शान्तिकर्म, 'आदि' शब्देन समस्तमन्त्रादिसाध्यवस्तुग्रहणम्। **न्यस्त-मन्त्रस्य**—प्रयुक्तमन्त्रस्य मान्त्रिकस्येत्यर्थः। मन्त्रोच्चारणमात्रेण एतदभिमान-ग्रस्तान् प्रति उक्तम् **'भावितान्तःकरणस्य'** इति। मन्त्रे भावनायुक्तचिरा-स्येत्यर्थः॥ ११॥

एवं विकल्पनिर्ह्रासेन निर्विकल्परूपसात्मीभावे विश्वात्मकसाक्षात्का[1]रलक्षणः स्वप्रत्यय एव मोक्षो दर्शितः, अधुना विकल्पनिर्ह्रासाभावेऽपि तं दर्शयति—

**सर्वो ममायं विभव इत्येवं परिजानतः।**
**विश्वात्मनो विकल्पानां प्रसरेऽपि महेशता ॥ १२ ॥**

नहि[2] सः प्रत्यगात्मा नाम पशुः कश्चिदन्यो योऽहम्, अपि तु परिगृहीतग्राह्यग्राहकप्रकाशैकघनः परो यः स एवाहं स चाहमेव, न

---

अथ द्वादशस्य श्लोकस्यावतरणिकां करोति 'एवम्' इति।

अत्र टीकाः—

विकल्पनिर्ह्रासेन—विकल्पहानेन, निर्विकल्परूपेण यः स्वात्मीभावः—ऐक्यम्, तस्मिन्। विश्वात्मकसाक्षात्कारलक्षणः—परशिवसाक्षात्कारस्वरूपः, स्वप्रत्यय एव-आत्मज्ञानमेव, न तु व्यतिरिक्तपरमेश्वरप्रत्ययः। विकल्पनिर्ह्रासाभावेऽपि—विकल्पहानाभावेऽपि, तम्-मोक्षम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'सर्वो मम' इति।

अत्र टीका:—

'विश्वात्मनो मम' इति भागं व्याख्यातुं प्रक्रियां करोति 'न हि' इति। हि—यस्मात्, सः प्रत्यगात्मा नाम—प्रत्यगात्माख्यः, पशुः—अणुः, अन्यः-परमेश्वराद्भिन्नः कश्चिन्न तु अस्ति। सः कः ? 'यः अहम्' 'मम' इति षष्ठ्यन्तपदेन स्वामित्वेन उक्तोऽस्तीति यावत्। पुनः 'अहम्' इति कोऽस्तीत्यपेक्षायां पक्षान्तररीत्या कथयति 'अपि तु' इति। परिग्रहीतौ—साक्षित्वेन स्थित्वा ग्रहणविषयीकृतौ, ग्राह्यग्राहकौ येन तादृशः यः प्रकाशः तेन घनः—निबिडः। यः परः—सर्वोत्तीर्णत्वेऽपि सर्वमयं वस्तु भवति स एवाहम्। ननु त्वं सः भव, स तु त्वं नास्ति, तस्य सर्वत्वात् इत्यत आह 'स च' इति। स च-परश्च, अहमेव, सर्वत्रापि 'अहम्' इत्येव स्थितत्वात्। स्थावरेष्वपि

---

1. विश्वात्मसाक्षात्कारलक्षणः—K. S. S.
2. नहि प्रत्यगात्मा नाम—K. S. S.

त्वन्यः कश्चित्; अतो विकल्पसृष्टिरपि 'मम' स्वातन्त्र्यलक्षणो 'विभवः,—इत्येवं विमर्शे दृढीभूते सत्यपरिक्षीणविकल्पोऽपि जीवन्नेव मुक्तः। यथोक्तम्—

'शङ्कापि न विशङ्क्येत निःशङ्कत्वमिदं स्फुटम् ।'

इति ॥ १२ ॥

---

हि अहंप्रतीतिरस्त्येव अन्यथा वृक्षस्य स्वं प्रति रसाकर्षणायोगात्। तु व्यतिरेके, अन्यः कश्चित् अहं न भवति, इदन्ताविषयत्वेन जडत्वापातात्। एतदवष्टम्भेन श्लोकं व्याचष्टे 'अतः' इति। तत्रापि **'सर्वोऽयम्'** इति व्याचष्टे 'विकल्पसृष्टिः' इति। 'अपि' शब्दात् ईशसृष्टेर्ग्रहणम्। **मम**—परमार्थतः प्रोक्तरूपस्य, आपाततस्तु देहादिप्रमातृत्वेन स्थितस्य अस्मच्छब्दवाच्यस्य वस्तुनः सम्बन्धि। **'विभवः'** इति व्याचष्टे 'स्वातन्त्र्य' इति। स्वातन्त्र्यमेव हि विभवः न द्रविणादीति भावः। **'इत्येवं परिजानतः'** इति व्याचष्टे 'इत्येवम्' इति। **'विकल्पानां प्रसरेऽपि'** इति व्याचष्टे 'अपरिक्षीण' इति। **'अपि'** शब्देन तेषां बाहुल्येन विकल्पराहित्यमेव भवेत्, परन्तु देहस्वभाववशेन कदाचिदागतानां विकल्पानां प्रसरेऽपि तेषां महेशतैवेति ज्ञेयम्। न तु सर्वदा विकल्पग्रस्तेष्वयं विधिः, अस्य परामर्शस्य तत्राभावात्। 'अपि' शब्दः काकाक्षिन्यायेन द्विर्योजनीयः। **'महेशता'** इति पदं व्याचष्टे 'जीवन्नेव मुक्तः' इति। मुक्तिर्हि महेशभावासादनमेवेति भावः। जीवत्वं चात्र विकल्पप्रसरेणैवाक्षिप्तम्। अत्र पूर्वाचार्यसम्मतिं कथयति **'यथोक्तम्'** इति। किमुक्तमित्यत आह 'शङ्कापि' इति। अत्रायमर्थः। योगवशेन प्रक्षीणीभूताभिर्वस्तुशङ्काभिरलम्। योगिनां शङ्कापि—कदाचिद्देहस्वभावेन आगता विकल्परूपा शङ्कापि, न विशङ्क्येत—न विशङ्कनीया, किमर्थमियमागता इति न शङ्काविषयीकार्या, क्षोभावहत्वादिति यावत्। किन्तु अनादरविषयतामेव नेयेतिभावः। तदुक्तम्:—

"अनादरविरक्त्यैव न पश्यन्तीन्द्रियसंविदः।"

इति। 'इदं स्फुटम्—प्रकटम्, निःशङ्कत्वं भवति—शंकाग्रस्तस्य स्फुटमेव सशङ्कत्वात् इति। नच सर्वदा विकल्पग्रस्तैरयमभिमानः कार्यः, असम्भवो-

नन्वेवं बद्धमुक्तयोः प्रमेयं प्रति को भेदः ?, उच्यते—

**मेयं साधारणं मुक्तः स्वात्माभेदेन मन्यते ।**
**महेश्वरो यथा बद्धः पुनरत्यन्तभेदवत् ॥ १३ ॥**

श्रीमत्सदाशिवेश्वरपदादारभ्य क्रिमिपर्यन्तप्रमातृवर्गाधिष्ठातृ यद्-

---

पहतत्वात्, ये तु विकल्पग्रस्तत्वेऽपि स्वात्मानं तथा न जानते, सन्निपातदोषग्रस्तेभ्यस्तेभ्यो दूरतो नम एव कार्यमित्यलं बहुना। 'स ः' इत्यस्य स्थाने 'सर्गः' इति प्रशस्तः पाठः। 'सर्व' शब्दो हि सामान्येन जीवेशसृष्ट्योः आक्षेपं करोति, न तु विकल्पसृष्टेरेव। 'सर्गः' इति पाठे तु **'अयम्'** इत्यनेन प्रकृतविकल्पपरामर्शः। 'सर्ग' पदेन सृष्ट्यभिधानम्। **अयं सर्गः,** जीवसृष्टिरूपा विकल्पसृष्टिरित्यर्थः। **'अपि'** शब्दात्तु ईशसृष्टेर्ग्रहणम्। काश्मीरिकलेखकैस्तु स्तोकं सादृश्यवशेन 'सर्ग' इत्यस्य स्थाने 'सर्व' इति पाठो लिखितः। सहृदया एवात्र प्रमाणम्। कुत्राप्यादर्शे 'सोऽहम्' इत्यपि पाठोऽस्ति, स तु न युक्तः। 'मम विश्वात्मनः' इत्यस्य व्याख्यार्थं कृतेन प्रपञ्चेन कृतभ्रमसिद्धत्वात्।[1] एतन्मात्रनिर्णयपरेऽत्र शास्त्रे स्थितस्यास्य श्लोकस्यानुवादकत्वापत्तेश्च। न च सूत्रेष्वनुवादोयुक्तः। टीकाकारेण तु 'विश्वात्मनः' इत्यस्य व्याख्यानुरोधेन कृतोप्यनुवादो न दोषमावहतीत्यलं बहुना प्रतिभान्वितेषु, तद्रहितानान्तु अत्रानधिकारात्। अथवा 'सर्व' शब्द एव सृष्टिवाचकः, 'अयम्' शब्देन तु तस्य प्रकृतविकल्पभावेन परिच्छेदः क्रियते इति ॥१२॥

अथ त्रयोदशस्य श्लोकस्यावतरणिकां करोति **'ननु'** इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे **'मेयम्'** इति।

अत्र टीकाः—

श्लोकं व्याख्यातुमवतरणिकां करोति 'श्रीमत्' इति। अधिष्ठातृ, प्रेरकम्,

---

1. इत्यस्य व्याख्यार्थं कृतेन प्रपञ्चेन कृतभ्रमसिद्धत्वात्—C.

While trying to avoid a succession of words ending in तृतीया, the author makes the awkward समास 'कृतभ्रमसिद्धत्वात्' when he means कृतेन भ्रमेण सिद्धत्वात्।

हमितिरूपं तदेवात्मतयाभिनिविशते मुक्तः, ततश्च विश्वस्यापि प्रमेयं ममापि, मम प्रमेयं विश्वस्यापि, प्रमेयं चेदं ममैवाङ्गभूतं प्रमेयान्तरमपि तथा,—इत्यनेन क्रमेण प्रमेयं परस्परतश्च प्रमातृवर्गाच्चाव्यावृत्तम्,—इत्येकरसाभेदविश्रान्तितत्त्वमस्य सर्वं परामर्शपदमुपैति। बद्धस्य तु सर्वमेतद्विपरीतम्,—इत्येकरसभेदविश्रान्त एवासौ॥ १३॥

ननु सदाशिवेश्वरभुवि जीवन्मुक्तिपदे बद्धरूपपशुप्रमातृविषये च प्रमेयवृत्तान्तः परीक्षितः, परमशिवे तु कथमसौ? इत्याशङ्क्याह—

सर्वथा त्वन्तरालीनानन्ततत्त्वौघनिर्भरः।
शिवः चिदानन्दघनः परमाक्षरविग्रहः॥ १४॥

न खलु भगवति श्रीपरमशिवे प्रमेयकथा काचिदस्ति, तत्त्वौघस्य

---

अभिनिविशते—मन्यते। एतेन 'मन्यते' इत्यस्य व्याख्या। अन्यथा मुक्तत्वायोगादिति भावः। एतदवष्टम्भेन श्लोकं व्याचष्टे 'ततश्च' इति। विश्वस्य—सर्वस्य प्रमातृवर्गस्य। एतेन 'मेयं साधारणम्' इत्येतयोर्व्याख्या। 'स्वात्माभेदेन' इति व्याचष्टे 'ममैवाङ्गभूतम्' इति। तथा—ममाङ्गभूतम्। अव्यावृत्तम्—अभिन्नम्। एकरसो यः अभेदः तत्र या विश्रान्तिः सा एव तत्त्वं यस्य तादृशम्। अस्य—मुक्तस्य, परामर्शपदम्—परामर्शविषयम्, 'उपैति' इति, सर्वत्राऽहमिति ग्रहणादिति भावः। 'महेश्वरो यथा' इति दृष्टान्तपदं सुगमत्वेन न व्याख्यातम्। 'बद्धः' इत्याद्यवशिष्टं श्लोकखण्डं व्याचष्टे 'बद्धस्य' इति। 'एतत्' स्वकीयं परकीयञ्च प्रमेयमित्यर्थः। विपरीतम्—स्वतः अन्यतश्च व्यावृत्तम्, असौ—बद्धः॥१३॥

अथ चतुर्दशस्य श्लोकस्यावतरणिकां करोति 'ननु' इति। स्पष्टम्। एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'सर्वथा' इति।

अत्र टीका:—

सर्वथा—सर्वप्रकारेण, यत् यथा अस्ति तस्य तथैव स्थित्या। न तु अन्यथाभावाऽऽसादनेनेत्यर्थः। तत्र—तस्मिन् परशिवे, अन्तः तत्त्वौघस्य—शिवादि

सर्वथा तत्र चिद्रूपतामात्रविश्रान्तत्वेन लीनत्वात्, ततश्च सावस्था संवित्स्वभावेन स्वात्मविश्रान्त्यानन्देन अकृत्रिमनैसर्गिकपरामर्शात्मकस्वात्मचमत्कारलक्षणेनैकघना अविच्छिन्नतद्रूपा परमाक्षरेण विग्रहवती भगवतो विश्वमयस्यानवच्छिन्नानुत्तरधाम्नो[1] नित्यशुद्धस्य गलितप्रमेयकथा सर्वोत्तीर्णा व्यपदिश्यते ॥ १४ ॥

---

धरण्यन्तस्य तत्त्वग्रामस्य। एतद्धेतुकत्वेन उत्तरार्धं व्याचष्टे 'सावस्था' इति। सावस्था–पूर्वोक्ताऽवस्था। 'चित्' इत्यादि समस्तं पदं विग्रहपूर्वकं व्याचष्टे 'संवित्' इति। तत्रापि 'चिद्रूपता' इत्यवयवं व्याचष्टे 'संवित्स्वभावेन' इति। 'आनन्द' इत्यवयवं व्याचष्टे 'स्वात्म' इति। स्वात्मनि विश्रान्तिरूपः आनन्दः स्वात्मविश्रान्त्यानन्दः तेन। स्वात्मविश्रान्त्यानन्दस्य स्वरूपं दर्शयति 'अकृत्रिम' इति। अकृत्रिमः–विषयसाधितत्वाभावेन अकल्पितः, अत एव नैसर्गिकः–स्वाभाविकः, तथा परामर्शात्मकः–'अहम्' इति पराहन्तापरामर्शरूपः यः स्वात्मचमत्कारः–स्वात्माश्रयः स्वात्मविषयश्च आस्वादः, सः लक्षणम्–स्वरूपं यस्य तादृशः, तेन। 'घनः' इत्यवयवं व्याचष्टे 'एकघना' इति। अत्रापि पर्यायमाह 'अविच्छिन्नतद्रूपा' इति। अविच्छिन्नं तद्रूपं यस्याः सा। 'परमाक्षरविग्रहः' इति व्याचष्टे 'परमाक्षरेण विग्रहवती' इति। परमाक्षरेण–सर्वोत्तीर्णाविनाशिस्वभावेन, विग्रहवती–विग्रहयुक्ता। परमाक्षरस्वरूपेत्यर्थः। सूत्रोक्तसामानाधिकरण्योपपादनाय अस्याः अवस्थायाः परमशिवसम्बन्धित्वं कथयति 'भगवतः' इति। विश्वमयस्य—पूर्णत्वेन विश्वनिर्भरस्य, तथा अनवच्छिन्नम्—अनुत्तरं धाम यस्य तादृशस्य। नित्यशुद्धस्य, नित्यशुद्धप्रकाशरूपस्येत्यर्थः। आश्चर्यं च विश्वमयस्य अनवच्छिन्नानुत्तरधामत्वम्। न हि अङ्गिनः स्वाङ्गैः कोऽपि विकार इति तु परिहारः। गलिता प्रमेयकथा यस्यामवस्थायां सा गलितप्रमेयकथा, अत एव सर्वोत्तीर्णा, विश्वोत्तीर्णरूपेत्यर्थः। 'व्यपदिश्यते' इति। व्यपदेशमात्रमेवेदम्, परमार्थतस्तु स एव सर्वथा सर्वं स्वयमेव भवति च न भवति च सर्वसहत्वात् इति का सूत्रे सामानाधिकरण्यद्योतिता सम्बन्धित्वकथेति भावः ॥ १४ ॥

---

1. अनवच्छिन्नानुत्तरधाम्नो गलितप्रमेयकथा—K. S. S.

एवमधिकारचतुष्टयोक्तं यद्वस्तु तत्फलितमाह—

एवमात्मानमेतस्य सम्यग्ज्ञानक्रिये तथा ।
जानन्यथेप्सितान्पश्यञ्जानाति च करोति च ॥ १५ ॥

एवमिति, ईश्वररूपमात्मानं तस्य च स्वाऽव्यतिरिक्ते स्वातन्त्र्यमात्ररूपे ज्ञानक्रिये जानन् एवंभूतोऽयमात्मा न तु काणादादिदर्शितः, इत्थं च ज्ञानक्रिये न तु तस्य व्यतिरिक्ते केचन इति परामृशन्, यद्यदिच्छति तत्तज्जानाति करोति च समावेशाऽभ्यासपरोऽनेनैव शरीरेण । अतत्परस्तु सति देहे जीवन्मुक्तस्तत्पाते परमेश्वर एवेति ॥ १५ ॥

---

अथ पञ्चदशस्य श्लोकस्यावतरणिकां करोति 'एवम्' इति । स्पष्टम् । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे 'एवम्' इति ।

अत्र टीकाः—

'एवम्' शब्दं व्याचष्टे 'ईश्वररूपम्' इति । 'आत्मानम्' इति निगदव्याख्यातम् । 'एतस्य' इति व्याचष्टे 'तस्य च' इति । तस्यात्मनः इत्यर्थः । 'ज्ञानक्रिये' इति व्याचष्टे 'स्वाव्यतिरिक्ते' इति । शक्तिभावेन स्थितत्वादिति भावः । एतेन 'तथा' शब्दस्य समुच्चयद्योतकत्वं सूचितम् । 'पश्यन्' इत्यस्य व्याख्यां करोति 'जानन्' इति । 'पश्यन्' इत्यन्तं कृतां व्याख्यां सङ्ग्रहेण पुनरनुवदति 'एवं भूतः' इत्यादि 'परामृशन्' इत्यन्तम् । 'यथेप्सितान्' इत्यादि अवशिष्टं श्लोकखण्डं व्याचष्टे 'यत्' इति । समावेशस्य—परमेश्वरैक्यरूपताभवनरूपस्य अभ्यासः तत्र परः—एकनिष्ठः तत्परः । अतत्परः—ज्ञानित्वेऽपि बाह्यव्यवहारे सक्तः । तत्पाते—देहपाते । 'इति' शब्दः समस्तप्रक्रियासमाप्तौ । एतच्च श्री स्पन्दशासने

तदास्याकृत्रिमो धर्मो ज्ञत्वकर्तृत्वलक्षणः ।
यतस्तदीप्सितं सर्वं जानाति च करोति च ॥

इति श्लोकेनोक्तम् ॥ १५ ॥

अस्यार्थस्य स्वप्रत्ययसिद्धस्यापि गुरुपरम्परोपदेश उपोद्बलको वक्तव्यः, शास्त्रदृष्टिर्हि दर्शितागमाधिकारेण । एवं गुरुतः शास्त्रतः स्वतः एतद् दृढीकृतं भवति, इत्यभिप्रायेण गुरुपारम्पर्यं दर्शयति

इति प्रकटितो मया सुघट एष मार्गो नवो
महागुरुभिरुच्यतेस्म शिवदृष्टिशास्त्रे यथा ।
तदत्र निदधत्पदं भुवनकर्तृतामात्मनो
विभाव्य शिवतामयीमनिशमाविशन्सिद्ध्यति ॥१६॥

अस्मत्परमेष्ठिभट्टारकश्रीसोमानन्दपादैः शिवदृष्टिशास्त्रेऽयमभिनवः सर्वरहस्यशास्त्रान्तर्गतः सन्निगूढत्वादप्रसिद्धो बाह्यान्तरचर्याप्राणाया-

---

अथ षोडशस्य श्लोकस्यावतरणिकां करोति । 'अस्यार्थस्य' इति ।

अत्र टीकाः—

**अस्यार्थस्य**-'सः स्वतन्त्रः परमेश्वर एवाहम्' इत्येवंरूपस्य रहस्यार्थस्य, **स्वप्रत्ययसिद्धस्यापि**—स्वानुभवसिद्धस्यापि, **उपोद्बलकः**—उपोद्बलनकारी । ननु शास्त्रदृष्टिरप्यत्रोपयुक्ता वर्तत एवेत्यत आह '**शास्त्र**' इति । फलितमाह '**एवम्**' इति । **एवम्**-**गुरुपरम्परोपदेशस्य** एतदर्थोपोद्बलकत्वे[1] सति, आचार्यः इत्यभि-**प्रायेण**-अनेनाभिप्रायेण, **गुरुपारम्पर्यं दर्शयति**-प्रकटयति । इति कथमिति ? **एतत्**-अयमर्थः, '**गुरुतः शास्त्रतः स्वतः दृढीकृतं भवति**' इति । एवमवतरणिकां कृत्वा श्लोकमुपन्यस्य व्याचष्टे '**इति**' इति ।

अत्र टीकाः—

'**महागुरुभिः**' इति व्याचष्टे '**अस्मत्**' इति । **शिवदृष्टिशास्त्रे**-शिवतत्त्वप्रकटताहेतुभूतत्वेन 'शिवदृष्टि' पदवाच्ये । '**अयम् अभिनवः**' इति व्याचष्टे '**सर्व**' इति । '**निगूढत्वात्**' इति । तत्र अन्यैरुपायैः सहोक्तत्वेन विविच्य प्रतिभारहितैर्दुर्लभत्वादित्यर्थः । ननु तेषां रहस्यशास्त्राणां रहस्यत्वं किं रूपमस्ति । न हि तत्कारिणः पक्षपातग्रस्ता भवेयुः । सत्यम् । तत्र पक्षपातकथा नास्त्येव, परं तत्र तैः केनापि कारणेन हृद्यं वस्तुजातं सेव्यत्वेन उक्तम् । संसारादुत्थिता हि सर्वथा भोगेभ्यो निवृत्तिपराः प्रवाहागतानपि भोगान् न भुञ्जते । न च

---

1. एतदर्थोपोद्बलके सति—C.

मादिक्लेशप्रयासकलाविरहात् सुघटस्तावदुक्तः, स एवात्र प्रकटतां पर-वादकलङ्कशङ्कापसारणेन नीतः। यत एवं शास्त्रगुरुस्वप्रत्ययसिद्धोऽ-

---

तद्युक्तम्। देहस्थितिं तावद् भोगनिवृत्तेरसम्भवोपहत्वात्। भागतः करणस्य परिहार्यत्वात्।

भुक्त्वा भोगान् भवभ्रान्तिं हित्वा लप्स्ये परं पदम्।

इत्याशंसेह शोभेत शम्भोर्भक्तिमतः परम्॥

इति श्रीभट्टनारायणादिभिराशंसाविषयीकृतत्वाच्च। किञ्च तदुत्थहृदयाह्लादोऽपि तान् प्रबुद्धान् प्रति परानन्दोद्दीपक एव भवेत्। अप्रबुद्धास्तु तच्छ्रवणेन विशेषेण विषयश्वभ्रपतिता एव भविष्यन्तीति तेषु दर्शनायोग्यत्वेन तेषां महारहस्यत्वमुक्तम्। न तु पक्षपाताभिप्रायेण। ये तु मूढाः विषयग्रस्ताः अधिकारं विनैव तानि शास्त्राण्यवगाहन्ते स्ववञ्चनपरेषु तेषु दया कार्या। अशृण्वते तु दूरत एव नमः कार्यम्। ननु यदि तत्र आनन्दमार्गः सुप्राप्योऽस्ति तर्हि सर्वान् प्रति तद्दर्शनं युक्तमेवेति चेन्न, प्रबुद्धान्प्रति तथात्वेऽपि अप्रबुद्धान्प्रति तथात्वाभावात्। यथाश्वभ्रदेशाग्रे स्थितः पुरुषः स्तोकान्तरे श्वभ्रान्तरे स्थितं रत्नं पश्यन् प्रत्यासन्नत्वेऽपि पातभयेन न प्लुत्या गृह्णाति, किन्तु ततोऽवतीर्य पुनः श्वभ्रान्तरमारुह्यैव गृह्णाति, तथा रहस्यशास्त्रेषु सेव्यत्वेन प्रोक्तं वस्तुजातम् आनन्दोद्दीपकत्वेऽपि विषयावटभयात् असमर्थैर्न ग्राह्यम्, किन्तु शमादिद्वारेण तत्प्राप्त्यर्थं यत्नपरैरेव भाव्यम्। निजसमर्थत्वासमर्थत्वयोः स्वात्मैव साक्षीकार्यः, अन्यथा स्ववञ्चकत्वापत्तेः। यस्तु मूर्छाग्रस्तत्वेन स्वपातमपि नानुभवति तदवस्थायां भगवानेव शरणमित्यलं प्रपञ्चेन। ननु तर्हि कथं तेषु रहस्य-शास्त्रेषु स्फुटं तेषां द्रव्याणामविशेषेण नमस्कार्यत्वमुक्तम्। सत्यम्। आनन्दोद्दीपकत्वेन तत्र नमस्कारोऽपि युक्त एव, सेवनं तु अयुक्तमेव, यथा अशुचिजनघटान्तर्गतो गङ्गोदबिन्दुर्नमस्कारयोग्यत्वेऽपि पानाऽयोग्य एवेत्यलं प्रसक्तानुप्रसक्त्या।

सूत्रोक्तं सुघटत्वं साधयितुं हेतुमाह 'बाह्यान्तर' इति। बाह्यचर्या–यज्ञादि, आन्तरचर्या–भावनादि। सुघटः–सुप्राप्यः। **'उच्यते स्म'** इति व्याचष्टे 'उक्तः' इति। ननु तर्हि तैरेवायं मार्गः उक्तः, त्वया किमयं व्यर्थो यत्नः कृत इत्यत आह 'स एव' इति। नत्वपूर्वं किञ्चित्कृतमिति भावः। पूर्वार्धं व्याख्यायोत्तरार्धं व्याचष्टे 'यत एवम्' इति। तत्रापि **'तत्'** इति व्याचष्टे 'यतः'

यमर्थः, तदिति तस्मादत्र प्रमेयपदे[1] परामर्शं विश्रमयन् विश्वकर्तृत्वलक्षण-मैश्वर्यमात्मनो विभाव्य दार्ढ्येन यदा परामृशति तर्हि तत्परामर्शमात्रादेव तावज्जीवन्मुक्तो भगवाञ्छिव एव। यथोक्तं परमेष्ठिपादैः

ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना।
करणेन नास्ति कृत्यं क्वापि भावनयापि वा॥
सकृज्ज्ञाते सुवर्णे किं भावनाकरणादिना।
सर्वथा पितृमात्रादि तुल्यदार्ढ्येन सत्यता॥ ( शि० दृ० )

इत्यादि। तां विभाव्य यद्यनिशमाविशति शरीरप्राणबुद्धिशून्येभ्योऽन्यतमं द्वयं सर्वं वा तत्रैव निमज्जयति, अनवरतं तत्तां तां विभूतिं[2] महाविभूतिपर्यन्तां लभते ॥१६॥

इति। एवम्-उक्तप्रकारेण, 'अत्र' इति व्याचष्टे 'प्रमेयपदे' इति। प्रमेयपदे-निर्णेयवस्तुनि। 'पदं निदधत्' इति व्याचष्टे 'परामर्शं विश्रमयन्' इति। 'भवनकर्तृताम्' इति पदं व्याचष्टे 'विश्वकर्तृत्वलक्षणमैश्वर्यम्' इति। 'आत्मनो विभाव्य' इति निगदव्याख्यातम्। अत्र मध्ये किञ्चिद् युक्तत्वेन स्वयं कथयति 'दार्ढ्येन' इति। 'तत्' शब्दाकांक्षां पूरयितुं 'शिवतामयीम्' इत्यवशिष्टं श्लोकखण्डं व्याचष्टे 'तत्' इति। शिव एव भवतीति शेषः। अत्र शिवदृष्टिवाक्यान्युदाहरति 'यथोक्तम्' इति। 'इत्यादि' इति। 'आदि' शब्देन अन्येषां तत्रस्थवाक्यानां ग्रहणम्। अत्र च प्रथममेव व्याख्या कृतेति न पुनरायस्यते। 'अनिशम्' इति पदस्याभिप्रायं प्रकटयति 'यदि' इति। अनिशम्-सततप्रवाहेण, अन्यतमम्-एकम्, तत्-तदा, तां तां विभूतिम्-सिद्धिनिवहम्। तदुक्तम्:-

अतो बिन्दुरतो नादः रूपमस्मादतो रसः।
प्रवर्तन्तेऽचिरेणैव क्षोभकत्वेन देहिनः॥

इति। ननु तर्हि तस्य अवान्तरे एव स्थितिर्भवेदित्यत आह 'महाविभूतिपर्यन्ताम्' इति। मध्ये क्षुद्रसिद्धिप्रादुर्भावेऽपि पर्यन्ते तस्य परशिवैक्यरूपमहासिद्धिप्राप्तिरेव भविष्यतीति भावः॥ १६॥

1. प्रमेये पदं परामर्शम्—K. S. S.
2. परविभूतिपर्यन्ताम्—K. S. S.

ननु[1] यद्यात्माख्यं वस्तु तदेव तर्हि तस्य प्रत्यभिज्ञानाप्रत्यभिज्ञानयोरविशेषः, न हि बीजमप्रत्यभिज्ञातं सति सहकारिसाकल्ये नाङ्कुरं जनयति, तत् क आत्मप्रत्यभिज्ञाने निर्बन्धः ? उच्यते, द्विविधार्थक्रियास्ति, बाह्या चाङ्कुरादिका, प्रमातृविश्रान्तिचमत्कारसारा च प्रीत्यादिरूपा । तत्राद्या सत्यं प्रत्यभिज्ञानं नापेक्षते, द्वितीया तु तदपेक्षते एव ।

---

अथ सप्तदशस्य श्लोकस्यावतरणिकां करोति 'ननु' इति । तदेव[2]–शिवरूपमेव चेत् तर्हि तस्य–शिवात्मनो वस्तुनः, प्रत्यभिज्ञानाप्रत्यभिज्ञानयोरविशेषः, बीजं प्रमात्रा अप्रत्यभिज्ञातमपि सलिलादिसहकारिसाकल्ये किमङ्कुरं न जनयति । प्रमात्रा अप्रत्यभिज्ञातमपि[3] बीजम् अंकुरं जनयत्येव । तद्वदात्माख्यं वस्तु अप्रत्यभिज्ञातमपि शिवरूपमेव । आत्मा ईश्वर इति प्रत्यभिज्ञाने को निर्बन्धः । अप्रत्यभिज्ञानेऽप्यात्मा ईश्वर एव । परिहारमाह–"उच्यते" इति । अंकुरात्मक जडरूपबीजाद्यर्थक्रिया बाह्या, अहंरूपप्रमातृविश्रान्तिचमत्कारसारा च प्रीत्यादिरूपा, इति द्विविधार्थक्रिया । भवदुक्तं सत्यम्, तत्र–तयोर्मध्ये, आद्या प्रत्यभिज्ञानं नापेक्षते । द्वितीया–प्रीत्यादिरूपार्थक्रिया, प्रत्यभिज्ञानम् अपेक्षते एव ।

---

1. The passage, beginning with 'ननु यद्यात्माख्यम्', is printed in the K. S. S. , as a part of the commentary on verse 16. But it is the introduction to the following verse. We, therefore, begin a fresh paragraph with it.

2. From here the commentary is of an author whose name we do not know. It is not possible to edit it critically at present, because the MS. is very corrupt and full of long gaps. We are not modifying the text of the Vimars'inī in the light of this commentary; nor are we giving in the footnotes the corrupt portions of the commentary, as they are found in the MS.. They are too many. To give an idea of the nature of the modifications, which have been introduced, we are giving one corrupt portion just below.

3. नहि प्रत्यभिज्ञायैवोक्तं बीजम्............C.

इह च 'अहं महेश्वरः' इत्येवंभूतचमत्कारसारा परापरसिद्धिलक्षणा जीवन्मुक्तिविभूतियोगमय्यर्थक्रिया, इतीश्वरप्रत्यभिज्ञानमत्रावश्यापेक्षणीयम् । ननु प्रमातृविश्रान्तिसारार्थक्रिया प्रत्यभिज्ञानेन विना न दृष्टा, सति तत्र दृष्टा, इति कैतदुपलब्धमित्याशङ्क्याह—

**तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके**
**कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा ।**
**लोकस्यैष तथानवेक्षितगुणः स्वात्मापि विश्वेश्वरो**
**नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता ॥ १७ ॥**

---

तदेव दर्शयति 'इह' इति । इह–ईश्वरप्रत्यभिज्ञाख्ये शास्त्रे, 'अहं चैत्रः' 'अहं मैत्रः' सद्गुरुकटाक्षात् 'अहम् ईश्वरः' एव इत्येवं **भूतचमत्कारसारा,** परसिद्धिः–जीवन्मुक्तिः, अपरसिद्धिविभूतिः–सृष्ट्यादिना विश्ववशीकरणक्षमा विभूतिः, इत्येतदुभयलक्षणा, इति अस्यामर्थक्रियायाम् 'यः पुराणागमादिप्रसिद्धः ईश्वरः स एवाहम्' इतीश्वरप्रत्यभिज्ञानमवश्यापेक्षणीयमेव ।

पुनश्चोदयति–प्रमातृविश्रान्तिचमत्कारसारार्थक्रिया प्रत्यभिज्ञानेन विना न दृष्टा प्रत्यभिज्ञाने सति अर्थक्रिया दृष्टा इति क्वैतदुपलब्धम् इत्याशंक्याह '**तैस्तैः**' इति ।

**कान्तः**–अभीष्टो नायकः द्वीपान्तरस्थितः, **तैस्तैः**–दूतीसम्प्रेषणैर्देवताप्रार्थनैः, यस्मिन् कस्मिंश्चिन्महाजनसमुदायरूपे महोत्सवे एकत्र मण्डपे समागत्य सविधे च स्थितोऽपि, चिरकालमाकाङ्क्षितः दैवयोगात् सविधे स्थितोऽपि, रूपादिगुणसंपदा दूतीमुखात् यथापूर्वं श्रुतः, '**एवम्**' इति तथा न परिज्ञातः–स्वसमीपेतरजनसमानतया स एवायमित्यपरिज्ञातः, रन्तुं यथा न अलम्, **लोकस्य**–प्रमातृवर्गस्य, **एषः**–आत्मा, **तथानवेक्षितगुणः**–अन्तःस्थितत्वेऽपि अप्रत्यभिज्ञातेश्वरलक्षणः अप्रत्यभिज्ञातात्मनिजवैभवः यः विश्वकर्तृत्वज्ञत्वपूर्णत्वनित्यत्वविश्वव्यापकत्वादिगुणः अहमितिरूपः **स्वात्मा विश्वेश्वरः,** लोकस्य—जनस्य अहमिति प्रथमानोऽप्यात्मा 'अहम् ईश्वरः' इति प्रत्यभिज्ञानात्मकनिजवैभवाय नालम्– समर्थो न भवति, **तत्**–तस्मात्, **इयम्**–सर्वदाप्रकाशमानस्वानुभवसिद्धा, 'स एवेश्वरोऽहम्'

यदा नायकगुणसंश्रवणप्रवृद्धानुरागा कामिनी तद्दर्शनमेव परमुपादेयमाकाङ्क्षन्ती दिवानिशमवशहृदया देवतोपयाचितानि दूतीसंप्रेषणानि मदनलेखद्वारकात्मावस्थानिवेदनानि कुर्वाणा विरहक्षामीभवद्गात्रलतिका तिष्ठति, तदा तदुपयाचितवशात् अशङ्कितमेव सन्निधवर्तिनि प्रियतमेऽवलोकिते तैस्तैरुत्कर्षविशेषैः परामर्शपदवीमगच्छद्भिर्जनसाधारणतामापादिते संपन्नमपि प्रियतमावलोकनं न हृदयं पूर्णीकरोति; तथा स्वात्मनि विश्वेश्वरे सततं निर्भासमानेऽपि तन्निर्भासनं न हृदयस्य पूर्णतामाधत्ते; यतः सोऽप्यात्मा विश्वज्ञत्वकर्तृत्वाद्यप्रतिहतस्वशक्तिलक्षणपारमैश्वर्योत्कर्षयोगेन न परामृष्टः—इति भासमानघटादितुल्यवृत्तान्तो जातः। यदा तु दूतीवचनाद्वा तल्लक्षणाभिज्ञानाद्वोपायान्तराद्वा तानुत्कर्षान् हृदयङ्गमीकरणेनामृशति, तदा तत्क्षणमद्भुतफुल्लन्यायेनैव तावत् कामपि पूर्णतामभ्येति, परिभोगाभ्यासरसे तु विश्रान्त्यन्तराण्यपि लभते; तद्वदात्मनि गुरुवचनाज्ज्ञानक्रियालक्षणशक्त्यभिज्ञानादेर्वा यदा पारमैश्वर्योत्कर्षहृदयङ्गमीभावो जायते,

---

इति **प्रत्यभिज्ञा उदिता**—कृपागृहीतमानुषविग्रहेण परमेश्वरेणोपदिष्टा।

तदा तदुपयाचितस्य-तन्व्याः उपयाचितस्य वशात्, अविचारितमेव प्रियतमे सन्निधवर्तिनि अवलोकिते तस्य कान्तस्य रूपादिगुणवर्गातिशयैः 'स एवायम्' इति हृदयपरामर्शपदवीमगच्छद्भिः स्वसमीपस्थितजनसाधारणताम् आपादिते, सम्पन्नमपि–प्राप्तमपि प्रियतमस्यावलोकनं तस्याः तन्व्याः हृदयं न पूर्णीकरोति। जनस्य स्वात्मनि विश्वेश्वरे सततं निर्भासमानेऽपि तन्निर्भासनम्—स्वात्मनो विश्वेश्वरात्मनिर्भासनम्, हृदयस्य न पूर्णतामाधत्ते, यतः, तस्मात् कान्तवत् सोऽपि जनस्य स्वात्मा–जनस्य 'अहम्' इति प्रतीतः सोऽपि स्वात्मा, विश्वज्ञत्वाद्यप्रतिहतशक्तिलक्षणपारमेश्वरोत्कर्षयोगेन न परामृष्टः इति भासमानघटादितुल्यवृत्तान्तो जातः, स्वयं चेतनोऽपि स्वाऽप्रत्यभिज्ञानात् चेत्यतुल्यो जात इत्यर्थः। अद्भुतफुल्लन्यायेन तेनामर्शेन कामपि वाचामगोचरां पूर्णताम् अभ्येति। कान्तायाः स्वकान्तप्रत्यभिज्ञानवत् आदिगुरुवचनात् संपन्नात् ईश्वरशक्तिप्रत्यभिज्ञानादेव विश्वमयविश्वोत्तीर्णः परमेश्वरोऽहमिति उत्कर्षो जायते। तदा–तस्मिन्नवसरे महानन्दात्मिका

तदा तत्क्षणमेव पूर्णतात्मिका जीवन्मुक्तिः; समावेशाभ्यासरसे तु विभूतिलाभः–इति तस्य प्रत्यभिज्ञैव परापरसिद्धिप्रदायिनी भवति ॥१७॥

सर्वोपकारकं महाफलमिदं शास्त्रं प्रसिद्धान्वययोगेन नामधेयप्रसिद्ध्या च तदुत्कर्षस्मरणद्वारजनितसंभावनाप्रत्ययलक्षणप्रवर्तकसंवेदनया जनं प्रवर्तयितुं पितुर्नाम्ना चोपसंहारं दर्शयति

जनस्यायत्नसिद्ध्यर्थमुदयाकरसूनुना ।
ईश्वरप्रत्यभिज्ञेयमुत्पलेनोपपादिता ॥ १८ ॥

---

जीवन्मुक्तिः । प्रत्यभिज्ञातस्वात्ममहेश्वरसमावेशाभ्यासरसे तु शिवादिक्षित्यन्तविश्ववशीकरणक्षमविभूतिलाभ इति तस्य स्वात्मन 'ईश्वरोऽहम्' इति प्रत्यभिज्ञैव जीवन्मुक्तिविभूतिरूपसिद्धिद्वयप्रदायिनी भवति । यथोक्तम्ः—

अवस्थितमवस्थितं न पुनरत्र चित्रं महान्
इदं प्रथमिकारसः स खलु देशिकापाङ्गभूः ।
प्रिया न किमियं प्रियो न किमयं किमेतावता
न चेदयमुदारधीरुचितकाकुरेको जनः ॥

इति ॥ १७ ॥

नात्र कश्चिन्नियम इति दर्शयति । प्रथमसूत्रव्याख्यानोक्तनीत्या 'सर्ववर्णोपकारकम्' इत्यनेन वाक्येन एतत्सूत्रगतस्य **'जनस्य'** इति पदस्य अर्थगत्या प्रायेण व्याख्या दर्शिता । **महाफलम्**–जीवन्मुक्तिविभूत्यात्मकपरापरसिद्धिरूपमहाफलप्रदम् इत्यनेन सूत्रगतस्य **'अयत्नसिद्ध्यर्थम्'** इति पदस्य व्याख्या अर्थगत्या दर्शिता । **'इदम् शास्त्रम्'** इत्यनेन पदद्वयेन **'इयम् ईश्वरप्रत्यभिज्ञा'** इति पदद्वयस्य व्याख्या दर्शिता । **'प्रसिद्धान्वययोगेन नामधेयप्रसिद्ध्या'** इत्यनेन पदद्वयेन **'उदयाकरसूनुना उत्पलेन'** इति पदद्वयस्य व्याख्या दर्शिता । किञ्च 'उदयाकरसूनुना' इत्यन्वयप्रसिद्ध्या 'उत्पलेन' इति स्वनामप्रसिद्ध्या स्वान्वयस्वनामोत्कर्षस्मरणद्वारजनितस्य 'इदमित्थमेव भवति नान्यथा' इति संभावनात्मकविश्वासलक्षणस्य स्वोक्तं शास्त्रं प्रति प्रवर्तकसंवेदनस्य योजनात्, **जनं प्रवर्तयितुम्**–संवेदनं जने, योज्यजनं शास्त्रे प्रवर्तयितुम्, उपसंहरति **'जनस्य'** इति ।

यस्य कस्यचिज्जन्तोरिति नात्र जात्याद्यपेक्षा काचित्–इति सर्वोपकारित्वमुक्तम्। अयत्नेन सिद्धिः परापररूपा यथा स्यात्–इति महाफलत्त्वम्। उदयाकरपुत्रः श्रीमानुत्पलदेवोऽस्मत्परमगुरुरिदं शास्त्रमकार्षीत्–इति तत्प्रसिद्ध्या जनः प्रवर्तते–इति प्रवर्तनाद्वारेण सोऽनुगृहीतो भवति–इत्युभयनामनिर्देशः। इयमिति हृदयङ्गमतामुपपत्तिशतैरानीता। इति शिवम्॥ १८॥ आदितः १९०॥

एषाभिनवगुप्तेन सूत्रार्थप्रविमर्शिनी।
रचिता प्रत्यभिज्ञायां लघ्वी वृत्तिरभङ्गुरा॥

---

'यस्य कस्यचित् जायमानस्य जन्तोः' इत्यादिना ब्राह्मणादिवर्णापेक्षा 'आदि' शब्देन तत्राप्यधिकार्यपेक्षा काचिन्नास्तीति अस्य शास्त्रस्य सर्वोपकारित्वमुक्तम्। एतच्छास्त्रश्रवणेन परापररूपा सिद्धिरयत्नेन स्यात् इति महाफलत्वं दर्शितम्। प्रसिद्ध्या जनः प्रवर्त्यते इति प्रवर्तनाद्वारेण च जनोऽनुगृहीतो भवतीति उभयनामनिर्देशः। 'इयम्' इति स्वप्रत्ययविषयत्वसूचकेन पदेन जनस्य उपपत्तिशतैः हृदयङ्गमत्वमानीता श्रीमदीश्वरप्रत्यभिज्ञेयम्। इति शिवम्। शिवात् प्रसृतत्वात् जनस्य शिवप्राप्तिहेतुत्वात् स्वयं शिवरूपत्वाच्चेति शिवम्। जीवन्मुक्तिविभूत्यात्मकपरापरसिद्धिद्वयप्रदं मङ्गलम्॥ १८॥

'एषा' इति, स्वानुभवसिद्धा, किञ्च 'एषा' इति जनस्य स्वानुभवसिद्धत्वेन दृश्यमाना, श्रीमदभिनवगुप्तनामधेयेनाचार्येण 'कथञ्चिदासाद्य' इत्यादि 'उत्पलेनोपपादिता' इत्यन्तसूत्रार्थस्य प्रकर्षेण विमर्शिनी–सूत्रार्थं निश्शेषेण द्योतयन्ती, प्रत्यभिज्ञाख्ये शास्त्रे लघ्वी–शास्त्रार्थमशेषं संक्षेपेण दर्शयन्ती, अभङ्गुरा–बौद्धादिसिद्धान्तैः भङ्क्तुमशक्या, वृत्तिः—विस्पष्टत्वेन प्रकाशिका पदवी,

रचिता साभिगुप्तं यत् पुराणं च प्रसिद्धिमत्।
हृदयं तत्परोल्लासैः स्वयं स्फूर्जत्यनुत्तरम्॥

इति स्वोक्तनीत्या अनुत्तरात्मकस्वहृदयस्फूर्जनेन रचिता–स्फारिता। 'लघ्वी' इत्यनेन पदेन पुनरपि स्वमुखेन प्रत्यभिज्ञाशास्त्रं प्रति बृहती काचिद् विमर्शिनी भविष्यतीति सूचितम्।

वाक्यप्रमाणपदतत्त्वसदागमार्थाः
स्वात्मोपयोगमुपयान्त्यमुतः स्वशास्त्रात् ।
भौमान् रसाञ्जलमयांश्च न सस्यपुष्टौ
मुक्त्वार्कमेकमिह योजयितुं क्षमोऽन्यः ॥
आत्मानमनभिज्ञाय विवेक्तुं योऽन्यदिच्छति ।
तेन भौतेन किं वाच्यं प्रश्नेऽस्मिन्को भवानिति ॥

इति श्रीमदाचार्योत्पलदेवविरचितायामीश्वरप्रत्यभिज्ञायां
श्रीमदाचार्याभिनवगुप्तविरचितविमर्शिन्याख्य-
टीकोपेतायां तत्त्वसङ्ग्रहाधिकारः ।
समाप्ता श्रीमदीश्वरप्रत्यभिज्ञा ॥

---

वाक्यम—मीमांसाशास्त्रम्, प्रमाणम्—न्यायशास्त्रम्, सदागमाः—शिवप्रोक्ताः आगमाः, अमुतः–प्रत्यभिज्ञाख्यात्, सुशास्त्रात्–शोभनात् सर्वोत्तरात् अमुतः स्वानुभवसिद्धात् शास्त्रात्, स्वात्मोपयोगम्–महेश्वररूपस्वात्मपरामर्शात्मकमुपयोगम्–प्रयोजनम् उपयान्ति–समीपे प्राप्नुवन्ति इति, अनेन शास्त्रेण विना वाक्यादीनि शास्त्राणि केवलं स्वयमेव स्वात्मोपयोगं नायान्ति। तत्र दृष्टान्तमाह भौमान्–भूमिगतान् रसान् जलमयांश्च ग्रीष्मादेव क्षीणान् स्वमरीचिचक्रान्तर्निवेश्य वर्षिण्यादिमरीचिभिः सस्यपुष्ट्यै योजयितुम् अर्कं बिना कोऽन्यः क्षमः।

'अहम्' इति प्रथमानम् आत्मानम्–ज्ञानक्रियात्मकशक्तिप्रत्यभिज्ञानेनेश्वरात्मकम्, अनभिज्ञाय, अन्यत्—वाक्यप्रमाणादिशास्त्रम्, विवेक्तुमिच्छति, तेन भूताविष्टसमानेन स्वरूपप्रच्छादनात्मकमायाभूताविष्टेन 'को भवान्' इति प्रश्ने किं वाच्यम्, न किमपीत्यर्थः। यथा चैत्रो भूताविष्टः स्वपित्रादिना संकेतितं स्वनामधेयं न जानाति तद्वन्महामायाभूताविष्टः आत्मन आदिसिद्धं महेश्वरत्वं न जानातीत्यर्थः ॥

इति प्रत्यभिज्ञासूत्रविमर्शिनीव्याख्या समाप्ता ॥

---

## ईश्वरप्रत्यभिज्ञाकारिकाणां सूची

## पृथक्कृत्य व्याख्यातानामीश्वरप्रत्यभिज्ञाकारिकाभागानां सूची



## ईश्वरप्रत्यभिज्ञाविमर्शिन्युपन्यस्तानां मतानां सूची

## ईश्वरप्रत्यभिज्ञाविमर्शिन्युपन्यस्तानां ग्रन्थकाराणां सूची



## ईश्वरप्रत्यभिज्ञाविमर्शिन्युपन्यस्तानां ग्रन्थादीनां सूची



## ईश्वरप्रत्यभिज्ञाविमर्शिन्युपन्यस्तानां प्रमाणवाक्यानां सूची

## ईश्वरप्रत्यभिज्ञाविमर्शिनीस्थपारिभाषिकशब्दानां सूची

